Government Oriental Series—Class A, No. 4.

# KĀVYĀDARŚA

OF

## DAṆḌIN

Edited with an Original Commentary

BY

Vidyābhūṣaṇa Pandit Rangacharya Raddi Shastri



Bhandarkar Oriental Research Institute, Poona

1938

Government Oriental Series--Class A, No. 4

# KĀVYĀDARŚA

OF

## DAṆḌIN

Edited with an Original Commentary

By

**Vidyābhūṣana Pandit Rangacharya Raddi Shastri.**

Bhandarkar Oriental Research Institute

1938

राजकीया प्राच्यग्रन्थश्रेणिः-अनुक्रमाङ्कः 'ए' ४

कविप्रवरेणाचार्यदण्डिना विरचितः

# काव्यादर्शः

विद्याभूषणेन वैराजक्षेत्रवासिना रङ्गीकुलावतंसेन बालकृष्णाचार्यतनुजेन
पण्डितरङ्गाचार्यशास्त्रिणा विरचितया प्रभाख्यया
व्याख्यया समेतः

पुण्यपत्तनस्थ—

प्राच्यविद्यासंशोधनमन्दिराधिकृतैः

भाण्डारकरप्राच्यविद्यामन्दिरमुद्रणालये मुद्रयित्वा प्राकाश्यं नीतः

१८६० शकवत्सराः १९३८ खिस्ताब्दाः

मूल्यं सार्धरूपकचतुष्टयम्

# किमपि प्रस्तुतं निवेदनीयम्।

कतिपयसंवत्सरेभ्यः प्राक् प्राच्यविद्यासंशोधनमन्दिरकार्यावेक्षकैरनया संस्थया पूर्वं मुद्रितस्य भवदीयटीकासनाथस्याचार्यदण्डिनः काव्यादर्शस्य पुनर्मुद्रणमपेक्ष्यते तद्भवद्भिष्टीकासनाथं तत्संशोध्य मुद्रणार्हं विधाय च प्रेष्यतामिति समादिश्यत। एतदादेशानुरोधेन सटीकं काव्यादर्शं संशोध्य प्राहिणवम्। ततः केनाप्यनिर्वचनीयेनान्तरायेणायं मुद्रणविचारो विरत इवासीत्। ततो गच्छति काले परमेशकृपया कार्यावेक्षकाणां च न्यायबुद्ध्या पूर्वनिदेशानुरोधेन तन्मुद्रणं समुपक्रान्तं समाप्तं चासीदिति निवेदयन्तः प्रमोदामहे।

तत्र प्रथमावृत्तौ मूलेऽन्तरान्तरा टीकाविपरीताः पाठाः कथञ्चिन्निवेशिता आसन्। ते संशोध्य टीकानुकूलास्तत्र तत्र संयोजिताः। अन्ते मूलश्लोकार्धसूची तथा टीकास्थश्लोकसूची शुद्धिपत्रं च निवेशितम्। अन्यच्च काव्यादर्शस्य पुस्तकपञ्चकं सङ्गृह्य तत्रत्याः पाठाः प्रतिपत्रमधस्तान्न्यविश्यन्त। पुस्तकपञ्चकस्वरूपं त्वेवं वर्तते।

१. तत्र तावत्प्रथमं ताडपत्रपुस्तकविषये किञ्चिन्निवेदयामः। इदं पुस्तकं ख्रिस्त १९२५।२६ संवत्सरे मद्रपुरविभागतः प्राच्यसंशोधनमन्दिरसंस्थयालम्भि। इदं मूलमात्रम्। पत्रसंख्या चैकत्रिंशत्। पत्रस्य दैर्घ्यं ११॥ अङ्गुलपरिमितम्। आयामश्च १॥ अङ्गुलपरिमितः। प्रतिपत्रं प्रायो नव पङ्क्तयः। प्रतिपङ्क्ति प्रायः पञ्चाशदक्षराणि। पत्रस्य पार्श्वद्वयेऽपि लेखनम्। लिपिः केरली टङ्कैरुत्कीर्णा च। सर्वं पुस्तकं शुद्धमत्रुटितं च। अत्र चत्वारः परिच्छेदाः। १. मार्गविभागः, २. अर्थालङ्कारविभागः, ३. यमकप्रहेलिकाप्रकारः, ४ गुणदोषविभागश्चेति तेषामभिधानानि। पुस्तके लेखनसमयनिर्देशो नास्ति। अत्रत्यपाठान्तरसङ्ग्रहविषयेऽस्माकं केरललिपिपरिचयाभावात्तन्निष्णाता व्याकरणे कृतपरिश्रमाः कृष्णमूर्तिशर्माणस्तत्कर्मणि नियोजिताः। तैश्च तत्सर्वं पारितम्। अत्रत्याः पाठभेदा 'अ' संज्ञया तत्र तत्र निवेशिताः सन्ति।

२. द्वितीयं पुस्तकं ख्रिस्त १८९० संवत्सरे 'ओ भाट्लिंग' संज्ञकमहाशयेन शार्मण्यदेशे मुद्रितम्। स्वीयजर्मनभाषया विपरिणामितं च। एतत्प्रायः शुद्धं परिच्छेदत्रयात्मकं च। तत्र प्रथमे परिच्छेदे १०५ श्लोकाः द्वितीये ३६८ श्लोकास्तृतीये १८७ श्लोका वर्तन्ते। अत्रत्याः पाठभेदा 'ब' संज्ञया निर्दिष्टाः। मुद्रितपुस्तकविषये नाधिकतरं निवेद्यमपेक्ष्यते।

६ तृतीयं पुस्तकं मद्रपुरप्रधानपाठशालास्थाध्यापकैः 'एम् रङ्गाचार्यै'र्ब्रह्मवादिमुद्रणालये ख्रिस्त १९१० संवत्सरे मुद्रितम्। एतत्पुस्तकं टीकाद्वयपरिष्कृतम्। तत्र प्रथमा तरुणवाचस्पतिग्रथिता द्वितीयाविज्ञातकर्तृका हृदयङ्गमाभिधाना। यद्यपि टीकाद्वयं प्राचीनं तथापि साहित्यशास्त्रप्रविविक्षूणां नातीवोपयुक्तं न वा शास्त्रार्थविवेचनप्रगल्भम्। एतत्पुस्तकपाठभेदाः 'क' संज्ञया सङ्गृहीताः।

४ चतुर्थं पुस्तकं प्रेमचन्द्रमहोदयैः स्वोपज्ञमालिन्यप्रोञ्छनीटीकया सनाथं

वङ्गप्रदेशे खिस्त १८६३ संवत्सरे मुद्रितम् । प्रेमचन्द्रमहाशयस्य टीका शास्त्रीय-विषयविवेचने प्रगल्भा काव्यादर्शमर्मजिज्ञासूनां विशेषहितकारिणी च । एभिर्महाशयैः सहास्माकमन्तरान्तरा वैमत्येऽपि मूलावगमायेयं टीकातीवोपकर्त्रीति सामोदं निवेदयामः । पाठभेदनिर्देशे एतत्पुस्तकं 'ड' संज्ञया व्यवहृतम् ।

५ पञ्चमं पुस्तकं श्रीजीवानन्दविद्यासागरभट्टाचार्यैः खिस्त १८९० तमे संवत्सरे कालिकतायां नारायणसंज्ञकमुद्रणालये मुद्रितमस्ति । अत्र श्रीजीवानन्दमहोदयैः स्वरचितया टीकया समुद्भासितः काव्यादर्शो दृश्यते । इयं टीका पदार्थावबोधिनी बालानामुपयुक्ता वर्तते । एतत्पुस्तकं पाठभेदविषये 'प' संज्ञया निर्दिष्टम् ।

एवं पुस्तकपञ्चकं सङ्गृह्य परिश्रमेण पाठभेदान् विविच्य तत्र तत्र पत्रेऽधःप्रदेशे ते निवेशिताः । प्रथमावृत्तौ पाठभेदा अन्यैर्महोदयैर्विवेचिता आसन् । तेषां साधनपुस्तकानामनभिज्ञानादयं विषयः सर्वो नूतन एवास्यां द्वितीयावृत्तौ विहितोऽस्ति । टीकाविरचनसमये 'श्रुतानुपालिनी- मालिन्यप्रोञ्छनी- इत्यादयो बह्वष्टीकाः परिशीलिता आसदन्नतस्तेषां कर्तारः धन्यवादमर्हन्तीति निवेदयन्तः प्रमोदामहे ।

अन्तेच स्वादिष्टकर्तव्याचरणेन वाचकमनांसि समाकर्षामः । तत्खल्वतेत्कर्तव्यं यत् पाठभेदविवेचने 'एम्. ए.' उपधाधारिभिस्ताडपत्रीकरोपाह्वैः श्रीश्रीनिवासरायैः सौहार्दपूर्वकं सहाय्यमकारि । तथाचास्मज्ज्येष्ठतनयेनायुष्मता 'बी. ए. बी.टी.'इत्युपपदधारिणा लक्ष्मीकान्तशर्मणा शोध्यपत्रसंशोधनविषये परिश्रमाअङ्गीकृताः । 'सर परशुरामभाऊकॉलेजसंज्ञकपुण्यपत्तनीयप्रधानाङ्ग्लपाठशालाप्रधानाध्यापकैः करमरकरोपाह्वैस्तथा फर्ग्युसनकालेजसंज्ञकप्रधानाङ्ग्लपाठशालास्थसंस्कृतविषयप्राध्यापकैः 'पराञ्जपे' इत्युपाह्वैः समीक्षणाय विविधग्रन्थावितरणेन समुपकृताः स्मः । प्राच्यविद्यासंशोधनमन्दिरकार्यावेक्षकैः सुकथनकरमहोदयैर्बहुविधकार्यव्यत्ययसमये समुचितसौहार्दप्रकटनेनैतत्कार्यसम्पादनाय सज्जीकृताः स्मः अत एतेषां विश्वेषामुपकृतिं साहाय्यं वा महता सन्तोषेणाभिनन्दामः ।

एवं बहुविधसाहाय्यलाभेऽपि स्वयंकृतपरिश्रमेऽपि च यत्रकुत्रचिदशुद्धिरवशिष्टा चेत्तन्निदानमिदानीमनुभूयमानं प्रबलं शरीरास्वास्थ्यं मानुषसुलभं वार्धक्यं च। तेन च दृष्टिदोषो मतिवैकल्यं स्वाभाविकानिति जानीतेति सप्रश्रयं साहित्यकोविदान्निवेद्य दोषनिवेदनेनानुग्राह्योऽयं जन इति प्रार्थयामः । अन्ते च सृष्ट्याद्यष्टकर्तृकं चराचरनियामकं रमानायकं सप्रणयं साञ्जलिबन्धं प्रणम्य महीयतां साहित्यशास्त्रं प्रमोदन्तां साहित्यकोविदा विजयन्तामाचार्यदण्डिमहोदया इत्याशास्य सर्वेषां परं मङ्गलं सम्प्रार्थयते ।

वाई रङ्गाचार्यः ।

अधुना शरीरास्वास्थ्येन परमावश्यकमप्युपोद्धातं विलिखितुं न प्रभवामः । तथापि शरीरस्वास्थ्यानन्तरमचिरादेव तं विरचयामः । तत्र कविकालविचारः, साहित्यशास्त्रेतिहासो ग्रन्थस्थविषयाविवेचनं भामहदण्डिनोः पौर्वापर्यविचार इत्यादयो विषया विवेचनीया भवेयुः ।

---

# विषयानुक्रमणिका

# अथ श्रीमदाचार्यदण्डिनः कृतौ काव्यादर्शे
## प्रथमः परिच्छेदः

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥

कदम्बतरुमण्डिते विहगवृन्दसंसेविते
कलिन्दतनयाश्रिते मुरलिकारवान्दोलिते ।
कदम्बितगवावृते बुधनुते च वृन्दावने
लसन्तमतुलद्युतिं सुरवरं मुकुन्दं नुमः ॥ १ ॥

श्रुतिगम्यां भावहृद्यां निरवद्यां रसात्मिकाम् ।
शुद्धानन्दां चित्स्वरूपां ब्राह्मीं देवीं स्तुमः सदा ॥ २ ॥
बिम्बग्राहितया स्तुवन्ति विबुधा आदर्शरत्नं यथा
काव्यादर्शममुं तथा सहृदयाः काव्यार्थसंग्राहतः ।
तत्राद्यस्य हिताय कापि विमला वर्वर्ति भानोः प्रभा
तद्वच्चास्य विकासनाय भवताट्टीका ममेयं प्रभा ॥ ३ ॥

इह खलु विविधशास्त्रप्रवीणः सहृदयधुरीणः कविप्रवर आचार्यो दण्डी काव्यलक्षणात्मकमिमं प्रबन्धमारभमाणः — मङ्गलादीनि मङ्गलमध्यानि मङ्गला-१५न्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ता यथा स्युः—। [म० भा० १. १. ३] इति शिष्टानुशिष्टं सदाचारमनुसंदधानो ग्रन्थारम्भे समुचितेष्टदेवतां सरस्वतीं प्रार्थयते—**चतुर्मुखेति** । सरस्वती १८सरः सर्वविषयेषु प्रसरणं गतिरस्या अस्तीति व्युत्पत्त्या सरस्वती वागधिष्ठात्री देवता । मम मानसे अन्तःकरणे सरोविशेषे च । नित्यं सर्वदा । रमतां विहरताम् । सर्वदा मम चेतसि आविर्भूय विलसत्वित्यर्थः । सरस्वत्या माहात्म्योद्भाव-

---

१ दीर्घं, कपा, चपा. २ सर्वशुभ्रा, कपा.

**पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च ।**
**यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥ २ ॥**

२१नाय तां विशिनष्टि—**चतुर्मुखेति** । चत्वारि मुखानि यस्य स चतुर्मुखो ब्रह्मा तस्य मुखान्येवाम्भोजानि तेषां वनं समूहः तत्र । हंसवधूर्हंसीव । हंसी यथा कमलवने विहरति तथा चतुर्मुखमुखाम्भोजेषु सानन्दं विहरणशीला । अनेन सरस्वत्या २४वेदस्वरूपत्वं तेन च पावित्र्यं सर्वार्थज्ञातृत्वं च सूचितम् । तस्याः स्वरूपावगमायाह--सर्वेति । सर्वतः स्वरूपतोऽर्थतश्च शुक्ला श्वेतवर्णा निर्दोषा च । पदपदांशवाक्यार्थरसगतदोषरहितेत्यर्थः । तथा चास्याः श्वेतस्वरूपवर्णनं ब्रह्मवैवर्ते—

आविर्बभूव तत्पश्चान्मुखतः परमात्मनः ।
एका देवी शुक्लवर्णा वीणापुस्तकधारिणी ॥
कोटिपूर्णेन्दुशोभाढ्या शरत्पङ्कजलोचना । इति ।

३०केचित्तु सरस्वती मानसे रमतामित्यस्य वाक्यस्य मम सरस्वती शिष्याणां मानसे रमतामित्यध्याहारपूर्वकमर्थं निराहुः । परं तादृशाध्याहारस्यानुचितत्वात् तन्न रुचिरम् । सर्वशुक्लेत्यत्र सति बाधके संकोचस्यादरणीयत्वेन सर्वशब्दस्य कर३३चरणतलाधरनयनादिभिन्नाङ्गत्वपरत्वमुन्नेयमिति प्रेमचन्द्रतर्कवागीशाः । हंसी मानससरसि कमलवने च रमत इति प्रथितमेव । काव्यलक्षणप्रपञ्चात्मकेऽस्मिन् ग्रन्थ आदावेव काव्यजीवातुभूतायाः सरस्वत्या आवाहनमतीव समुचितं मनोहरं ३६चेति ज्ञेयम् । अत्र सरस्वत्यां हंसवधूत्वारोपं प्रति चतुर्मुखे अम्भोजवनत्वारोपो हेतुरिति परंपरितरूपकमिदम् । मुखमुखेति छेकानुप्रासश्च ।—नीलोत्पलदलश्यामां विज्जिकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ – एतद्विज्जि३९कापद्यममुं श्लोकं विचिन्त्यैवेति स्पष्टम् ॥ १ ॥

प्रतिपाद्यविषयं विवक्षुराह—**पूर्वशास्त्राणीति** । पूर्वेषां शिलालि-भरतप्रभृतीनां शास्त्राणि नाट्यसूत्रादीनि । संहृत्य समुच्चित्य संक्षिप्येति यावत् । तानि सर्वाणि ३संगृह्येति भावः । तथा प्रयोगान् व्यासवाल्मीकिप्रभृतिमहाकविप्रबन्धेषु स्थितान् । उपलक्ष्य सूक्ष्मेक्षिकया निरूप्य । अनेन न केवलोऽयं प्रबन्धः शास्त्रनियमानुसारी अपि तु तत्प्रयोजनीभूतकविप्रयोगानुसारीति सूचितम् । यथासामर्थ्यं स्वसामर्थ्या-

---

१ उपलभ्य ब, कपा.

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।**

**वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥ ३ ॥**

६नुरूपम् । विनयोक्तिरेषा । अस्माभिर्मया दण्डिना । अस्मदो द्वयोश्च इति बहुवचनम् । काव्यलक्षणम् काव्यस्य लक्षणम् । लक्ष्यते ज्ञायते स्वरूपमनेनेति लक्षणम् । इतरव्यवच्छेदकः काव्यपर्याप्तवृत्तिरसामान्यो धर्मविशेष इत्यर्थः । क्रियते—इष्टार्थ-९व्यवच्छिन्ना पदावलिः— [ १. १० ] इत्यादिना प्रतिपाद्यते । अनेनास्य ग्रन्थस्य प्रतिपाद्यं दर्शितम् । प्रयोजनं चाग्रे [ १. ९ ] स्फुटीभविष्यति । प्रतिपाद्यप्रतिपादकयोः संबन्धस्तु ज्ञाप्यज्ञापकभावः । अधिकारी व्युत्पन्नः सहृदयः । एतेषां १२हि विषयादिचतुर्णां ग्रन्थारम्भे कथनमवश्यमपेक्ष्यते । यतः——

ज्ञातार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते ।

ग्रन्थादौ तेन वक्तव्यः संबन्धः सप्रयोजनः ॥ इति ॥

१५अग्रे निरूप्यमाणानां गुणदोषादीनां तु प्रसङ्गानुरोधेनाङ्गतया संग्रहान्न तदर्थं प्रतिज्ञापेक्ष्यते ॥ २ ॥

ग्रन्थस्य प्रतिपाद्यमुक्त्वा संप्रति व्यवहारसिद्धिरूपं तत्प्रयोजनमन्वयव्यतिरेकाभ्यां दर्शयति——**इह शिष्टेति** । इह विचित्रमनोहरेस्मिन् संसारे । शिष्टाः ३शब्दशास्त्रप्रवीणाः तैः पाणिनिवररुचिपतञ्जलिप्रभृतिभिरनुशिष्टाः प्रकृतिप्रत्ययविभागादिभिर्व्युत्पादिताः साध्वसाधुज्ञापनेन शासिता वा तासां संस्कृतप्राकृतानाम् । तथा शिष्टानाम् एतद्द्वयावशिष्टानां प्राकृतजनव्यवहारास्पदानां देशीनामित्यर्थः । ६इत्थं संस्कृतप्राकृतदेशीभेदेन त्रिविधानां वाचामेव प्रसादेनानुग्रहेण । सर्वथा सर्वप्रकारेण । लोकयात्रा लोकानां देवादिपामरान्तानां प्राणिनां यात्रा व्यवहारः । प्रवर्तते प्रकर्षेण चलति ।

९तदुक्तं हरिणा——

न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

( वाक्यपदीय १–१२४ )

तत्रोत्तमानां संस्कृतभाषया मध्यमानां प्राकृतभाषया अवराणां च देशीभाषयेति ज्ञेयम् ॥ ३ ॥

**इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते ॥ ४ ॥**
**आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।**
**तेषामसंनिधानेपि न स्वयं पश्य नश्यति ॥ ५ ॥**

वाग्व्यवहारस्यान्वयमुखेन लोकयात्रासाधनतामुपपाद्येदानीं व्यतिरेकमुखेन तामेव द्रढयति--**इदमन्धमिति** । शब्द आह्वयोभिधानं यस्य तच्छब्दाह्वयं ज्योतिः ३अर्थप्रकाशकत्वाज्ज्योतीरूपम् । --वाचेवायं ज्योतिषा आस्ते-- इति श्रुतिः । ( बृ. ६--३ ) आसंसारात् संसरत्यनेनेति संसारः सृष्टिः । सृष्टिकालमारभ्य तदन्तपर्यन्तमित्यर्थः । अभिव्यापकार्थकेनाङाव्ययीभावः । यदि न दीप्यते न प्रकाशेत । तर्हि ६इदं भुवनत्रयं स्वर्गमृत्युपातालरूपं विश्वं लक्षणया तदन्तर्गतं प्राणिजातम् । कृत्स्नं निरवशेषम् । अन्धंतमो गाढान्धकारव्याप्तमिव जायेत । ध्वान्ते गाढेन्धतमसम् इत्यमरः । यथा हि सूर्यादिज्योतिषामभावे तमसावस्कन्दिताः पदार्था विलुप्ता इव ९भवन्ति तथा वाचामभावे सर्वेप्यैहिकपारलौकिका व्यवहारा विलुप्ता भवेयुरित्यर्थः । तदुक्तं सुबन्धुना:—

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥ (वासवदत्ता १) ॥

इति ॥ ४ ॥

इत्थं वाचां सामान्यतो व्यवहारोपयोगित्वं प्रदर्श्य तद्विशेषीभूतस्य गुणालंकारादिपरिष्कृतस्य काव्यसंज्ञकस्य वाङ्मयस्य माहात्म्यमिदानीं दर्शयति-- ३**आदिराजेति** । आदिभूता ये राजानो मनुपृथुप्रभृतयः । अथवा आदिराजाः प्राक्कालीना राजान इक्ष्वाकुमान्धातृदिलीपप्रभृतयः । तेषां यशोरूपं बिम्बं कर्तृ । वाङ्मयं सत्कविप्रतिभाप्रसूतं काव्यम् । तद्रूपमादर्शं दर्पणं प्राप्य तत्र प्रतिबिम्बितं ६भूत्वा । तेषामादिनृपाणाम् । असंनिधानेपि असंनिहितेष्वपि तेषु राजसु । स्वयं न नश्यति न विच्छिद्यते । पश्य आलोकयेति शिष्यं प्रति साश्चर्योक्तिः । अयं भावः।

---

१ तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चरूपैषा प्रादुर्भूता महात्मनः ॥
इति पराशरोक्त्या अन्धतमोरूपाविद्याग्रस्तमित्यर्थः ।

---

१ आसंसारं, ब. कपा.

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ६ ॥**

राज्ञां यशस्तेषां स्थितिकाले वक्तृश्रोत्रादिपरंपरया तत्प्रजासु बहुलीभवदपि तच्छा-
९सनकालादूर्ध्वं न केनापि प्रायशो गीयते । अत एव च यथा ते राजानस्तथा
तद्यशोपि विस्मृतिपथं प्रयाति । यदि पुनस्तदेव यशः कविप्रतिभोपगृहीतं सत्
काव्यविशेषे प्रतिबिम्बितं भवति तदा दिवं यातेष्वपि तेषु राजसु आश्रयविनाशा-
१२न्नष्टुं योग्यमपि बिम्बस्थानीयं तद्यशः अविनश्यत् वाङ्मयादर्शे प्रतिबिम्बरूपेण
चिरस्थायि भवति । लौकिकादर्शे बिम्बाभावे प्रतिबिम्बस्य स्थितिर्न दृश्यते । अत्र
तु दृश्यत इति वाङ्मयादर्शस्य ततो विस्मापको विशेषः । एतेनातीतनृपाणां
१५यशःख्यापनं काव्यस्य प्रयोजनमित्युक्तं भवति । तेन चात्मनश्च च्छात्राणां च
तच्चरितज्ञानमित्यपि फलान्तरं ज्ञेयम् । इदमुपलक्षणम् । काव्यनिर्मातुरन्यान्यपि
१७फलानि सन्ति । यथोक्तं प्रकाशकृता ( १. २ )–

काव्यं यशसेर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥

२०किं बहुना—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम् ॥ ( १. २ )

२३इतिभामहोक्तदिशा सर्वेपि पुरुषार्थाः सत्काव्यस्य निबन्धनात् संभवन्ति ।
अत्रोपमानभूतलौकिकादर्शादुपमेयभूतवाङ्मयादर्शस्याधिक्यवर्णनाद् व्यतिरेकालं-
कारः ॥ ५ ॥

एवं काव्यस्य प्रयोजनमुक्त्वेदानीं तस्य निर्दोषतायां यतनीयमिति कथ-
यति—**गौर्गौरिति** । गौर्वाणी । स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या
३स्त्रियां पुंसि गौः इत्यमरः ( ३. २५ ) । सम्यक् प्रयुक्ता दोषशून्यतया गुणालं-
कारपरिपूर्णतया चोपयुक्ता । बुधैः सूरिभिः । कामदुघा कामान् दुग्धे सा
कामदुघा । इगुपधज्ञाप्रीकिरः कः ( पा. ३. १. १३५ ) इति कः । पश्चाट्टाप् ।
६कामपूरिकेत्यर्थः । एतादृशी गौः स्मर्यते कविभिर्ज्ञायते । तथा च श्रुतिः—एकः
शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति (कैय्यट-
प्रदीप १. १०, वार्तिक ६ ) इति । दुष्प्रयोगे दोषमाह । सैव गौः दुष्प्रयुक्ता

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन ।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ ७ ॥**
**गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।**
**किमन्धस्याधिकारोस्ति रूपभेदोपलब्धिषु ॥ ८ ॥**

९स्वरवर्णमात्रासंनिधिसंदर्भसंकेतादिकमविगणय्योच्चारिता । प्रयोक्तुर्दुष्प्रयोगशीलस्य कवेर्वक्तुर्वा । गोत्वं बलीवर्दत्वं मौर्ख्यमिति भावः । शंसति प्रथयति । उक्तं च पातञ्जलमहाभाष्ये—वाग्योगविदुष्यति चापशब्दैः ( १. २ ) इति । अनेन दोषाः १२परिहरणीया गुणालंकाराश्च समावर्जनीया इति स्पष्टं भवति ॥ ६ ॥

इदानीं काव्ये स्वल्पेपि दोषः परिहरणीय इति दृष्टान्तपूर्वकं निवेदयति—**तदल्पमिति** । तत् तस्माद्दोषस्योपहासजनकत्वान्निषिद्धत्वाच्च । काव्येल्पमपि पद-३पदांशगतमपि । दुष्टं दोषं भावे क्तः । कथंचन कथमपि नोपेक्ष्यं न सोढव्यम् । सर्वथा तत्परिहरणे यतितव्यमिति भावः । ननु स्वल्पो दोषो गुणसंनिपाते निमज्जतीति न तत्परिहरणमत्यावश्यकमिति चेन्न । सुन्दरमपि निसर्गरमणीयं तथ ६महार्घाभरणवस्त्रादिना परिष्कृतमपि । वपुः शरीरम् । एकेन केवलेन अथवा एकावयवस्थितेन । श्वित्रेण श्वेतकुष्ठेन । दुर्भगं सौभाग्यहीनं स्यात् । यथा हि सौन्दर्यसमृद्धेपि वपुषि श्वित्रं नेत्रोद्वेगजनकं तथा गुणपरिपूर्णमपि दोषलवयुतं ९काव्यं सहृदयशिरःसंतापकरमेवेत्यर्थः ।

तदुक्तं भामहेनः--सर्वथापदमप्येकं न निगाद्यमवद्यवत् ।
विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते ॥
इति ( १-११ )

अत्र उपमानोपमेयभूतयोः पूर्वोत्तरवाक्ययोः बिम्बप्रतिबिम्बभावेन भिन्नधर्मनिर्देशाद् दृष्टान्तालंकारः ॥ ७ ॥

दोषपरित्यागेन गुणस्वीकारः सूचितो भवति । दोषाणां गुणानां च स्वरूपज्ञानपूर्वकहेयोपादेयताज्ञापनार्थं शास्त्रप्रवृत्तिरित्याह—**गुणदोषानिति** । अ-३शास्त्रज्ञः शास्त्रं जानातीति शास्त्रज्ञस्तद्विपरीतः । साहित्यशास्त्रपरिचयशून्य इत्यर्थः । जनो व्युत्पित्सुः पुरुषः । गुणा उपादेयधर्माः श्लेषः प्रसादः समता [ १. ४१ ] इत्यादिनाग्रे प्रोक्ताः । अनुप्रासोपमादयोलंकारा अपि काव्यशोभाजनकत्वादुपादेया ६एव । अतो गुणशब्देन तेषामपि संग्रहः । दोषाः पुनर्हेयधर्माः अपार्थं व्यर्थमेकार्थं

**अतः प्रजानां व्युत्पत्तिमभिसंधाय सूरयः ।**
**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥ ९ ॥**
**तैः शरीरं च काव्यानाम्**

[ ३. १२५ ] इत्यादिनाग्रे प्रपञ्चिताः । तान् गुणदोषान् । अशास्त्रज्ञः कथं विभजते इमे गुणा इमे दोषा इति कथं जानीयादिति भावः । काव्यतत्त्वानभिज्ञः काव्यस्य ९शब्दार्थमात्रं कदाचिज्जानीयान्न तु काव्यमीमांसाकुशलवत् तद्गतगुणदोषरहस्यमवगच्छेदित्यर्थः । अमुमेवार्थं दृष्टान्तेन विशदयति—**किमिति** । अन्धस्य चक्षुर्विकलस्य । रूपभेदोपलब्धिषु रूपं चक्षुर्मात्रग्राह्यो द्रव्यवर्तिगुणविशेषस्तस्य भेदाः श्वेत-१२रक्तनीलादयस्तेषामुपलब्धयो ज्ञानानि तेषु । किमधिकारोऽस्ति योग्यता वर्तते । नैवेत्यर्थः । एवमेव साहित्यशास्त्रानभिज्ञस्य गुणदोषविभजनेऽधिकारो नास्तीति भावः । अतस्तदधिकारसिद्धये साहित्यशास्त्रमवश्यमारम्भणीयमिति सिद्धम् । अत्रापि पूर्ववद् १५दृष्टान्तालंकारः ॥ ८ ॥

साहित्यशास्त्रारम्भविचारमुपसंहरति—**अत इति** । अतः गुणदोषाकलनपूर्वककाव्यरसास्वादस्य साहित्यशास्त्राधीनत्वात् । सूरयो भरतादयो विपश्चितः । ३प्रजानां काव्यरसिकानाम् । व्युत्पत्तिं काव्यरचनाकौशल्यम् । अथवा प्रजानां व्युत्पित्सूनां व्युत्पत्तिं वाग्व्यवहारनैपुण्यं च । अभिसंधायोद्दिश्य । एते वाग्व्यवहारनिपुणा भवेयुरिति तद्व्युत्पत्तिमभिसंधायेत्यर्थः । विचित्रमार्गाणां विचित्रा मनोहरा ६विविधा वा मार्गाः शब्दार्थालंकारभेदरूपा वैदर्भीगौडीयादिरीतिरूपा वा रचनाप्रकारा यासां तासाम् । वाचां काव्यवाणीनाम् । क्रियाविधिं क्रियायै काव्यरचनार्थं विधिं विधानं धर्मिधर्मादिविभागेन निरूपणम् । लक्ष्यलक्षणादिना कथनमित्यर्थः । ९निबबन्धुः शास्त्रपरिभाषया विरचयामासुः । कीदृशं काव्यनिर्माणं कथं च तत्र यतितव्यमिति सर्वं सम्यक् शास्त्रपरिभाषया निरूपयामासुरित्यर्थः । एतेन पूर्वसूरीणामनुसरणशीलस्य मम प्रजाव्युत्पत्त्यर्थमेवायं प्रयत्न इति सूचितं भवति । १२तथा च ग्रन्थस्यास्येदमेव प्रयोजनम् । काव्यज्ञानस्य प्रयोजनं तु कविबोद्धृगतं यशःप्रभृति पूर्ववर्णितमवगन्तव्यम् ॥ ९ ॥

धर्मिणि ज्ञाते धर्माणां युक्तायुक्तताया आकलनं सुकरं भवतीति प्रथमं धर्मिस्वरूपं निर्णयति—**तैः शरीरं च काव्यानामिति** । अत्र चकारो भिन्नक्रमः ।

---

१ पदानां अ.

**अलंकाराश्च[1] दर्शिताः[2] ।**
**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली[3] ॥ १० ॥**

३तैश्च पूर्वसूरिभिः काव्यानाम् इष्टार्थवाक्यानाम् । गद्यपद्यमिश्रादिभेदेन काव्याना-
मिति बहुवचनम् । शरीरम् आत्मभूतेष्टार्थाश्रयो देहः । अलंकाराः शरीरशोभा-
वहाः अनुप्रासोपमादयः शब्दार्थालंकाराश्च । दर्शिताः विवेचिताः । चकारोनुक्त-
६समुच्चयार्थः । तेन दोषाणामपि संग्रहः । तेषामपि ग्रन्थान्ते निरूपितत्वात् ।
वैदर्भरीतेः प्राणत्वेनाग्रे [ १. ४१ ] ग्रन्थकृतोक्तानां श्लेषप्रसादादीनां गुणानां तु
शरीरशब्देनैव संग्रहः । यतः वैदर्भरीतिर्नाम पदावलीसंस्थानविशेषः । सैव पदावली
९शरीरम् । अतो गुणा न शरीरतो भिन्ना इति नोद्देशवाक्ये पृथक्त्वेन गणिताः ।
एतेन गुणदोषयोरग्रे निरूपणात् तेषामुद्देशवाक्ये परिगणनाभावान्न्यूनतेति शङ्का
निरस्ता । काव्यशरीरं लक्षयति—**शरीरं तावदिति** । तावदिति वाक्यालंकारे ।
१२इष्टार्थव्यवच्छिन्ना इष्टाः सरसमनोहरतया वर्णयितुमभिलषिताः ये अर्थाः कविप्रति-
भोल्लासविषयीभूताः सुन्दराः पदार्थाः । तैर्व्यवच्छिन्ना विशेषेण अवच्छिन्ना परिपूर्णा
चमत्कृतिबहुलेत्यर्थः । पदावली पदसमूहः । शरीरं काव्यशरीरमिति भावः । अत्र
१५पदावली साकाङ्क्षा एव ग्राह्या । तस्या एव इष्टार्थव्यवच्छिन्नतार्हत्वात् । इष्टत्वं च
साहित्यशास्त्रे चमत्कारपूर्वकवर्णनाभिलाषः । चमत्कारश्च लोकोत्तराह्लादः । आह्लाद-
गतलोकोत्तरत्वं च कविप्रतिभया अलौकिकसामग्रीविशेषेण संपादितः सुखत्वव्याप्यः
१८अनुभवसाक्षिको जातिविशेषः । तेन पुत्रस्ते जातः शत्रवस्ते पराभूता इति
वाक्यार्थजन्यज्ञानस्य न काव्यत्वम् । तस्य लोकोत्तराह्लादजनकत्वाभावात् ।
तादृशाह्लादं प्रति शब्दार्थानां कारणता च व्यङ्ग्यविशेषेण दोषाभावविशिष्टगुणा-
२१लंकारसमुद्भूतेन सौन्दर्येण च संभवति । अत एव च काव्यस्य भेदत्रयं भवति ।
तथाहि— यत्र वाच्यचमत्कृतेः व्यङ्ग्यचमत्कृतिः प्रधानतया प्रस्फुरति तत्र ध्वनि-
काव्यव्यवहारः । यत्र व्यङ्ग्यचमत्कृतिरङ्गीभूता वाच्यचमत्कृतिकुक्षिनिलीना इव
२४भासते तत्र गुणीभूतव्यङ्ग्यकाव्यमिति व्यवहारः । यत्र च व्यङ्ग्यशून्या केवलं
वाच्यचमत्कृतिर्भवति तत्र चित्रकाव्यमिति व्यपदेशः । एवं सामान्यतः काव्यस्य
त्रयो भेदा अवगन्तव्याः ॥

---

१ अलंकारश्च अ. २ दर्शितः अ. ३ पदावलिः अ.

२७केचित्तुः– सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्।
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ॥ ( भामह १. १४ )

इति व्यङ्ग्यचमत्कृतिनिरपेक्षं गुणालंकारोपस्कृतं शब्दमेव काव्यं वदन्ति। तन्मत-३०परिग्रहाय लक्षणे इष्टेति पदं विभज्य अर्थव्यवच्छिन्ना इति विशेषणविशिष्टेन पदावलीपदेन तद्विशेषणतया योजनीयम्। एवं सति रूपी घटोनित्यः इत्यत्र उभयो रूपघटयोरनित्यत्वसंबन्धवदत्र अर्थे पदे च इष्टेति विशेषणस्य संबन्धो भवति। तेन ३३इष्टार्थं तथा इष्टशब्दं च काव्यमिति उभयोरपि संग्रहः॥ चित्रकाव्यं पुनः शब्दचित्रमर्थचित्रमिति द्विविधम्। शब्दचित्रमनुप्रासयमकश्लेषादिकम्। अर्थचित्रं च उपमारूपकादिकम्। तत्र अर्थः वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधः। तत्र अभिधा-३६शक्त्या प्रतीतो वाच्यः। लक्षणयोपस्थाप्यो लक्ष्यः। व्यञ्जनया प्रतीतिपदवीमारूढो व्यङ्ग्यः। व्यङ्ग्यार्थोपि वस्त्वलंकाररत्यादिभेदात् त्रिविधः। वस्त्वलंकाररूपो व्यङ्ग्यः संलक्ष्यक्रमः। रत्यादिव्यङ्ग्यस्तु असंलक्ष्यक्रमः। विस्तरस्तु ध्वन्यालोक-३९लोचने काव्यप्रकाशचतुर्थोल्लासादौ च द्रष्टव्यः। एवं च आचार्यदण्डिनो मते रमणीयार्थोपस्कृतं सुन्दरं वाक्यमेव काव्यमिति निष्पन्नम्। तत्र वाक्यं पदकदम्बः। पदानि च समासाङ्गसंबन्धशून्यानि सुप्तिङन्तानि॥

४२अत्रेदमवधेयम्। काव्यशब्दस्य वाच्यं शब्दार्थयुगलं वा रमणीयार्थप्रतिपादकः केवलः शब्दो वा इति पक्षद्वयम्। तत्राद्यः पक्षः शब्दार्थौ सहितं काव्यं गद्यं पद्यं च तद्द्विधा इति भामहेन ( १. १६ ) काव्यशब्दोयं गुणालंकारसंस्कृतयोः ४५शब्दार्थयोर्वर्तते इति वामनेन ( का० वृ० १. १ ) शब्दार्थौ काव्यम् इति रुद्रटेन ( २. १ ) तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि। इति मम्मटेन ( १. ४ ) अदोषौ सगुणौ सालंकारौ च शब्दार्थौ काव्यम्। इति हेमचन्द्रेण ४८( पृ. १६ ) शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालंकारौ च काव्यम्। इति वाग्भटेन ( पृ. १४ ) गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ। इति प्रतापरुद्रे विद्यानाथेन ( पृ. ४२ ) शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः। इति एकावल्यां ५१विद्याधरेण ( १. १३ ) इत्येवमादिभिः साहित्यकोविदैरङ्गीकृतो वर्तते। एतेषामयमाशयः। काव्ये हृद्याः अर्था रमणीयाः शब्दाश्चापेक्ष्यन्ते। तैरेव शास्त्रविमुखानां मृदुमतीनां राजपुत्रादीनां सन्मार्गोन्मुखीकरणं संभवति। अतः काव्यफल-

५४निष्पत्तावुभयोः शब्दार्थयोः समप्राधान्याच्छब्दार्थयुगलमेव काव्यपदवाच्यं भवितु-
मर्हति इति । परमेतत् काव्येतिपदस्य वाच्यार्थे शब्दस्य प्राधान्यं वदन्तो जग-
न्नाथादयो न सहन्ते । ते इमं पक्षमेवं दूषयन्ति । तथाहि— काव्यमुच्चैः पठ्यते
५७काव्यादर्थोऽवगम्यते काव्यं श्रुतमर्थो न ज्ञातः इत्यादिविश्वजनीनव्यवहाराच्छब्दार्थ-
युगलं काव्यशब्दवाच्यं भवितुं नार्हति । प्रत्युत वाग्व्यवहारे शब्दस्यैव प्राधान्या-
दर्थोपस्कृतः शब्द एव काव्यशब्दाभिधेयो भवितुमर्हति । काव्यमुच्चैः पठ्यते
६०इत्यादिवाक्येषु लक्षणयोपपत्तिस्तु न युक्ता । शब्दार्थयुगले भवदभिप्रेतायाः
काव्यपदशक्तेः स्वीकारे मानाभावात् । अर्थनिश्चयं विना लक्षणाया अप्रवृत्तेः ।
यतः मुख्यार्थहातिर्लक्षणाबीजम् । सा च वाच्यार्थनिश्चयं विना नोद्भवति । अतः
६३काव्यशब्दे पराभिमतवाच्यार्थस्यानिश्चयान्नात्र लक्षणा संभवति । किंच वेदपुराणा-
दिसंज्ञाशब्देषु शब्दस्यैव प्राधान्यं दृश्यते । सैव सरणिरत्रापि अङ्गीकर्तव्या ।
अन्यच्च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तं प्रत्येकं पर्याप्तं वा । नाद्यः ।
६६एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः ।
नापि द्वितीयः । एकस्मिन्नेव पद्ये काव्यद्वयव्यवहारापत्तेः । तस्मात् काव्यपदवाच्यं
न शब्दार्थयुगलं तर्हि रमणीयार्थप्रतिपादकः शब्द एवेति ॥ अत्र प्रकाशानुसा-
६९रिभिरेवं समाधायि । काव्यं पठितं श्रुतं काव्यं बुद्धं काव्यमिति उभयविधव्यवहार-
दर्शनात् काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति (शब्दार्थोभयपर्याप्तवृत्ति) स्वीक्रियते ।
[काव्यशब्दवाच्यं शब्दार्थयुगलमिति भावः] तत्र प्रयोगानुरोधेन क्वचिच्छब्दविशि-
७२ष्टोऽर्थः काव्यं क्वचिदर्थविशिष्टः शब्दः काव्यमिति विवेकः । तथा च रसार्थालंकार-
प्रधानप्रबन्धस्य प्रथमपक्षेण काव्यत्वसिद्धिः । शब्दालंकारप्रधानप्रबन्धस्य च
द्वितीयपक्षेण तत्त्वसिद्धिः । काव्यमुच्चैः पठ्यते इत्यादिप्रयोगेषु लक्षणया शब्दमात्रे
७५काव्यपदप्रवृत्तिः । काव्यं बुद्धम् इत्यादिषु लक्षणया अर्थमात्रे काव्यशब्दप्रवृत्तिः ।
एवं लक्षणयान्यतरस्मिन्नपि तत्त्वादेको न द्वौ इतिवत् श्लोकवाक्यं न काव्यमिति
व्यवहारस्य नापत्तिरिति ॥ इदमत्र विमर्शनीयम् । वाग्व्यवहारे सामान्यतः
७८शब्दस्य अर्थापेक्षया अधिकदेशवृत्तित्वादुत्सर्गतः शब्दप्राधान्य एव काव्यशब्दप्र-
वृत्तिर्युक्ता । तत्र समकक्षतया अर्थनिवेशनं शब्दविषयसंकोचकरं न युक्तम् ।
निवेशे तु वेदपुराणादिसंज्ञास्वपि विनिगमनाभावादर्थनिवेशोपरिहार्यः स्यात् । तेन

९१च अर्थज्ञानं विनापि वेदः पठितः इत्यादिसार्वजनीनव्यवहारस्यानुपपत्तिः। यथा च वेदशब्दवाच्यं न शब्दार्थयुगलं किंतु शब्दविशेष एव तद्वदत्रापि काव्यशब्दवाच्यः अर्थोपस्कृतशब्दविशेष एव। काव्यं बुद्धम् इत्येवमादयः प्रयोगास्तु मधुरवर्णानु-
९४प्रासजन्यश्रुतिचमत्कारानुभवेन सुस्था भवेयुः। को हि नाम रसिकः—

शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः॥

९७अथवा—

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥

९०इत्येवमादिषु केवलकोमलानुप्रासमहिम्नैव साधारणीभूतमर्थमविगणय्य इदं काव्य-मिति न बुध्येत। अन्यच्च स्त्री ब्रूते। शुष्को वृक्षस्तिष्ठत्यग्रे। इत्येवमादि न काव्यम्। कामिनी व्याहरति। नीरसतरुरिह विलसति पुरतः। इत्येवमादीनि तदर्थकान्येव
९३वाक्यानि तु काव्यम् इति सर्वसहृदयानुभवसिद्धम्। तेन च काव्येतिपदस्याभिधेये शब्दस्यैव प्राधान्यमिति निष्पद्यते। नार्थशब्दयुगलस्य न वा केवलार्थस्य। अत एव रमणीयार्थप्रतिपादकः शब्द एव काव्यपदवाच्यम्। एतदेव च आचार्यदण्डि-
९६नोभिप्रेतं काव्यलक्षणमिति प्रागुलक्षणविचारे दर्शितमेव॥

एतावत्पर्यन्तं प्राचीनार्वाचीनानां काव्यलक्षणस्योद्देश्यविषये विचारः प्रदर्शितः। अतः परं पूर्वोक्तलक्षणस्योद्देश्यविशेषणविषये किंचिद्विमृशामः। तत्र तावदुद्देश्यविशेष-
९९णानि निर्दोषौ सगुणौ सालंकारौ चेति त्रीणि सन्ति। तत्र निर्दोषौ इत्यनेन दोष-शून्यशब्दार्थयोः काव्यत्वस्वीकारे न्यक्कारो ह्ययमेव इत्यस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्। परमयं श्लोकः लक्षणे अदोषौ इति विशेषणं निवेशयद्भिः
१०२प्रकाशकारादिभिः ध्वनित्वेनोत्तमकाव्यतयाङ्गीकृतो वर्तते। अतः निर्दोषौ इति विशे-षणनिवेशे अव्याप्तिदोषः। अन्यच्च अदोषौ इति विशेषणत्वे काव्यशब्दो विरल-विषयो निर्विषयो वा स्यात्। सर्वथा निर्दोषस्य काव्यास्यात्यन्तासंभवात्। दुष्टं
१०५काव्यम् इति व्यवहारस्य चानुपपत्तिः स्यात्॥ सगुणौ इत्यपि विशेषणमयुक्तमेव। यतः तददोषौ शब्दार्थौ इति लक्षणं कुर्वद्भिः प्रकाशकारादिभिर्गुणानामात्मभूत-रसैकधर्मत्वस्याङ्गीकारात्। शब्दार्थयोस्तत्संबधस्य वक्तुमशक्यत्वात्। नहि

१०८शौर्यादिवदात्मधर्माणां गुणानां शरीरघटकत्वमुपपद्यते। ननु सगुणौ इति विशेषणं गुणत्वान्यथानुपपत्त्या सरसौ इत्यर्थतात्पर्यकमिति चेत् तन्न समञ्जसम्। नहि प्राणिमन्तो देशा इति वक्तव्ये शौर्यादिमन्तो देशा इति कोपि ब्रूयात्। तथैव सरसौ १११इति वक्तव्ये सगुणौ इत्युक्तिरसमञ्जसैव। अपरं च उदितं मण्डलं विधोः इति काव्ये गतोस्तमर्कः इत्यादौ च गुणशून्यत्वेनाव्याप्तिः स्यात्। काव्यजीवितस्य चमत्कारस्य तु अत्र विद्यमानत्वान्नेदं काव्यमिति वक्तुं न शक्यते। अतः सगुणौ इति ११४विशेषणे अव्याप्तिदोषस्य प्रादुर्भावात् तन्न युक्तम्॥ सालंकारौ इतीदमपि विशेषणमनुपपन्नम्। यतो हारादिवच्छरीरोपस्काराणामलंकाराणां तद्घटकत्वस्यायुक्तत्वात्। तथा च शब्दार्थौ इत्यस्य त्रीण्यपि विशेषणान्यनुपपन्नान्ययुक्तानि चेति ज्ञेयम्॥ ११७आनन्दवर्धनेन काव्यस्यात्मा ध्वनिः इति ध्वनियुक्तौ शब्दार्थौ काव्यस्वरूपेण वर्णितौ। तत्र ध्वनिशब्देन वस्त्वलंकाररसादिरूपेण त्रिविधो ध्वनिरपेक्ष्यते अथवा केवलं रसस्वरूपः अपेक्ष्यते। प्रथमार्थस्वीकारे प्रहेलिकादावतिव्याप्तिः। तत्र १२०ध्वनिनैव वस्तुनोवगमः। केवलरसस्वीकारेप्यापतन्तीमनुपपत्तिमग्रे दर्शयामः॥

एतावत्पर्यन्तं शब्दार्थौ काव्यम् इति लक्षणे शब्दार्थौ इत्यस्य विशेष्यस्य विशेषणविषये विचारः प्रदर्शितः। इदानीं विशिष्टः शब्दः काव्यम् इति पक्षे स्वीकृते शब्दस्य विशे- १२३षणविषये विचारं कुर्मः। तत्र काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत्। इति अलंकारशेखरे माणिक्यचन्द्रेण (पृ. २) वाक्यं रसादिमत् काव्यम्। इति साहित्यदर्पणे विश्वनाथेन (१. ३) च वाक्यस्य रसादिमत् इति विशेषणं काव्यरूपावगमाय निवेशितम्। १२६परं तन्न विचारक्षमम्। यतो रसादिमद्वाक्यस्यैव काव्यत्वे वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तिः। महाकविभिस्तेषां काव्यत्वेन स्वीकारान्न तानि काव्यानीत्यापादनं नोचितम्। तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्व- १२९र्णितानि कपिबालादिविलसितानि च काव्यरूपाण्येव। तत्र रसात्मकं वाक्यं काव्यम् इति लक्षणे काव्यशब्दस्याप्रवृत्त्याव्याप्तिदोषो दुर्वारः स्यात्। शब्दार्थयोः ध्वनिकारोक्तदिशा ध्वनिसहितौ इति विशेषणे इयमेवाव्याप्तिर्बोद्धव्या। ननु वस्त्व- १३२लंकारप्रधानेपि तत्तत्प्रबन्धे यथा कथंचिदस्त्येव रसस्पर्श इति चेन्न। तादृशरसस्पर्शस्य गौश्चलति मृगो धावति इत्यादौ अतिप्रसक्तत्वेनाप्रयोजकत्वं स्फुटमेव। यतः अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमत्वाद्रसस्पर्शो वर्तत एव। तस्माद् रसात्मक १३५मिति विशेषणं न युक्तम्। केवलं रमणीयार्थप्रतिपादकः शब्दः काव्यम् इत्येव

**पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।**
**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥ ११ ॥**

लक्षणं निर्दोषं काव्यशब्दवाच्यसकलविषयसंग्राहकं चेति ज्ञेयम् । इदमेव च मतं दण्ड्यनुकूलं स्मृत्यनुगृहीतं च । तदुक्तमाग्नेये—

१३८ संक्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।
काव्यं स्फुरदलंकारं गुणवद्दोषवर्जितम् ॥ इति ( ३३७. ६–७ )

अत्र इष्टार्थव्यवच्छिन्ना पदावली काव्यम् इत्येव लक्षणम् । स्फुरदलंकारं गुणवद्दोष- १४१वर्जितम् इत्यादि प्राशस्त्यबोधकमिति ज्ञेयम् । विशेषविचारस्तु विश्वनाथजगन्नाथादिभिः स्वस्वग्रन्थे प्रदर्शितस्तत एवावगन्तव्य इत्यलं पल्लवितेन ॥ १० ॥

इदानीं पद्यगद्यमिश्रप्रकारेण शरीरस्य त्रैविध्यं दर्शयति—**पद्यमिति** । तत् काव्यशरीरम् । पदं चरणमर्हतीति पद्यं श्लोकबन्धः । छन्दोबद्धपदं पद्यम् । इति साहि- ३त्यदर्पणे ( ६. ३१४ ) । तच्च मालिनीहरिणीस्रग्धरादिविविधरूपम् । गद्यते छन्दसा विना केवलशब्दप्रबन्धैरेव विरच्यते तद्गद्यम् । तच्चतुर्विधं यथोक्तं दर्पणे:—

वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
६ भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥ ( ६. ३३० )

एतेषां लक्षणानि च—

आद्यं समासरहितं वृत्तभागयुतं परम् ।
९ अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ॥ इति । ( ६. ३३१ )

मिश्रम् गद्यपद्योभयमयं चम्पूपञ्चतन्त्रादिकम् । एवं त्रिप्रकारकमेव तद्व्यवस्थितम् प्राचीनसूरिभिर्निरूपितम् । एवकारो भेदान्तरव्यवच्छेदार्थः । तेषु पद्यं निर्वक्ति— १२**पद्यं चतुष्पदीति** । चतुर्णां पदानां समाहारश्चतुष्पदी । द्विगोरिति सूत्रेणादन्तत्वात् ङीप् । पादचतुष्टयात्मकं पद्यमित्यर्थः । द्वित्रिपादपरिमितानां छन्दसां वेदेष्वेव दर्शनाच्चतुष्पदीति कथनंलौकिकवृत्तानुरोधेनेति केचित् । अन्ये तु १५चतुष्पदीत्युपलक्षणमेतत् । तेन पञ्चषट्पादानां वृत्तानामपि संग्रहः । तच्च पद्यं

१—गद्यं पद्यं च. अ.

**छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः ।**
**सा विद्या नौर्विविक्षूणां गम्भीरं काव्यसागरम् ॥ १२ ॥**

वृत्तं जातिरिति द्विधा द्विप्रकारकम् । तत्र अक्षरसंख्यातं वृत्तं मात्रासंख्याता जातिः । तदुक्तं छन्दोमञ्जर्याम्—

१८ पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥ इति ।

तत्र समार्धसमविषमाणि वृत्तानि क्रमेण स्रग्धरापुष्पितााग्रावैतालीयादीनि । आर्या-
२१ गीतीत्यादयो जातयश्च ॥ ११ ॥

वृत्तभेदानां बाहुल्यान्नेह तन्निरूपणं क्रियते छन्दःशास्त्रादेव तदवगन्तव्य-मित्याह—**छन्दोविचित्यामिति** । छन्दांसि विचीयन्ते निरूप्यन्ते यत्र सा छन्दो-
३ विचितिः पिङ्गलमुनिकृतं छन्दःशास्त्रम् । छन्दोविचितिर्नाम दण्ड्याचार्यकृत-श्छन्दोग्रन्थविशेष इति केचित् । तस्यां सकलस्तयोर्वृत्तजात्योः प्रपञ्चः विस्तारः निदर्शितः । उक्था अत्युक्था इत्यादिप्रकारेण समार्धसम-
६ विषमभेदेन च विविधानि वृत्तानि तथा आर्यागीत्यादयो जातयश्च निरूपिता इत्यर्थः । अतश्छन्दोज्ञानार्थं स एव ग्रन्थः परिशीलनीय इति भावः । काव्या-नुशीलनवतां छन्दोज्ञानस्यावश्यकतां विशेषतः दर्शयति—**सा विद्येति** । सा
९ विद्या छन्दोविचित्यादिभ्यः संपादितं छन्दोविज्ञानम् । गम्भीरम् दुरवगाह्यम् । तत्तत्प्र-सङ्गविशेषेषु तत्तच्छन्दांस्येव रसपरिपोषकानि नान्यानीति सहृदयैकज्ञेयत्वाद्दुरधि-गममितिभावः । काव्यसागरम् काव्यरूपमहोदधिम् । विविक्षूणां प्रवेष्टुमिच्छूनाम् ।
१२ नौः नौकास्थानीया भवति । यथा नानासाधनपरिपूर्णा नौः रत्नसमाहरणाय सागरं प्रविविक्षूणां पुरुषाणामिष्टार्थसंपादनाय साधनं भवति तथा शब्दार्थरत्नाहर-णाय काव्योदधिं प्रविविक्षूणां छन्दोज्ञानं तल्लाभसौकर्याय भवतीत्यर्थः । साहि-
१५ त्यशास्त्रे धृतरुचीनां छन्दोज्ञानं काव्यनिर्माणे प्रधानं साधनमित्यर्थः । प्रविविक्षूणा-मिति विशतेः सन्प्रत्ययः । तितीर्षूणामिति पाठे तरितुमिच्छूनां विवक्षूणामिति पाठे वोढुमिच्छूनामिति चार्थः कल्प्यः ॥ १२ ॥

---

१. विवक्षूणां क. ।तितीर्षु णां ब, कपा.

**मुक्तकं कुलकं कोषः संघात इति तादृशः**
**सर्गबन्धांशरूपत्वादनुक्तः पद्यविस्तरः ॥ १३ ॥**
**सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम् ।**

एवं त्रिविधकाव्येषु पद्यमयकाव्यस्य मुक्तकादयोवान्तरभेदाः प्राचीनैर्वर्णिताः सन्ति । तेषां तु महाकाव्याङ्गरूपत्वान्न पृथक्तया वर्णनमवश्यम् । अतस्तदुपेक्ष्य ३प्रधानकाव्यमेवास्माभिर्निरूप्यत इति स्वाभिप्रायं प्रकटयन्नाह—**मुक्तकमिति** । इतिशब्द एवमर्थे । मुक्तकं कुलकं कोषः संघातः तथा तादृशः तत्सजातीयोन्यश्च पद्यविस्तरः काव्यात्मकपद्यसमूहः । सर्गबन्धांशरूपत्वात् सर्गबन्धो महाकाव्यमि- ६त्याद्यनन्तरश्लोकलक्ष्यमाणमहाकाव्यावयवस्वरूपत्वात् । अनुक्तः तस्यानुपयुक्तत्वाद् ग्रन्थविस्तरभयाच्च न प्रदर्शितः । ग्रन्थान्तरेभ्योवगन्तव्य इत्यर्थः । तत्र मुक्तकलक्षण- मग्निपुराणे यथा—मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम् । [ ३३७–३६ ] ९कुलकलक्षणं साहित्यदर्पणे यथा—

द्वाभ्यां तु युग्मकं संदानितकं त्रिभिरिष्यते ।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ॥ [ ६. ३१४–१५ ]

१२कोषस्तु कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः इति लक्षणलक्षितः । संघा- तलक्षणं च यथा—

यत्र कविरेकमर्थं वृत्तेनैकेन वर्णयति काव्ये ।
१५ संघातः स निगदितो वृन्दावनमेघदूतादिः ॥ इति ।

टीकान्तरे हरिनाथेन प्रदर्शितानि लक्षणानि यथा—अन्यानपेक्ष एकश्लोकानिबन्धो मुक्तकम् । अनेकपद्येनैकक्रियान्वितेनैकवाक्यार्थकथनं कुलकम् । असंहतार्थानामे- १८ककवेरनेककवीनां वा निबन्धः कोशः । यथार्यासप्तशत्यादिः । कल्पितवस्तुक एकच्छन्दोनिर्व्यूढः संघातः मेघदूतादिः । एवंविधलक्षणा एते पद्यप्रभेदा महा- काव्यांशभूता एव । तत्राद्यौ साक्षादंशभूतावन्त्यौ तु तत्समावेशतस्तल्लक्षणेनैवोन्नेय- २१स्वरूपावित्यर्थः । इति ॥ १३ ॥

मुक्तकादीनां सर्गबन्धांशरूपत्वं कथितम् । तत्र सर्गबन्धः कीदृशः इत्या- काङ्क्षामायाह—**सर्गबन्ध इति** । महाकाव्यं सर्गबन्धः । सर्गैरवान्तरार्थवर्णनप्रबन्धै-

---

१ कोशः ब क. २ °बन्धाङ्ग° ब.

**आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥ १४ ॥**

**इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।**

३र्बन्धो रचना यस्य तत् काव्यं सर्गबन्धः । तस्य सर्गबन्धस्येदानीं स्वरूपमुच्यते मया निरूप्यते जायते सदलंकृतीत्यन्तेन [ १. १९ ] ग्रन्थेन । तन्मुखम् तस्य सर्गबन्धस्य मुखम् प्रारम्भः । आशीः इष्टजनस्य शुभाशंसनम् । तथा च ६शब्दकल्पद्रुमे—

वात्सल्याद्यत्र मान्येन कनिष्ठस्याभिधीयते ।
इष्टावधारकं वाक्यमाशीः सा परिकीर्तिता ॥ इति ।

९नमस्क्रिया मत्तस्त्वमधिकस्त्वत्तोहं न्यून इति परोत्कर्षसूचनपूर्वकस्वापकर्षबोधनानुकूलो व्यापारविशेषः । स च कायिकवाचिकमानसिकभेदेन त्रिविधोप्यत्र वाचिक एव ग्राह्यः । वस्तुनिर्देशः वसति प्रस्तुतवृत्तान्तोस्मिन्निति वस्तु कथानायकः । १२लक्षणयापरोपि तत्संबन्धी प्रधानपुरुषः । तस्य निर्देशः नामोच्चारणपूर्वक उपन्यासः। अथवा वस्तु वर्ण्यकथाभागस्तस्य निर्देशः साक्षाद्व्यञ्जनया वा सूचनम् । एतत्त्रयाणां मध्ये केनाप्येकेन सर्गबन्धस्य प्रारम्भो विधीयत इत्यर्थः । तत्राशीर्यथा १५चन्द्रप्रभाकाव्ये—

श्रियं क्रियाद्यस्य सुरागमे नट[ म ?]—
त्सुरेन्द्रनेत्रप्रतिबिम्बलाञ्छिता ।
१८ सभा बभौ रत्नमयैर्महोत्पलैः
कृतोपहारेव स वोग्रजो जिनः ॥

नमस्कारो यथा रघुवंशे—

२१ वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

वस्तुनिर्देशो यथा शिशुपालवधे—

२४ श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन् ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥

एवं सर्गबन्धान्तरेष्वपि द्रष्टव्यम् ॥ १४ ॥

**इतिहासेति** । इतिहासो भारतम् उपलक्षणमेतत् । तेन रामायणादि-

चतुर्वर्गफलायत्तं[1] चतुरोदात्तनायकम् ॥ १५ ॥

काव्यानां पुराणानां च संग्रहः । तत्रत्या याः कथास्ताभ्य उद्धृतं निष्पन्नं तदा-
३धारतया निबद्धमित्यर्थः । इतरद्वा इतिहासादिष्वविद्यमानं कथानकमुपजीव्य निब-
द्धम् । किंतु सदाश्रयम् सत् सत्यभूतो वृत्तान्त आश्रय आधारो यस्य तत् ।
अनेन कल्पितस्य वस्तुनो महाकाव्ये वर्णनीयतया स्वीकारे निषेधः सूचितः ।
६अथवा सत् सत्पुरुष आश्रयो यस्य । तेन बुद्धचरितादीनामश्वघोषादिभिः प्रणीतानां
संग्रह इति केचित् । चतुर्वर्गफलायत्तम् चतुर्णां धर्मार्थकाममोक्षाणां वर्गः समूह-
श्चतुर्वर्गः तद्रूपस्य फलस्य आयत्तं स्वाधीनं तत्फलोत्पत्तिमुद्दिश्य प्रणीतम् । तथा
९चतुरो व्यवहारकुशलो वत्सराजादिवत् उदात्तो धीरोदात्तो रामचन्द्रधर्मराजादिवत्
एतादृशो नायकः कथाप्रधानपुरुषो यत्र तत् । नायकलक्षणं च साहित्यदर्पणे
यथा—

१२ त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥ इति ( ३. ३० )

तथैव च दशरूपके —

१५ नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
१८ शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ इति । (२. १-२ )

अयं च नायको धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्तादिभेदेन चतुर्विधः । तल्ल-
क्षणप्रविभागादिकं साहित्यग्रन्थेभ्य एवावगन्तव्यम् । प्रकृते तु उदात्तपदेन सर्वे-
२१षामप्येतेषां ग्रहणम् । नायकश्च क्वचिदेको देवः क्वचिदेकः सद्वंशजः क्षत्रियः
क्वचिदेकवंशजा बहवः क्षत्रियाः । तत्र प्रथमप्रकारः शिशुपालवधे द्वितीयो नैषधे
तृतीयो रघुवंशादिष्ववगन्तव्यः ॥ १५ ॥

न केवलमितिहासादिवद्यथावृत्तवर्णनेनैवं काव्यं भवति किंतु तत्रान्तरान्तरा
प्रसङ्गानुरोधेन प्ररोचनार्थं तत्पदार्थानामुच्चावचवर्णनमप्यवश्यमपेक्ष्यत इति वर्ण्य-

---

१ फलोपेतं च.

**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥ १६ ॥**

विषयान् कांश्चिद्दर्शयति—*नगरार्णवेति । नगरं पुरम् । तद्वर्णनं यथा शिशुपालवधे तृतीयसर्गे [ ३३—६४ ] अर्णवः समुद्रः । तद्वर्णनं यथा रघुवंशस्य त्रयोदशसर्गे [ २--१६ ] माघस्य तृतीये [७०--८० ] च । शैलः पर्वतः । तद्वर्णनं यथा कुमारस्य प्रथमसर्गे [ १--१६ ] माघस्य चतुर्थे [२--६८] किरातस्य पञ्चमे [ १--१५ ] च । ऋतवो वसन्तादयः । तद्वर्णनं यथा शिशुपालवधे षष्ठसर्गे किरातार्जुनीयस्य चतुर्थदशमसर्गयोः कुमारसंभवस्य तृतीयसर्गे रघुवंशस्य चतुर्थनवमषोडशसर्गेषु च । चन्द्रार्कौ चन्द्रसूर्यौ तयोरुदयः इदमस्तस्याप्युपलक्षणम् । एतयोर्वर्णनं किराते नवमसर्गे माघे नवमैकादशसर्गयोस्तथान्यत्रापि द्रष्टव्यम् । उद्यानमुपवनम् सलिलं सलिलाधारः सरित्सरोवरादिः तत्र क्रीडा । तद्वर्णनं माघकिरातयोरष्टमसर्गादिषु । मधुपानं मदिरासेवनम् । तद्वर्णनं किरातार्जुनीये नवमसर्गे शिशुपालवधे च दशमसर्गे तथान्यत्रापि । रतं संभोगशृङ्गारः तस्योत्सवो विलासः ।

---

* वर्णनीयानां विशिष्यवर्णनप्रकाराः कविसमयसिद्धाः केचन निरूप्यन्ते—**नृपे** विद्या नयः शक्तिर्बलं तस्करताक्षमः । प्रजाशास्तिः प्रजारागो धर्मकामार्थतुल्यता ॥ प्रयाणरणखड्गादिशस्त्राण्यरिपराजयः । अरिनाशोऽरिशैलादिवासोऽरिपुरशून्यता ॥ महःश्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम् **महामात्ये** नयः शास्त्रं धैर्यं बुद्धिर्गभीरता ॥ शक्तिः शस्त्रमलोभत्वं जनरागो विवेकिता । **पुरोहिते** स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया ॥ दण्डनीतिज्ञता शुद्धिर्धर्मशालकुलक्रमाः । **देव्यां** विज्ञानचातुर्यं त्रपाशीलवतादयः ॥ रूपलावण्यसौभाग्यप्रेमशृङ्गारमन्मथाः । वेणीधम्मिल्लसीमन्तभालश्रवणनासिकाः ॥ कपोलाधरनेत्रभ्रूकटाक्षदशनोक्तयः । कण्ठचचुकरोरोजनाभ्यो मध्यं वलित्रयम् ॥ रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात् । **कुमारे** शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः ॥ बाह्यालीखुरलीराजभक्तिः शुभगतादयः । **सेनापतौ** महोत्साहः स्वामिभक्तिरभीरुता ॥ अभ्यासो वाहने शास्त्रे शस्त्रे च विजयो रणे । **देशे** बहुखनिद्रव्यपण्यधान्याकरोद्भवाः ॥ दुर्गग्रामजनाधिक्यनदीमातृकतादयः । **ग्रामे** धान्यलतावृक्षसरसीपशुपुष्टयः ॥ क्षेत्रारघट्टकेदारग्रामेयीमुग्धविभ्रमाः । **पुरे** ऽट्टपरिखावप्रप्रतोलीतोरणादयः ॥ प्रासादाध्वप्रपारामवाप्यो वेश्या सतीत्वरी । **सरस्यम्भो**लहर्यम्भोगजाद्यम्बुजषट्पदाः । हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः । **अब्धौ** द्वीपाद्रिरत्नोर्मिपोतयादोजगत्प्लुवाः ॥ विष्णुकुल्यागमश्चन्द्राद्वृद्धिरौर्वाब्दपूरणम् । **सरित्यम्बु**धियायित्वं वीच्यो जलगजादयः ॥ पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः । **उद्याने** सरणिः सर्वफलपुष्पलताद्रुमाः ॥ पिकालिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः । **शैले** मेघौषधीधातुवंशकिंनरनिर्झराः ॥ शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः । **अरण्ये**हिवराहेभयूथसिंहादयो द्रुमाः । काकोलूककपोताद्या भिल्लभल्लद्रवादयः । **आश्रमे**ऽतिथिपूजैणविश्वासो हिंस्रशान्तता ॥ यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः । **मन्त्रे** पञ्चाङ्गता.

**विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।**

तद्वर्णनं रघुमाघकिरातादिसर्वकाव्येषु । अयं संभोगशृङ्गारो विप्रलम्भशृङ्गारानन्तर-
१५मेव वर्णितः शोभातिशयं पुष्णाति । तदुक्तं सरस्वतीकण्ठाभरणे [ ५–५२ ]—
न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते इति । तृतीयान्तपदानामष्टादशश्लोक-
गतेन अलंकृतम् इतिपदेन संबन्धः ॥ १६ ॥

**विप्रलम्भैरिति** । विप्रलम्भो विप्रलम्भशृङ्गारः । तल्लक्षणं सरस्वतीकण्ठा-
भरणे यथा—

भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ इति । [ ५. ४५ ]

---

शक्तिषाड्गुण्योपायसिद्धयः ।। उदयाश्चिन्तनीयाश्च स्थैर्योन्नत्यादिसूक्तयः । **दूते** स्वस्वामितेजः-
श्रीविक्रमौन्नत्यरुद्वचः ॥ शत्रुक्षोभकरी चेष्टा धार्ष्ट्यं दाक्ष्यमभीरुता ।। **युद्धे** तु वर्मबलवादिरजांसि
21तुर्यविश्वासनादशरमण्डपरक्तनद्यः । छिन्नातपत्ररथचामरकेतुकुम्भिमुक्तासुरीवृतभटामरपुष्पवर्षाः ॥
**प्रयाणे** भेरिनिस्वानभूकम्पबलधूलयः । करमोक्षध्वजच्छत्रवणिक्छकटवेशराः ॥ **मृगयायां**
श्वसंचारो वागुरा नीलवेषता । भटढक्कामृगत्रासः सिंहयुद्धं त्वरागतिः ॥ **अश्वे** खरखुरोत्खातरजः-
24सल्लक्षणस्थितिः । तेजो वेगित्वमौन्नत्यं जातिर्धाराप्रपञ्चनम् ।। **गजे** सहस्रयोधित्वमुच्चत्वं कर्ण-
चापलम् । अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः ॥ **सुरभौ** दोलाकोकिलमारुतसूर्यगतितरुदलो-
द्भेदाः । जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः ॥ **ग्रीष्मे** पाटलमल्लीतापसरःपथिकशोषवाताल्यः ।
27सक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः ॥ **वर्षासु** घनाशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातीकदम्बकेतकझञ्झानिलनिम्नगा हलिप्रीतिः ॥ **शरदीन्दुरविपटुत्वं** जलाच्छतागस्त्यहंसवृष-
दर्पाः । सप्तच्छदपद्मसिताभ्रधान्यशिखिपक्षमदपाताः ॥ **हेमन्ते** दिनलघुता शीतयवस्तम्बमरुबक-
30हिमानि । **शिशिरे** करीषधूमः कुमुदाम्बुजदाहशिखिरतोत्कर्षाः ॥ **सूर्येऽरुणता** रविमणिचक्राम्बु-
जपथिकलोचनप्रीतिः । तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुलटार्तिः ॥ **चन्द्रे** कुलटाचक्राम्बुरु-
हविरहिमोहानिरौज्ज्वल्यम् । जलधिजनिनेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥ **विवाहे** स्नान-
33शुभ्राङ्गभूषालूलुत्रयीरवा । वेदीसीमन्ततारेक्षा लाजामङ्गलवर्तनम् ॥ **विरहे** तापनिःश्वासचिन्ता
मौनं कृशाङ्गता । अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्मता ॥ **स्वयंवरे** शचीरक्षामञ्चमण्ड-
पसज्जता । राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम् ॥ **सुरापाने** विकलता स्खलनं वचने गतौ ।
36लज्जा मानच्युतिः प्रेमाधिक्यं रक्तेक्षणभ्रमाः ॥ **पुष्पावचये** पुष्पावचयः पुष्पार्पणेऽर्थिता दयिते ।
मानाद्यं गोत्रस्खलनेर्ष्यावक्रोक्तिसंभ्रमाश्लेषाः ॥ **जलकेलौ** सरःक्षोभचक्रहंसापसर्पणम् । पद्म-
ग्लानिः पयःक्षेपो दृग्रागो भूषणच्युतिः ॥ **सुरते** सात्त्विका भावाः सीत्कारः कुड्मलाक्षता ।
39काञ्चीकङ्कणमञ्जीररवोधरनखक्षते ॥ प्रातः कोकाम्बुजोत्कर्षो **मध्याह्ने** तापसंप्लवः । **सायं**
सूर्यातिलौहित्यं चक्रपद्मादिविप्लवः । **अन्धकारेऽतिसान्द्रत्वं** विश्वलोपसमर्थना । आकस्मिकस-
मारम्भो निःशङ्कमभिसारिकाः ॥ वर्ण्येषु वर्ण्यभावानां दिङ्मात्रमिह दर्शितम् । सुधीभिश्चिन्त्य
42मानानां भवत्येषामनन्तता । इति कविकल्पलतालंकारशेखरादिभ्योऽवगन्तव्याः ॥

**मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥ १७ ॥**
**अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।**

बहुवचनेन तस्य सरस्वतीकण्ठाभरणादिषूक्तं [ ५. ४५ ] पूर्वानुरोगो मानः प्रवासः करुणश्चेति चातुर्विध्यं स्वीकार्यम् । तत्रान्तिमप्रभेदोदाहरणं रघुवंशेज-विलापः। विवाहः पाणिग्रहणसंस्कारः । तद्वर्णनं रघुवंशस्य षष्ठसप्तमयोः कुमार-संभवस्य सप्तमे तथान्यत्र द्रष्टव्यम् । विवादैरिति पाठे विवादो मिथः संभाषणम् यथा रघुवंशे सिंहदिलीपयोः [ २. ३४–५८ ] कुमारोदयः सुतोत्पत्तिः । तद्वर्णनं यथा रघुवंशे तृतीयसर्गे । मन्त्रः प्रधानपुरुषैः सह रिपुजयार्थं गुप्तसंभाषा कार्या-कार्यविचारश्च । स पञ्चाङ्गः । तदुक्तं—

सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ इति ॥

स च किरातप्रथमसर्गे माघद्वितीयसर्गे च द्रष्टव्यः । दूतः प्रेष्यः स च निसृष्टार्थ-मितार्थसंदेशहारकभेदेन त्रिविधः । तत्र निसृष्टार्थ उद्योगपर्वणि वासुदेवः । मितार्थो रामायणेऽङ्गदः । संदेशहारकः कादम्बर्यां केयूरकः । प्रयाणं समराय नगराद्बहि-र्यानम् । तद्वर्णनं यथा शिशुपालवधे सप्तदशसर्गे रघुवंशे चतुर्थसर्गे च । आजिः समरम् । यथा किरातार्जुनीये ( १५–१८ ) शिशुपालवधे ( १९–२० ) रघु-वंशादिषु च । नायकाभ्युदयः तस्य युद्धे विजयप्राप्तिर्यथा शिशुपालवधे श्रीकृष्ण-स्य । इदं मन्त्रादिपञ्चकं क्रमेणैव वर्णनीयम् । तथाहि । आदौ मन्त्रः अनन्तरं दूतप्रेषणम् ततो युद्धाय गमनम् ततः समरः पश्चाद्विजयलाभ इति । अपिना अनुक्तानामपि यज्ञमृगयातपोवनादीनां संग्रहः ॥ १७ ॥

**अलंकृतमिति** । नगरेत्यारभ्याभ्युदयैरित्यन्तानां सर्वेषां तृतीयान्तानाम-लंकृतमित्यनेन संबन्धः । असंक्षिप्तम् अतिसंक्षिप्तवर्णनं न रुचिं जनयतीत्यतः असंक्षिप्तम् संक्षेपरहितम् । संक्षिप्तं तु यथा—

रामो दशरथाज्जातः प्राप्तविद्यश्च कौशिकात् ।
मिथिलायां धनुर्भङ्क्त्वा मैथिलीं परिणीतवान् ॥ इत्यादि ।

रसाः—

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञाश्च··············॥

**सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः[1] सुसंधिभिः ॥ १८ ॥**

९इत्यष्टविधत्वेन नाट्यशास्त्रे [ ६. १५ ] वर्णिताः । क्वचिच्च शान्तोपि नवमः स्मृतः इति रसानां नवविधत्वं प्रोक्तम् । भावाः प्राधान्येनाभिव्यक्ता रसबीजभूता विभावादिभिरपरिपुष्टतया रसस्वरूपतामनापद्यमानाः स्थायिनः । यदुक्तम् साहित्य-
१२दर्पणटीकायां [ ३. २६१ ]—

न भावहीनोस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ॥ इति ।

१५देवमुनिगुरुनृपपुत्रादिविषया रतिर्भावः । कान्तादिविषया व्यक्ता रतिः शृङ्गारः । इति रसभावयोः स्वरूपविवेकः । विस्तरस्तु द्वितीयपरिच्छेदे रसवदलंकारविवेचने द्रष्टव्यः । रसैश्च भावैश्च निरन्तरं परिपूर्णम् । सर्गः प्रधानवृत्तान्ताङ्गभूतोवान्तर-
१८वृत्तान्तनिवेदकः प्रबन्धविशेषः । बहुवचनेन अष्टान्यूनत्रिंशदनधिकत्वं सूचितं भवति । तदुक्तमीशानसंहितायाम्—

अष्टसर्गान्न तु न्यूनं त्रिंशत्सर्गाच्च नाधिकम् ।
२१ महाकाव्यं प्रयोक्तव्यं महापुरुषकीर्तियुक् ॥ इति ।

अनतिविस्तीर्णैः त्रिंशदन्यूनद्विशत्यनधिकपद्यात्मकैरित्यर्थः । वस्तुतस्त्वेतत् सर्वं प्रायिकमेव । वैपरीत्येनापि महाकविसंप्रदायदर्शनात् । श्रव्यवृत्तैः यतिभङ्गहत-
२४वृत्तादिदोषराहित्येन सुवृत्ततिलकोक्तरचनाविशेषेण[*] वा माधुर्यादिगुणसद्भावेन वा श्रुतिसुखदैर्वृत्तैरुपेतम् । तदुक्तम्—

यस्मिन् श्रुते च चित्तस्य वैरस्यं न च द्रवता ।
२७ तानि वर्ज्यानि पद्यानि प्रसिद्धिप्रच्युतानि च । इति ।

---

१ श्राव्य अ. क.

---

* सुवृत्ततिलके द्वितीयविन्यासे वृत्तस्य श्रव्यत्वाश्रव्यत्वविषये कतिचन नियमाः प्रदर्शितास्ते यथा—सममासैर्लघुवृत्तानामसमासैर्महीयसाम् । शोभा भवति भव्यानामुपयोगवशेन
3वा ॥ उपजातिविकल्पानां सिद्धो यद्यपि संकरः । तथापि प्रथमं कुर्यात् पूर्वपादाक्षरं लघु ॥ गुर्वक्षरेण संवृद्धं ग्रन्थियुक्तमिवाग्रतः । करोति प्रथमं स्थूलं किंचित् कर्णकदर्थनाम् ॥ त्र्यक्षरैस्त्र्यक्षरैरेव च्छेदैराभाति **दोधकम्** । अतोल्पैराधिकैर्वापि यतिं तालमिवोज्झति ॥ शत्रन्ताक्षर-
6संयोगैः किंचित्कार्कश्यकारिभिः । अन्ते विसर्जनीयैश्च **शालिनी** याति दीप्तताम् ॥ विसर्गयुक्तैः पादान्तैर्विराजति **रथोद्धता** । कलापरिचयैर्याता लटभेव प्रगल्भताम् ॥ साकाराद्यैर्विसर्गान्तैः

**सर्वत्र भिन्नवृत्तान्तै[१]रुपेतं लोकरञ्जनम्[२] ।**

सुसंधिभिः सुश्लिष्टसंधानैः पूर्वसर्गान्तेन उत्तरसर्गोपक्षेपकैरित्यर्थः । यथोक्तं साहित्यदर्पणे ( ६. ३२१ )—सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेदिति । ३० अथवा संधिपदेनात्र नाट्यशास्त्रोक्तानां [ १९. ३५ ] मुखप्रतिमुखगर्भविमर्शनिवर्हणानां ग्रहणम् । तेषां यथा नाटके तथा काव्येपि विधेयत्वात् । तेषां सुश्लिष्टत्वं च साङ्गानां तेषां यथाक्रमं विनिवेशः । केचित् तु संधिपदमञ्झल्संधिपरं व्याख्यान्ति । तेन च— ३३

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥

३६ इत्यादिश्रुतिकटुसंधिपरिहारः क्रियते । सर्गैरित्यादितृतीयान्तानामग्रिमश्लोकस्थितेनोपेतमितिपदेन संबन्धः ॥ १८ ॥

**सर्वत्रेति** । तथा च सर्वत्र अव्यभिचारेण । भिन्नवृत्तान्तैः भिन्नानि पूर्वक्रमतः पृथग्भूतानि यानि वृत्तानि च्छन्दांसि तैरन्तः समाप्तिर्येषां तैस्तादृशैः सर्गै-

१ °सर्गान्तैः अ. कपा. २ °रञ्जकम् ब. कपा.

सर्वपादैः सविश्रमा । स्वागता **स्वागता** भाति कविकर्मविलासिनी ॥ द्रुतनाललयैरेव व्यक्तं 9 रूक्षाक्षरैः परैः । प्रगनंयति यच्चित्तं तत् **तोटकम**भीप्सितम् ॥ असमस्तपदैः पादसंधिविच्छेदसुन्दरम् । सर्वपादैर्विसर्गान्तै**र्वंशस्थं** यात्यनर्घताम् ॥ प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम् । विच्छित्त्या सर्वपादानां भाति **द्रुतविलम्बितम्** ॥ आकारमन्थरैः प्रायः पादे 12 पादेक्षरैस्त्रिभिः । शेषाक्षरैर्द्रुततरैः प्रहर्षाय **प्रहर्षिणी** ॥ **वसन्ततिलक**स्याग्रे साकारे प्रथमाक्षरे । ओजसा जायते कान्तिः सविकासविलासिनी ॥ आकारेपि कृते पूर्वं बन्धेल्पपदपेशले । **वसन्ततिलकं** धत्ते निर्ग्रन्थिरमणीयताम् ॥ विसर्गहीनपर्यन्ता **मालिनी** न विराजते । चमरी 15 छिन्नपुच्छेव वल्लीवालूनपल्लवा ॥ द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा । प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता ॥ प्रथमं द्व्यक्षरैश्छेदैस्ततस्त्रिचतुरक्षरैः । पञ्चाक्षरैश्च पर्यन्ते **नर्कुटं** याति चारुताम् ॥ असमानैः पदैर्भाति **पृथ्वी** पृथ्वी पृथक्स्थितैः । समासग्रन्थिभिः 18 सैव याति संकोचखर्वताम् ॥ पृथ्वी साकारगम्भीरैरोजःसर्जिभिरक्षरैः । समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम् ॥ त्वरातरलविच्छेदैर्विभाति **हरिणी** पदैः । मन्थरैर्ग्रन्थिबद्धेव याति निष्पन्दसंगताम् । त्रिषु पादेषु विश्रान्तिविलासैर्ललिता पदैः । अन्ते तरङ्गितगतिर्हरिणी हारिणितराम् । 21 **शिखरिण्याः** समारोहात् सहजैवोजसः स्थितिः । सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम् ॥

**काव्यं कल्पान्तरस्थायि जायते सदलंकृति ॥ १९ ॥**

**न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।**

३रुपेतम् । भिन्नसर्गान्तैरिति पाठे भिन्नः भिन्नवृत्तग्रथितः सर्गान्तो येषां तैरिति विग्रहेणायमेवार्थः । यथोक्तं दर्पणे [ ६. ३२० ]--एकवृत्तमयैः पद्यैरवसानेन्य-वृत्तकैः । इति । एकवृत्तमयत्वं चात्र प्रायिकम् । नानावृत्तमयत्वमपि सर्गस्य ६दृश्यते । यथा शिशुपालवधे चतुर्थः सर्गः किरातार्जुनीये च पञ्चमः । सदलंकृति सत्यः शब्दार्थरामणीयकत्वेन रसोल्लासिका अलंकृतयः शब्दार्थालंकारा यस्मिंस्तत्। इत्थं महाकाव्यलक्षणमुक्त्वा लोकरञ्जनं कल्पान्तरस्थायि इति विशेषणद्वयेन तत् ९प्रशंसति । एवंगुणविशिष्टं काव्यं लोकरञ्जनम् सदस्यानां मनोविनोदास्पदं सत् कल्पान्तरस्थायि अन्यकल्पपर्यन्तं स्थितिमत् चिरस्थायीत्यर्थः । जायेत भवेत् । अनेन चिरंतनकीर्तिप्रत्याशया कविभिरत्र प्रयतनीयमिति ध्वनितम् ॥ १९ ॥

महाकाव्यस्य लक्षणतयोक्तानां केषांचिद्धर्माणां खण्डकाव्येपि सत्त्वात् तदतिव्याप्तिवारणाय सर्वेषामपि तेषां समुदितरूपावस्थानत्वेन महाकाव्यलक्षणे ३निवेशः कृतश्चेत् कुत्रचित् तेषां न्यूनत्व आपतन्तीमव्याप्तिं परिहरन्नाह--**न्यून-मिति** । अथ पूर्वोक्तेष्वङ्गेषु कैश्चिदङ्गैर्न्यूनमपि विकलमपि । काव्यम् । महाकाव्यम् न दुष्यति अङ्गहीनत्वेन दूष्यं न भवति । यदि उपात्तेषु यथासामर्थ्यं वर्णितेषु ६अङ्गेषु । संपत्तिः शब्दार्थालंकारगुणगरिमा रसपरिपोषो वा । तद्विदः साहित्य-शास्त्रकोविदान् । आराधयति प्रमोदयति । यथोक्तं भोजराजेन [ ५. १३५ ]

नावर्णनं नगर्यादेर्दोषाय विदुषां मतम् ।

९ यदि शैलर्तुरात्र्यादेर्वर्णनेनैव तुष्यति ॥ इति ।

---

शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते । मुक्तालताया निःसूत्रमुक्तैर्मुक्ताफलैरिव ॥ मन्थराक्रान्तविश्रब्धैश्चतुर्भिः प्रथमाक्षरैः । मध्यषट्केतिचतुरे मन्दाक्रान्ता विराजते ॥ साकाराद्यक्षरैः 24पादपर्यन्तैः सविसर्गकैः । शार्दूलक्रीडितं धत्ते तेजोजीवितमूर्जितम् ॥ विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव । शार्दूलक्रीडितं याति पाठे सायासतामिव ॥ विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् । शार्दूलक्रीडितं भाति विपरीतमतोधमम् ॥ आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वाति-27शायिनोः । शार्दूलक्रीडितं धत्ते मध्ये सद्गौरवोन्नतिम् ॥ आद्यन्ताकारविरहात् पर्यन्ते चावि-सर्गतः । शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ॥ आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी । असंस्यूतविरामा च राजते स्रग्धरा तराम् । आद्यन्ताकारविरहाद्बन्धदोषः स्फुटोपि यः । अविलुप्तै-30र्विसर्गान्तैः स्रग्धरायां समीहते ॥ इति । एतेषां उदाहरणप्रत्युदाहरणानि मूल एव द्रष्टव्यानि । विस्तरभयान्नात्र निर्दिश्यन्ते ।

यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥ २० ॥[1]
गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ २१ ॥
वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।

अयं भावः नगर्यादिवर्णनं रसपरिपोषाय । स चेत् परिपोषः शैलवर्णनेनैव स्यात तर्हि नगर्यादिवर्णनमकिंचित्करमिति । एतेन वर्णनचमत्कृतिविशेषै रसपरिपोष एव १२काव्यलक्षणमिति फलितम् । नगरादिवर्णनं तु केवलं तत्परिचायकम् । खण्ड काव्यमहाकाव्ययोश्चमत्कारो भिन्न इति पूर्वोक्ता नाव्याप्त्यतिव्याप्तिशङ्कापीति ज्ञेयम् ॥ २० ॥

काव्यं चतुरोदात्तनायकमिति [ १. १५ ] कथितम् । नायकशब्देन तदुच्छेद्यः प्रतिनायकोप्युपलक्षितः । नायकप्रतिनायकयोरुत्कर्षापकर्षौ काव्ये वर्ण-३नीयौ । तत्र वर्णनप्रकारद्वयं निर्दिशति—**गुणत इति** । प्राक् प्रथमम् । गुणतः नेता विनीत इत्यादिपूर्वोक्त[ १. १५ ]गुणैः । नायकम् कथाप्रधानपुरुषम् । उपन्यस्य वर्णयित्वा । तेन नायकेन । विद्विषाम् तच्छत्रुभूतोद्धतप्रतिनायकानाम् । ६बहुवचनं तदनुसारिपुरुषानुरोधेन । निराकरणम् समुच्छेदः । इत्येष मार्गः इयं पद्धतिः । प्रकृतिसुन्दरः स्वभावमनोहरा । तथाहि । काव्यस्य प्रधानोद्देश्यं सदुपदेशः । स च सत्पुरुषाभ्युदयासत्पुरुषविनिपातवर्णनेन भवति । तदर्थं तावुभौ ९यथाक्रमं वर्णनीयौ । यथा रामायणे श्रीरामभद्रगुणवर्णनपुरःसरं दशाननदुर्विनय-वर्णनम् । एतादृशं काव्यं सकललोकानां शुश्रूषणीयम् । श्रुतं च तच्छ्रोतॄन् सन्मार्गप्रवणान् करोति । अतः प्रकृतिसुन्दरोयं मार्ग इति भावः ॥ २१ ॥

वर्णनस्य प्रकारान्तरं दर्शयति—**वंशवीर्येति** । रिपोः शत्रोः प्रतिनायकस्य । वंशः सत्कुलं वीर्यं पराक्रमः श्रुतं विद्या एते आदयो येषां ते दाननीत्यु-३त्साहादयः तान् । वर्णयित्वा काव्ये सम्यक्तया निबध्य । तान् समीचीनतया प्रतिपाद्येत्यर्थः । तज्जयात् तादृशोत्कर्षशालिनः प्रतिनायकस्य तत्कर्मकाज्जयात् । नायकस्योत्कर्षकथनम् विजयवर्णनम् । नः अस्मान् । धिनोति प्रीणाति । यथा ६किरातार्जुनीये दुर्योधननीतिवर्णनपुरःसरं पाण्डवानामुत्कर्षकथनम् । ननु लुब्धो

[1] यद्युपात्तार्थसंपत्तिः चपा.

**तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥ २२ ॥**

**अपादः पदसन्तानो गद्यमाख्यायिका कथा ।**

**इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ॥ २३ ॥**

धीरोद्धतः स्तब्धः पापकृद्व्यसनी रिपुः [ द. रू. २. ९ ] धीरोद्धतः पापकारी व्यसनी प्रतिनायकः [ सा. द. ३. १३० ] अन्यायवांस्तदुच्छेद्य उद्धतः प्रति-९नायक इत्यादिना कथितस्य प्रतिनायकलक्षणस्य विरुद्धमेतदिति चेन्न । यद्यपि सद्गुणवतो धार्मिकस्य प्रतिनायकस्य पराजयेन नायकोत्कर्षासंभवः । प्रत्युत तस्य निन्दनीयत्वापत्तिस्तथापि परपीडादिदोषसामान्याधिकरण्येन केषांचित् कुलीनत्वा-१२दिदैवागतगुणानां प्रतिनायके वर्णनं तन्निन्दादाढर्यार्थमेवेति मन्तव्यम् । धिनोति नः इत्यनेनात्र स्वरुचिः प्रदर्शिता । तद्बीजं त्वस्मिन् मार्गे वास्तवस्यानपलापो भवति । तथा प्रतिनायकवर्णनपूर्वकनायकोत्कर्षवर्णनेन कविप्रतिभाचमत्कारः स-१५विशेषं परिस्फुटो भवतीति च ज्ञेयम् ॥ २२ ॥

उद्देशक्रमप्राप्तं गद्यं निरूपयति—**अपाद इति** । पादो गणमात्रानिबद्धो गद्यतुरीयांशः तच्छून्यः अपादः । गणमात्रानिर्बन्धशून्य इत्यर्थः । एतादृशः पद-३संतानः सुप्तिङन्तपदचयो गद्यम् । अस्य च मुक्तकं वृत्तगन्धि चूर्णकमुत्कलिका-प्रायं चेति चत्वारः प्रभेदाः सन्ति । परं तेषां कथाख्यायिकादावन्तर्भावो भवतीति न तेत्र पृथक्तया दर्शिताः । तेषां लक्षणान्युदाहरणानि च साहित्यदर्पणादौ ६[ ६. ३३१ ] द्रष्टव्यानि । तस्य गद्यप्रबन्धस्य च पुनः आख्यायिका कथा चेति द्वौ प्रभेदौ स्तः । तत्र प्राचीनमतानुसारेणानयोर्लक्षणमनूद्य तत्र स्वारुचिं प्रकटयति किं हि न स्यात् कृतात्मनाम् [ १. ३० ] इत्यन्तेन ग्रन्थसंदर्भेण । ९किलेति पूर्वाचार्याणां मतभेदप्रदर्शनार्थं स्वासंमतिप्रकटनार्थं वा । तत्र प्राचीनमता-नुसारिणा भामहेनानयोर्लक्षणमुक्तं यथा—

प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना ।
१२ गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।
वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥

---

१ °वर्णनं ब, कपा.

**नायकेनैव वाच्यान्या नायकेनेतरेण वा।**
**स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः ॥ २४ ॥**
**अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।**

१५ कवेरभिप्रायकृतैरङ्कनैः कैश्चिदङ्किता।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥
न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि।
१८ संस्कृतं संस्कृता चेष्टा कथापभ्रंशभाक् तथा ॥
अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥
२१ अनिबन्धं पुनर्गाथाश्लोकमात्रादि तत् पुनः।
युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ॥ [१. २५–३०] इति।

इत्थमेव चानयोर्लक्षणं साहित्यदर्पणकारादिभिः [ ६. ३३० इत्यादिषु ] स्वस्व-
२४ग्रन्थेषु संगृहीतम् ॥ २३ ॥

तत्र प्राचीनाचार्यैः कृतं कथाख्यायिकयोर्भेदमादौ दर्शयति—**नायके-नैवेति**। तयोः कथाख्यायिकयोर्मध्ये आख्यायिका नायकेनैव स्वमुखेन वाच्या।
३एवकारोन्ययोगव्यवच्छेदार्थः। अन्या कथा नायकेन इतरेण वा अन्येन केनापि पुरुषेण च वाच्या। अत्र वाशब्दः समुच्चयार्थो न विकल्पार्थः। तथा च कथायां कश्चिदंशो नायकेन स्वमुखेन वाच्यः कश्चिच्चान्येनेति गम्यते। विकल्पार्थकवा-
६शब्दस्वीकारे तु आख्यायिकायामपि कथालक्षणमतिव्याप्तं स्यात्। एतत् कथाया उभयवाच्यत्वम् नायकेन तु नोच्यत इत्यादिभामहमतविरुद्धम्। स च स्वयमेव नायकेन निजवृत्तशंसनं आत्मविकत्थनादोषः स्यादिति स्वगुणाविष्कृतिं कुर्यादभि-
९जातः कथं जनः इत्यादिप्रबन्धेन निर्दिशति। तद्दोषमगणयन्नाह **स्वगुणेति**। भूतार्थ-शंसिनः यथार्थवादिनः नायकस्य स्वगुणाविष्क्रिया निजगुणप्रथनं दोषो न। न दोषाय भवतीत्यर्थः। अयं भावः। असति प्रसङ्गेतिशयोक्तिपूर्वकं स्वगुणख्यापनं
१२दोषाय न तु सति प्रसङ्गे वास्तवगुणवर्णनम् ॥ २४ ॥

अत्रार्थे किलशब्दोद्भावितां स्वासंमतिं दर्शयति—**अपि त्वनियम इति**।

---

१ –नायकाद्दितरेण अ. २ –नेह अ.

**अन्यो वक्ता स्वयं वेति कीदृग्वा भेदकारणम् ॥ २५ ॥**
**वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् ।**
**चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ॥ २६ ॥**

अपि तु किंतु तत्र आख्यायिकात्वेन प्रसिद्धेषु प्रबन्धेष्वन्यैरुदीरणं नायकभिन्नैरपि ३वृत्तकथनं क्वचिद्दृश्यते । तस्मान्नायकेनैव वाच्येति नियमस्य व्यभिचरितत्वान्नेदं लक्षणं युक्तमिति भावः । ननु नायकभिन्नेनोदीरणात् तत्र कथात्वमेवास्तु मा भूदाख्यायिकात्वमिति चेत् । अन्यो वक्ता स्वयं वेति एतावदेव भेदकारणम् कथा-६ख्यायिकाभेदकारणम् कीदृक् । सर्वथाकिंचित्करं तत् । स्वरूपगतवैलक्षण्येनैव काव्यस्य भेदो युक्तो न तु वक्तृगतभेदेन । एवंविधाचमत्कृतभेदघटितकाव्यभेद-स्वीकारे काव्यप्रभेदानामानन्त्यापत्तेः । तस्माद्वक्तृभेदेन भेदकरणं प्राचां न युक्त-९मिति भावः ॥ २५ ॥

इत्थं वक्तृवैलक्षण्येन काव्यभेदकरणं निरस्येदानीमपरमपि कथाख्यायि-कयोर्भेदकद्वयं निराकरोति– **वक्त्रं चेति** । वक्त्रलक्षणं वृत्तरत्नाकारे [ २. २१ ] ३यथा—वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । इति । तदुदाहरणं च—

नवधाराम्बुसंसिक्तं वसुधागान्धिनिःश्वासम् ।
किंचिदुन्नतघोणाग्रं मही कामयते वक्त्रम् ॥ इति ।

६अपरवक्त्रलक्षणं वृत्तरत्नाकरे [ २. ९ ] यथा—अयुजि ननरला गुरुः समे न्जमपरवक्त्रमिदं तजौ जरौ । तदुदाहरणं तु—

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् ।
९ मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः ॥ इति ।

एवं वक्त्रापरवक्त्रे वृत्तविशेषौ । तथा सोच्छ्वासत्वम् उच्छ्वासः प्रबन्धांशव्यवच्छेद-स्येयं संज्ञा तत्सहितत्वं च । भेदकं चिह्नम् । आख्यायिकायाः कथातो भेदसाध-१२कम् । वक्त्रापरवक्त्रे आख्यायिकास्वेव न कथासु युज्येते तथोच्छ्वासादिपरिगण-नमाख्यायिकापरिच्छेदानामेव न पुनः कथापरिच्छेदानां क्रियत इति चेत् तन्न विचारक्षमम् । तत्र तावद्वक्त्रापरवक्त्रकृतं भेदं दूषयति प्रसङ्गेनेत्यादिना श्लोक-१५तुरीयांशेन उत्तरश्लोकस्य पूर्वार्धान्वयिना ॥ २६ ॥

---

१ –°लक्षणम् ब, कपा.

**आर्यादिवत् प्रवेशः[1] किं न वक्त्रापरवक्त्रयोः ।**
**भेदश्च दृष्टो लम्भादिरुच्छ्वासो[2][3] वास्तु किं ततः ॥ २७ ॥**
**तत् कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता ।**

**आर्यादिवदिति** । कथास्वपि प्रसङ्गेन आर्यादिवत् वक्त्रापरवक्त्रयोः प्रवेशः किं न स्यात् । अयं भावः । स्मृतस्य अनुपेक्षणं प्रसङ्गः । तेन कदा-३चिदार्यानिबन्धने प्रसक्तः कविर्वक्त्रापरवक्त्रस्मरणेन तन्निबन्धनं कुर्याच्चेत् तत् किं कथा दोषास्पदं भवेत् तेन च कथायाः कथात्वं कथं विघटेत । वक्त्रापरवक्त्रशून्यैव भवतीत्येतद्विषये नार्षं प्रमाणं क्वपि विद्यते न च तथा कविपरिपाटिरपि दृश्यते । ६अत एव साहित्यदर्पणे प्रोक्तम् [ ६. ३३५ ] आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् । इति । इदानीं सोच्छ्वासत्वस्य भेदकत्वं दूषयति— **भेदश्चेति** । लम्भः कथापरिच्छेदस्येयं संज्ञा । आदिपदेन लम्बकोछ्वासतरङ्गादीनां ग्रहणम् । वाशब्दः ९समुच्चयार्थे । लम्भादिः उच्छ्वासश्च कथाख्यायिकयोर्भेदः व्यावर्तको विशेषः दृष्टः इति चेत् अस्तु किं ततः । परिच्छेदसंज्ञामात्रभेदो न काव्यभेदसाधको भवति । अयं भावः । कथायां परिच्छेदस्य लम्भ इति संज्ञा विहिता आख्यायिकायामु-१२च्छ्वास इति निश्चितेति चेत् भवतु नाम परिच्छेदानां लम्भोच्छ्वासादिसंज्ञाभेदः । नहि तावता पदार्थभेदो भवति । नहि घटकलशेति संज्ञाद्वयेन पदार्थभेदो भवति । स्वरूपवैलक्षण्येनैव पदार्थभेदो घटते यथा घटपटयोः । एवं कथाख्यायिकयोरव-१५यवीभूतानां परिच्छेदानां नहि संज्ञामात्रभेदेन स्वरूपभेदः प्रतीयते । तेन च अवयविनोः कथाख्यायिकयोरपि न तावता स्वरूपभेदः वक्तुं पार्यते । केचित्तु श्लोकस्य उत्तरार्धमेवं विवृण्वन्ति—कथायां लम्भादिः लम्भादिसंज्ञकः भेदः कथां-१८शविभागः दृष्टः । स विभागः उच्छ्वाससंज्ञकः वा विकल्पेन कथायामस्तु भवतु नाम । किं ततः तेन का क्षतिः । नहि तावता कथाख्यायिकयोर्भेदो भवितुमर्हति । पदार्थस्याभिन्नत्वादिति । अस्यापि विवरणस्य तात्पर्यं पूर्वोक्तमेव ॥ २७ ॥

एवं प्राचीनकृतं कथाख्यायिकालक्षणं दूषयित्वा स्वमतं निवेदयति— **तदिति** । तत् तस्मात् स्वरूपवैलक्षण्याभावात् कथा आख्यायिका इति च एका

---

१ – प्रयोगः अ.

२ –लम्बादिर् ब. ३ – उच्छ्वासो इत्यत्र अदृष्टो अ.

**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ॥ २८ ॥**

**कन्याहरणसंग्रामविप्रलम्भोदयादयः ।**

३जातिः गद्यरूपैकधर्मत्वेन एक एव प्रकारः । सा च कथा च आख्यायिका चेति नामद्वयेन घटकलशौ इति वत् अङ्किता चिह्निता वर्तते इति भावः । एवं कथाख्यायिकयोः प्रधानं भेदं निरस्य अन्यैरुक्तानन्यानपि भेदान् भेदप्रयोजकधर्ममप६श्यन् दूषयति अत्रैवेति । अत्रैव कथाख्यायिकयोरन्यतमायामेव शेषाः उक्तादन्याः आख्यानजातयः पुंप्रधानवर्णनमाख्यानं तज्जातयः प्रकाराः अग्निपुराणादिषु ( ३३७. १२ ) वर्णिताः खण्डकथादयः । अन्तर्भविष्यन्ति अत्रैव तेषां समावेशः ९स्यादिति न ते पृथङ्निर्देशमर्हन्ति ॥ २८ ॥

कन्याहरणसंग्रामविप्रलम्भोदयान्विता । ( भा० १–२७ ) एवं प्राचीनैः कन्याहरणादीनि आख्यायिकायां वर्णनीयत्वेन निर्दिष्टानि न तु कथायामिति ३वर्णनीयभेदेन आख्यायिकायाः कथातो भेद इति चेत् तदपि न समञ्जसमिति दर्शयति—**कन्याहरणेति** । कन्यायाः अजातविवाहसंस्कारायाः पुरुषविशेषे प्रतिपादनाय कृतनिश्चयाया हरणं युद्धादिना हठाद्ग्रहणं राक्षसविवाह इत्यर्थः । ६तदुक्तं भगवता मनुना

हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं हठात् ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥ ( ३. ३३ ) इति ।

९संग्रामः समरकर्म । स त्रिधा समः विषमः समविषम इति । तत्र समः द्वन्द्वयुद्धे चतुरङ्गयुद्धे च । द्वन्द्वयुद्धं यथा रामरावणयोः । चतुरङ्गयुद्धं कुरुपाण्डवानाम् । विषमो यथा रामस्य खरदूषणत्रिशिरोभिः सह । समविषमो यथा महेश्वरार्जुनयोः १२किरातार्जुनीये । रघुमघोनोर्वा रघुवंशे । विप्रलम्भः—

पूर्वानुरागमानात्मप्रवासकरुणात्मकः ।
विप्रलम्भश्चतुर्धा स्यात् पूर्वपूर्वो ह्ययं गुरुः ॥ ( ५. १७ ) इति

१५वाग्भटालंकारोक्तः चतुर्विधः । अयं च संभोगस्याप्युपलक्षकः । तदनन्तरं संभोगवर्णनस्यावश्यकत्वात् । उदयः शशिदिवाकरयोरुदयः । अथवा नायकस्योत्कर्षः । आदिना पुरपर्वतकाननादिवर्णनं ग्राह्यम् । एते गुणाः सर्गबन्धसमा १८एव महाकाव्यसदृशा एव । अयं भावः । एते गुणाः पद्यप्रबन्धविशेषमहाकाव्य-

**सर्गबन्धसमा एव नैते[1] वैशेषिका गुणाः ॥ २९ ॥**

**कविभावकृतं चिह्नमन्यत्रापि[2] न दुष्यति ।**

**मुखमिष्टार्थसंसिद्धौ[3] किं हि न स्यात् कृतात्मनाम् ॥ ३**

**मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः ।**

समानाः किमुत तर्हि गद्यप्रबन्धातर्गतकथासमाना इति । अत एते गुणाः कथातः आख्यायिकायाः अवच्छेदकाः न भवन्तीत्यर्थः ॥ २९ ॥

इदानीं कवेरभिप्रायकृतैः कथनैः कैश्चिदङ्किता । (भा. १—७) इति कवेरभिप्रायकृतेन केनचिद्विशेषेण अङ्कनाचिह्नेन कथा आख्यायिकातो भिन्ना स्यादिति प्राचां ३मतमप्यसमञ्जसमित्याह—**कविभावेति**। कविभावकृतम् कवेर्भावोभिप्रायः तेन कृतं चिह्नम् यथा शिशुपालवधे सर्गान्तश्लोकेषु श्रीशब्दनिवेशात् तच्छ्र्यङ्कम् किरातार्जुनीये तथैव लक्ष्मीशब्दनिवेशात् तल्लक्ष्म्यङ्कम् । एवमेव विष्णुजयो विष्णवङ्कः सेतुबन्धः ६अनुरागाङ्कः सुमध्वविजय आनन्दाङ्कः इत्याद्यूहनीयम् । एतदेव अङ्कनं कथायाः आख्यायिकातो भेदकारणं भवेत् इति चेन्न । तदेतच्चिह्नम् अन्यत्रापि आख्यायिकादौ कृतं चेन्न दुष्यति दुष्टं न भवति । तस्य कवेरभिप्रायाधीनत्वात् । कृतात्मनाम् ९सूरिणाम् । इष्टार्थसंसिद्धौ मङ्गलाद्यभिप्रेतार्थसंपादने । मुखम् उपाय आरम्भो वा । किं न स्यात् । स्वेच्छया किमपि स्यादिति भावः । सुखमितिपाठे सुखदम् अनायासकरमिति भावः । कवीनां निरङ्कुशत्वेन ते स्वेच्छया अभिलषितं संपादये-१२युरिति रहस्यम् ॥ ३० ॥

अथेदानीं क्रमप्राप्तं मिश्रकाव्यं निरूपयति—**मिश्राणीति** । नाटकादीनि दृश्यकाव्यानि मिश्राणि मिश्रसंज्ञकानि । आदिशब्देन प्रकरणादीनां संग्रहः । तदुक्तं ३दशरूपके—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा दश ॥( १. ८ ) इति* ।

१ — न ते, अ. कपा.
२ अन्यद्वापि अ. ३ संसिद्ध्ये ब.

* एतेषां लक्षणानि नाट्यशास्त्रे यथा — प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव । राजर्षिवंशचरितं तथा च दिव्याश्रयोपेतम् ॥ नानाविभूतिसंयुतमृद्धिविला-

**गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते ॥ ३१ ॥**

६तेषां दृश्यकाव्यानां अन्यत्र नाट्यशास्त्रादौ विस्तरः प्रपञ्चोऽस्ति । अतस्तत एव तान्यवगन्तव्यानि इति भावः । श्रव्यमिश्राणि कथयति **गद्यपद्येति** । काचिद्गद्य-पद्यमयी गद्यपद्यप्रचुरा मिश्ररचना चम्पूरिति अभिधीयते कथ्यते । अत्र पद्यप्राचुर्यं ९गद्यसमकक्षतया अपेक्ष्यते । अन्यथा आख्यायिकादावापि किंचित्पद्यसद्भावेन तस्या अपि मिश्रसंज्ञात्वं प्रसज्येत । काचिदित्युक्त्या सर्वो गद्यपद्यमयः प्रबन्धः चम्पूर्भवितुं नार्हति तादृशप्रबन्धस्य राजस्तुतौ बिरुदसंज्ञात्वात् । तदुक्तं—गद्य-१२पद्यमयी राजस्तुतिर्बिरुदमुच्यते । इति । ( साहित्यदर्पण ६–२७ ) अत्र मिश्रा-

१ – पद्यगद्यमयी कपा, २ वाणी अ. कपा. ३ --अपि विद्यते कग.

3सादिभिर्गुणैश्चापि । अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥ प्रकरणम्--यत्र कविरात्म-बुध्या वस्तु शरीरं च नायकं चैव । औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥ यदनर्थ-मपाहार्यं कार्यं कुरुते प्रभूतगुणयुक्तम् । उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ 6यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च । तत् प्रकरणेपि योज्यं सलक्षणं सर्वसंधिषु तु ॥ विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् । चरितं यत्रैकविधं ज्ञेयं तत् प्रकरणं नाम ॥ नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः । बाह्यजनसंप्रयुक्तं ज्ञेयं तत् प्रकरणं 9नाम ॥ दासविटश्रेष्ठियुतं वेषस्त्र्युपचारकारणोपेतम् । मन्दस्त्रीकुलचरितं काव्यं कार्यं प्रकरणे तु ॥ भाणः--आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषेतु । द्विविधाश्रयो हि भाणो विज्ञेयस्त्वे-कहार्यश्च ॥ परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः । आकाशपुरुषकथितैरङ्गविकारैर-12भिनयैश्चापि ॥ धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव । एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ प्रहसनम्--प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम् । वक्ष्यामि तयोर्युक्त्या पृथक् पृथग्लक्षणविशेषम् ॥ भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् । कापुरुष-15संप्रयुक्तं परिहासाभाषणप्रायम् ॥ अविकृतभाषाचारं विशेषभावोपपन्नरचितपदम् । नियतगति-वस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ वेश्या चेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः । अनिभृत-वेषपरिच्छदचेष्टितकरणैस्तु संकीर्णम् ॥ डिमः--प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव । 18षट्त्रिंशल्लक्षणयुक् चतुरङ्को वै डिमः कार्यः ॥ शृङ्गारहास्यवर्जं शेषैरन्यै रसैः समायुक्तः । दीप्तरसकाव्ययोनिर्नानाभावोपसंपन्नः ॥ निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः । युद्धनियुद्धा-घर्षणसंफेटकृतश्च कर्तव्यः ॥ मायेन्द्रजालबहुलो बहुपुरुषोत्थानयुक्तश्च । देवभुजगेन्द्रराक्षसयक्ष-21पिशाचावकीर्णश्च ॥ षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंपन्नः । कार्यो डिमः प्रयत्नान्ना-नाश्रयभावसंपन्नः ॥ व्यायोगः--व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः । अल्पस्त्री-जनयुक्तस्त्वेकाहकृतस्तथा चैव ॥ बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे । न तु 24तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥ न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः । युद्धनियुद्धाघर्षणसंफेटकृतश्च कर्तव्यः । एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ॥ समवकारः--देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव । अङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्

**तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।**
**अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम् ॥ ३२ ॥**

णीत्येतत् पदं संस्कृतप्राकृतभाषामिश्राणि नाटकादीनि गद्यपद्यमिश्राणि चम्प्वादीनि च मिश्रसंज्ञकानि इति केचिद्योजयन्ति । परं पद्यं गद्यं च मिश्रं च तत् त्रिधैव १५व्यवस्थितम् ( १. ११ ) इति उद्देशवाक्यानुरोधात् तथा प्राकृतविवेचनस्य पूर्व-मकृतत्वाच्च एतद्विवेचनं न ग्रन्थकृदभिप्रायानुकूलम् । तदभिप्रायस्तु प्रथमवर्णित एवेति सुधीभिर्विचार्यम् ॥ ३१ ॥

एवं गद्यपद्यमिश्रत्वेन सारस्वतस्य त्रैविध्यमभिधाय पुनरपि भाषाभेदेन तस्य चातुर्विध्यं कथयति — **तदेतदिति** । तदेतत् प्रक्रान्तं वाङ्मयम् काव्य-३सारस्वतम् । भूयः पुनरपि । संस्कृतम् संस्कृतभाषामयम् । तथा प्राकृतम् अपभ्रंशः मिश्रम् संस्कृतादिविविधभाषासनाथं च । इति चतुर्विधम् चतुष्प्रकारम् । आर्याः काव्यशास्त्रनदीष्णाः । आहुः । यथाह भोजराजः सरस्वतीकण्ठाभरणे

६ संस्कृतेनैव कोप्यर्थः प्राकृतेनैव चापरः ।
शक्यो योजयितुं कश्चिदपभ्रंशेन वा पुनः ॥
पैशाच्या शौरसेन्या च मागध्यान्यो निबध्यते ।
९ द्वित्राभिः कोपि भाषाभिः सर्वाभिरपि कश्चन ॥ (२.१०११)

इत्यादि ॥ ३२ ॥

---

१ – आम्नाः कपा.

---

27त्रिशृङ्गारः ॥ द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च ॥ वीथी––सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्तथा त्रयोदशभिः । वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥ अङ्कः––वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य । प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ॥ दिव्यपुरुषै-30र्वियुक्तः शेषैरन्यैर्भवेत् पुम्भिः । करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ॥ स्त्रीपरिदेवितबहुलो निर्वेदितभाषितैश्चैव । नानाव्याकुलचेष्टः सात्वत्यारभटिकैशिकीहीनः ॥ कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥ ईहामृगः––दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः । सुविहित-33वस्तुनिबद्धो विप्रत्ययकारकश्चैव ॥ उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च । संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव ॥ स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः । ईहामृगस्तु कार्यश्चतुरङ्कविभूषितश्चैव ॥ यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव । ईहामृगेपि तत् स्यात् केवलमत्र 36स्त्रिया योगः ॥ ( १८–१०६ ) इति । एतेषामुदाहरणानि नाट्यशास्त्रादिभ्योवगन्तव्यानि ॥

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः[1]।**
**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः[2] ॥ ३३ ॥**
**महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।**

भाषायाः संस्कृतादिविभागान् विशिनष्टि — **संस्कृतमिति** । दैवी देवव्यवहार्या । महर्षिभिः यास्कपाणिन्यादिभिः । अन्वाख्याता प्रकृतिप्रत्ययादिभि-३र्व्याख्याता । संस्कृतं नाम संस्कृतनाम्ना व्यवहृता अस्तीति भावः । नामेति प्रसिद्धौ । व्याख्यातेत्यत्र उद्देश्यानुरोधेन स्त्रीत्वम् । प्राकृतं कथयति— **तद्भव इति** । प्राकृताः ग्राम्याः तैर्व्यवहृतम् तत्संबन्धात् प्राकृतम् । अवयवार्थबलादेव लक्षण-६लाभः । प्रकृतेः संस्कृतादुत्पन्नं प्राकृतमिति केचित् । तस्य क्रमः अभ्यर्हितत्वा-नुरूपेणानुक्रमः विस्तारो वा । तद्भवः तत्समः देशी इति अनेकः बहुविधः । तद्भवो नाम संस्कृतोद्भवः । यथा हत्त कण्ण इत्यादिः । तत्समः संस्कृतसमः । यथा ९कीरः गौः इत्यादिः । देशी तत्तद्देशरूढः । यथा चस्सिसस्सी ( काञ्चनं ) दोग्घट ( गजः ) इत्यादिः । अन्ये तु संस्कृतोद्भवा महाराष्ट्रीभाषा तत्समा शौरसेन्या-दयो भाषाः अपराश्च तत्तद्देशेषु विलसिताः देशीपदाभिधेयाः इति व्याख्यानं १२कुर्वन्ति । केचित् पुनः सर्वासामपि प्राकृतभाषाणां संस्कृतोद्भवत्वेन तद्भवत्वं क्रियाकारकादिविभागत्वेन संस्कृतसादृश्यात् तत्समत्वं महाराष्ट्रादितत्तद्देशव्यव-हृतत्वाच्च देशीत्वमपि वर्तते इति कथयन्ति । परं नैतदाचार्यदण्डिनो मतम् । १५तेन तु तद्भवतत्समदेशीतिविभागेन एकस्यामेव महाराष्ट्र्यादिभाषायां त्रैविध्यं दर्शि-तम् । अत एव अनेकः प्राकृतक्रम इत्युपपन्नं भवति ॥ ३३ ॥

प्राकृतभाषासु उत्कृष्टापकृष्टत्वं वर्णयति — **महाराष्ट्रेति** । महाराष्ट्रं नाम दक्षिणापथवर्ती देशविशेषः । लक्षणया तद्वर्तिनो जना ग्राह्याः । ते आश्रया आधारा ३यस्याः ताम् । तैः प्रथमं व्यवहृतामित्यर्थः । भाषां महाराष्ट्रीभाषाम् । प्रकृष्टं उत्तमम् । प्राकृतं विदुः विद्वांसो जानन्ति । सूक्तयः चमत्कारपरिपूर्णानि वचांसि तान्येव रत्नानि अनर्घमणयः तेषाम् । सागरः सागरस्वरूपः । सेतुबन्धः तन्नामकः ६प्रवरसेनकवेर्ग्रन्थविशेषः स आदिर्यस्मिन् तत् । सत्तसईइत्यादिकं काव्यमिति शेषः।

---

१ मनीषिभिः. कपा.

२ तद्भवं तत्समं. अ.

**सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ ३४ ॥**
**शौरसेनी च गौडी[1] च लाटी चान्या च तादृशी ।**
**याति प्राकृतमित्येवं[2] व्यवहारेषु संनिधिम्[3] ॥ ३५ ॥**

यन्मयम् महाराष्ट्रीभाषामयम् । महाराष्ट्रीभाषया कविप्रवरा मनोहरान् प्रबन्धान् रचयामासुरिति भावः । तथा च मनोरमग्रन्थसंपत्त्या अस्याः प्रकृष्टत्वं ज्ञेयम् ॥३४॥

अन्या अपि प्राकृतभाषा दर्शयति—**शौरसेनीति** । शूरसेनो मथुरासंनिहितो देशः । तदुक्तं भागवते —

३ शूरसेनो यदुपतिर्मथुरामावसन् पुरीम् ।
माथुराञ्शूरसेनांश्च विषयान् बुभुजे पुरा ॥ इति । (१०.१.२७)

गौडीम् गौडो वङ्गदेशसमीपवर्ती देशविशेषः । तदुक्तं शब्दकल्पद्रुमे—

६ वङ्गदेशं समारभ्य भुवनेशान्तकं शिवे ।
गौडदेशः समाख्यातः सर्वविद्याविशारदः ॥ इति ।

लाटः कर्णाटकसमीपस्थो देशविशेषः । तथा च कथासरित्सागरे शशाङ्कवतलिम्बके—

९ ददौ तस्मै सपुत्राय प्रीत्या वीरवराय च ।
लाटदेशे ततो राज्यं स कर्णाटयुतो नृपः ॥ इति । (११.११९)

एतद्देशत्रयव्यवहृतपूर्वा भाषाः । तथा तादृशी तद्वत् तत्तद्देशनाम्नोपलक्षिता अन्या
१२ मागधी अवन्तिजा प्राच्या वा । तदुक्तं नाट्यशास्त्रे—

मागध्यवन्तिजा प्राच्या शूरसेनार्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥ इति । (१७.४८)

१५ एताः सर्वा अपि भाषाः प्राकृतमित्येव प्राकृतमिति नाम्नैव । व्यवहारेषु नाट्यशास्त्रसाहित्यशास्त्रव्यवहारेषु । संनिधिं याति सांनिध्यं प्राप्नुवन्ति । कविभिः प्राकृतमित्येव व्यवह्रियन्ते । देशनामोपलक्षिताः सर्वा भाषाः सामान्यतः प्राकृतसंज्ञयोच्यन्ते
१८ इति भावः ॥ ३५ ॥

---

१ लाटी च गौडी च. कपा.

२. इत्येव. क. ३. संनिधिः. अ.

आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।
शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ ३६ ॥
संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत् ।

देशनाम्नोपलक्षितानां प्राकृतत्वमभिधायेदानीं जातिनामोपलक्षितानामपभ्रंशत्वेन व्यवहारः इति निर्दिशति——**आभीरेति** । आभीराः गोपाः ते आदयो ३येषु ते शबरशकचाण्डालाः तेषां गिरः भाषाः आभीरीशाबरीचाण्डालीप्रभृतयः । काव्येषु काव्यनाटकादिषु । अपभ्रंश इति स्मृताः अपभ्रंशशब्देन ता व्यवहृताः सन्तीति भावः । काव्यस्येत्यस्य व्यावर्त्यं दर्शयति— **शास्त्रेषु इति** । शास्त्रेषु शब्द-६शास्त्रादिषु । संस्कृतादन्यत् भिन्नम् सर्वो भाषाप्रपञ्चः । अपभ्रंशतया अपभ्रंशत्वेन । उदितम् उक्तः । शास्त्रे संस्कृतापभ्रंशौ इत्येव द्वौ प्रभेदौ । सर्वं संस्कृतभिन्नमपभ्रंशशब्देनैव तत्र निर्दिष्टमिति भावः । यथा——ब्राह्मणेन न म्लेच्छितवै नापभा-९षितवै । म्लेच्छो ह वा यदेष अपशब्दः । म्लेच्छा मा भूम इत्यध्येयं व्याकरणम् । ( पातञ्जलमहाभाष्यम् १–१–१ ) ॥ ३६ ॥

एवं भाषाविभागं दर्शयित्वा तत्तद्भाषानियमेन पद्यप्रबन्धानां लक्षणानि निरूपयति——**संस्कृतमिति** । सर्गबन्धादि महाकाव्यादिकम् आदिशब्देन खण्ड-३काव्यानां संग्रहः । संस्कृतम् संस्कृतभाषामयमेव भवतीति भावः । तथा चोक्तमग्निपुराणे —

सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ।
६ तद्भवं न विशेत् तत्र तत्समं नापि किंचन ॥ इति । ( ३३७. २४ )

यथा रामायणादि । स्कन्धकादि स्कन्धकः छन्दोविशेषः तेन रचितं काव्यमपि स्कन्धकम् । तत्तु प्राकृतम् प्राकृतेनैव प्रणेतव्यमित्यर्थः । अत्र आदिशब्देन ९गलितकादिच्छन्दसां संग्रहः । तदुक्तं टीकान्तरे——छन्दसा स्कन्धकेनैतत् क्वचिद्गलितकैरपि । इति । अस्योदाहरणं सेतुबन्धादि । एतदुपरूपकान्तर्गतसट्टकस्यापि

---

१. अन्यद् इत्यत्र काव्ये. अ.

२. °भ्रंश इतीरिताः. अ.

३. स्कन्धकादिकम्. ब.

**ओसरादिरपभ्रंशो नाटकादि तु मिश्रकम् ॥ ३७ ॥**

उपलक्षणम् । तस्य प्राकृतमयत्वात् । तदुक्तं दर्पणे——सट्टकं प्राकृताशेषपाठ्यं
१२स्यादप्रवेशकमिति । ( ६. २७६ ) ओसरः छन्दोविशेष एव तद्ग्रथितं काव्यं
अपभ्रंशमयमेव कर्तव्यम् । अस्मिन् काव्ये परिच्छेदस्य कडवकसंज्ञा । तदुक्तं
टीकान्तरे——

१५ अपभ्रंशनिबन्धेस्मिन् सर्गाः कडवकाभिधाः ।
तथापभ्रंशयोग्यानि च्छन्दांसि विविधानि च ॥ इति ।

एतदुदाहरणं कर्णपराक्रमादि इति प्रेमचन्द्रशर्माणः । नाटकादि तु मिश्रकम्
१८नानाभाषाभिर्मिश्रितं भवति । अत्र तुशब्दः एवार्थे । तेन संस्कृतभाषया विविध-
प्राकृतभाषामिश्रया नाटकं विधेयमिति भावः । अत्र आदिशब्देन प्रकरणादिदश-
रूपकाणां नाटिकाद्यष्टादशोपरूपकाणां च संग्रहः । तत्र नाटकादिरूपकाणां
२१लक्षणानि पूर्वमुक्तानि । इदानीमुपरूपकप्रभेदान् दर्शयामः । तथा हि दर्पणे——

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
२४ संलापकं श्रीगदितं शिल्पकं च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भणिकेति च ।
अष्टादश प्राहुरुपरूपकाणि मनीषिणः । इति । ( ६.४ इत्यादयः )

२७एषां लक्षणानि उदाहरणानि च दशरूपकसाहित्यदर्पणादिभ्योवगन्तव्यानि ।
विस्तरभयात् तानि नात्र कथ्यन्ते । नाटकादिरूपकेषु पात्रविशेषेण भाषानियमः
दर्पणे यथा

३० पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी च प्रोक्तव्या तादृशीनां च योषिताम् ॥
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
३३ अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी ।
प्राच्या विदूषकादीनां धूर्तानां स्यादवन्तिका ॥

---

१. ओरसादीनि. अ, आसारादीनि. ब, ओसरादीनि. कपा.

**कथा[1] हि सर्वभाषाभिः संस्कृतेन च बध्यते[2] ।**
**भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ३८ ॥**
**लास्यच्छलितशम्पादि[3] प्रेक्षार्थम्[4]**

३६ योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ।
शबराणां शकादीनां शाबरीं संप्रयोजयेत् ॥

इत्यादिः ॥ ३७ ॥ ( ६. १५८ )

कथाख्ये गद्यप्रबन्धे भाषाविचारं निर्दिशति—**कथा हीति** । कथा पूर्वोक्तलक्षणा सर्वभाषाभिः निखिलप्राकृतभाषाभिः निबध्यते । हिशब्दस्त्वर्थे । ३चशब्दः समुच्चायकः । तथैव च संस्कृतेन संस्कृतभाषयापि निबध्यते । तेन कथायाः प्रकारद्वयं यया कयापि प्राकृतभाषया रचिता संस्कृतभाषया वा निबद्धा । संस्कृतभाषानिबद्धायाः कथाया उदाहरणं कादम्बर्यादि । प्राकृतभाषया ६रचितां कथां दर्शयति भूतभाषेति । भूतभाषामयीम् पैशाचीभाषानिबद्धाम् । बृहत्कथां । प्राहुः कथयन्ति । तां प्रशंसति— **अद्भुतार्थामिति** । बृहत्कथाया अनुवादाः बृहत्कथामञ्जरीकथासरित्सागरादयः सन्तीति प्रथितमेव ॥ ३८ ॥

दृश्यश्रव्यभेदेन प्रबन्धद्वैविध्यमाह—**लास्येति** । स्त्रीजनकृतं शृङ्गाररसप्रधानं नृत्यं लास्यम् । तदाह स्वटीकायां प्रेमचन्द्रः—

३ लासः स्त्रीपुंसयोर्भावस्तदर्हं तत्र साधु वा ।
लास्यं मनसिजोल्लासकरं सुद्वङ्गहाववत् ॥
देव्यै देवोपदिष्टत्वात् प्रायः स्त्रीभिः प्रयुज्यते । इति ।

६अन्यात्रापि—

कोमलं मधुरं लास्यं शृङ्गाररससंयुतम् ।
गौरीतोषकरं चापि स्त्रीनृत्यं तु तदुच्यते ॥ इति ।

९हृदयंगमाख्याटीकायामपि—लास्यं शृङ्गारभूयिष्ठं नृत्यमीश्वरभाषितम् । इति । तथैव

---

१. कथातु. अ. कथापि. ब. २. पठ्यते. अ.
३. शम्यादि. अ, क; शल्यादि. ब; साम्यादि. बपा.
४. प्रेक्ष्यार्थं. बपा, डपा.

नारदसंहितायाम्–पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते । इति । छलितं पुंनृत्यम् । तदाह प्रेमचन्द्रः–पुंनृत्यं छलितं प्राहुरिति । केचित्तु छलिकमितिपाठमनु-
१२सृत्य–छलिकं छद्मना वृत्तं सूरयस्तद्विदो विदुः । ( ह० टीका ) इति तल्लक्षणं निवेदयन्ति । शम्पा पूर्वरङ्गान्तर्गतः वाद्यप्रयोगविशेषः । तदुक्तं नाट्यशास्त्रे

शम्पा तु द्विकला कार्या तालो द्विकल एव च ।
१५ पुनश्चैककला शम्पा संनिपातः कलात्रयम् ॥ इति । ( ५. ६२ )

शल्येतिपाठे शल्या–भाले हस्तं समावेश्य नृत्यं शल्येति कीर्तितम् । इति टीका-न्तरे कृतलक्षणा । शम्येतिपाठे

१८ शम्येति सव्ययोः पातः सतालकरपादयोः ।
उभयोः करयोः पातः संनिपात इति स्मृतः ॥ इति टीकान्तरे ।

साम्येतिपाठे साम्यं गीतवाद्यसमयनृत्यं अन्यै रासकनाम्ना पठितम् । आदि-
२१शब्देन ताण्डवहल्लीसकरासानां ग्रहणम् । उक्तं च

तल्लास्यं ताण्डवं चेति च्छलितं सम्पया सह ।
हल्लीसकं च रासं च षट्प्रकारं प्रचक्षते ॥ इति । ( स० कण्ठा०
२४ २. १५५ )

ताण्डवं उद्धतपुंनृत्यम् । यदुक्तं प्रेमचन्द्रेण—

वीररौद्ररसाधारमद्भुतं शंकरप्रियम् ।
२७ पुरुषेण समारब्धं नृत्यं ताण्डवमुच्यते ॥

अन्यच्च

उद्धतं तु महेशस्य शासनात् तण्डुनोदितम् ।
३० भरताय ततः ख्यातं लोके ताण्डवसंज्ञया ॥ इति ।

हल्लीशं मण्डलाकारेण स्त्रीसमूहनृत्यम् । यथा

मण्डलेन तु यत् स्त्रीणां नृत्यं हल्लीसकं तु तत् ।
३३ तत्र नेता भवेदेको गोपस्त्रीणां यथा हरिः ॥ इति । ( स० कण्ठा० २. १५६ )

हल्लीसमेव तालबन्धविशेषयुक्तं रासकमिति प्रेमचन्द्रशर्माणः । प्रेक्षार्थम् प्रेक्षणमेव

**इतरत् पुनः ।**

**श्रव्यमेवेति[1] सैषापि[2] द्वयी गतिरुदाहृता ॥ ३९ ॥**

**अस्त्यनेको गिरां मार्गः**

३३प्रयोजनं यस्य तथाविधम् । प्रेक्ष्यमित्यर्थः । प्रेक्ष्यार्थमितिपाठं स्वीकृत्य प्रेक्ष्यः सामाजिकैर्दृश्यः अर्थः नटैः रामाद्यवस्थानुकरणेन प्रकाशमानं काव्यप्रतिपाद्यं यस्य तत् इति केचिद् विवृण्वन्ति । परं अग्रेस्थितश्रव्यपदानुरोधात् प्रेक्षार्थमित्येव पाठः ३६समीचीनः । श्रव्यं कथयति– **इतरदिति** । सर्गबन्धाधिकं श्रव्यम् श्रवणमात्र-लक्षणम् । उक्तं च भोजराजेन सरस्वतीकण्ठाभरणे

श्रव्यं तत् काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते ।
३९ श्रोत्रयोरेव सुखदं भवेत् तदपि षड्विधम् ॥ इति । (२. १५२)

नेक्ष्यते नाभिनीयते इत्यनेन नाटकादीनां न श्रव्यत्वप्रसक्तिः । इति एवम् एषापि द्वयी गतिः द्विप्रकारका पद्धतिः प्राचीनैः कथिता । अपिशब्दः पूर्वभेदसमुच्चयार्थः। ४२केचित्तु श्लोकमिमं नाटकाख्यस्य मिश्रप्रबन्धस्यैव दृश्यश्रव्येति द्विप्रकारताख्यापन-परत्वेन योजयन्ति । यद्यपि मिश्रप्रबन्धस्य वर्णनमत्रावसरप्राप्तमेव वर्तते तथापि व्याख्यानेस्मिन् निखिलवाङ्मयस्य दृश्यश्रव्यात्मकत्वेन प्राचीनैरुपवर्णितस्य द्वैवि-४५ध्यस्य परित्यागः संकोचो वा स्वीकार्यो भवतीति सुधीभिर्विमर्शनीयम् ॥ ३९ ॥

इत्थं सप्रपञ्चं सप्रभेदं च काव्यशरीरं विवृत्य ततस्तत्संपादकगुणविशेषान् निरूपयंस्तदाश्रयभूतां वाचां विचित्रमार्गाणाम् (१. ९) इत्युल्लिखितां रीतिं ३निरूपयति—**अस्तीति** । गिराम् वाचाम् । परस्परं सूक्ष्मभेदः प्रणिधानगम्यो भेदः यस्य एवं मार्गः रचनाप्रकारः । अनेकः बहुविधः । अस्ति । तथा च वामनः — रीतिरात्माकाव्यस्य । विशिष्टपदरचना रीतिः । सा च त्रिधा । वैदर्भी गौडी पाञ्चाली ६चेति । (१. २. ६--७) विश्वनाथः रीतीनां चातुर्विध्यमाह । तथा हि—

पदसंघटना रीतिः अङ्गसंस्थाविशेषवत् ।
उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधा ॥
९ वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ।

---

१. श्राव्यम्. अ.
२. सैवैषा. क.

सूक्ष्मभेदः परस्परम् ।

माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥

अल्पवृत्तिरवृत्तिर्वा वैदर्भीरीतिरिष्यते ।

१२ ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥

समासबहुला गौडी वर्णैः शेषैः पुनर्द्वये ।

समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥

१५ लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता । इति । [ ९. १—५ ]

सरस्वतीकण्ठाभरणे रीतीनां षोढात्वं कथितम् । यथा—

वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा ।

१८ लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥ इति । [ २. २९ ]

तत्र आवन्तिकामागध्योर्लक्षणम् —

अन्तराले तु पाञ्चालीवैदर्भ्योर्यावतिष्ठते ।

२१ सावन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैः ।

पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी । इति । ( २. ३२ ,

आसामुदाहरणानि तत्रैव प्रदर्शितानि । तत्र वैदर्भ्या उदाहरणम्—

२४ मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।

पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥

पाञ्चाली यथा—

२७ गात्राभिघातदलिताङ्गदजर्जराणां

गण्डस्थलीलुलितकुण्डलताडितानाम् ।

क्षोभस्फुटन्मुकुटकोटिविघट्टितानां

३० नादोभवज्झणझणामुखरो मणीनाम् ॥

गौडीया यथा—

यस्यावस्कन्दलीलावलितबलपरिस्पन्दखर्वीकृतोर्वी-

३३ संरम्भोत्तम्भनायोन्नमितभरनमत्कन्धरासंधिरासीत् ।

शेषो विस्फारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग-

स्फूर्जत्संदोहसंदेहितविकटशिखामण्डलीरत्नखण्डः ॥

तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ ४० ॥

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।

अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ ४१ ॥

३६आवन्तिका यथा—

एतानि निःसहतनोरसमञ्जसानि

शून्यं मनः पिशुनयन्ति पदानि तस्याः ।

३९ एते च वर्त्मतरवः प्रथयन्ति ताप-

मालम्बितोज्झितपरिग्लपितैः प्रवालैः ॥

लाटीया यथा—

४२ अयमुदयति मुद्राभञ्जनः पद्मिनीना-

मुदयगिरिवनालीबालमन्दारपुष्पम् ।

विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्

कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

४५ मागधी यथा—

करिकवलनशिष्टैः शाखिशाखाग्रपत्रै-

४८ ररुणसरणयोमी सर्वतो भीषयन्ते ।

चलितशबरसेनादत्तगोशृङ्गचण्ड-

ध्वनिचकितवराहव्याकुला विन्ध्यपादाः ॥

५१एतासु वैदर्भीगौडीये एव प्रस्फुटान्तरे । अन्यास्तु मिश्रिताः । तत्र पाञ्चाली वैदर्भी-गौड्योः अन्तरालवर्तिनी । लाटी समस्तरीतिव्यामिश्रा । मागधी तु खण्डरीतिरेव । अतः किंचिद्भेदवतीनां तासां निर्वचनं न विशेषोपयुक्तमिति तद्विहाय प्रकृष्टभेदेन ५४वैदर्भीगौडीये रीती एव विशिनष्मि इत्याह —**तत्रेति** । तत्र विविधमार्गेषु वैदर्भगौडीयौ मार्गौ प्रस्फुटान्तरौ सुकुमारविकटात्मकत्वेन अत्यन्तविसदृशौ । वर्ण्येते लक्षणादिना विविच्येते । भेदभूयस्त्वात् तेषां विवेचनं युक्तमिति भावः ॥ ४० ॥

वैदर्भगौडीयौ वर्ण्येते इति स्वप्रतिज्ञानुरोधेन क्रमेण तल्लक्षणं विधत्ते— **श्लेष इति** । श्लेषः अस्मिन्नेव परिच्छेदे ४३ श्लोकेन लक्षितः । प्रसादः अत्रैव

**इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।**

३ ४५ श्लोकेन वर्णितः । समता ४७ श्लोकेन विवेचिता । माधुर्यम् ५१ श्लोकेन निरूपितम् । सुकुमारता ६९ श्लोकेन विशदीकृता । अर्थव्यक्तिः ७३ श्लोकेन व्यक्तीकृता । उदारत्वम् ७६ श्लोकेन स्पष्टीकृतम् । ओजः ८० श्लोकेन विव-
६ रितम् । कान्तिः ८५ श्लोकेन अभिहिता । समाधिः ९३ श्लोकेन प्रदर्शिता । एवं दशगुणा उद्दिष्टा इति ज्ञेयम् ॥ ४१ ॥

**इतीति** । इति पूर्वं निर्दिष्टाः श्लेषादिसमाध्यन्ताः दश गुणा वैदर्भमार्गस्य प्राणाः प्राणवत् स्थितिहेतवः । स्मृताः भरतादिभिः कथिताः इत्यर्थः । तथा च
३ भरतः—

श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् ।

अर्थस्य च व्यक्तिरुदारता च कान्तिश्च काव्यार्थगुणा दशैते ॥ इति ।

६ (२. ९२)

अनेन दशसंख्याकगुणस्वीकारे नाट्यसूत्रकारस्य आनुकूल्यं प्रदर्शितम् । तेन च माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश इति अर्वाचीनानां ( का० प्र० ८. ६८ )
९ उद्घोषः प्रमाणविरुद्ध इति ज्ञेयम् । इत्थं च श्लेषादिगुणवती पदरचना वैदर्भी रीतिः इति लक्षणं निष्पन्नम् । भोजराज आह —

तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता ।

१२ विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ इति । (२. २९)

नव्यास्तु रसधर्मानेव गुणान् मन्वानास्ते गुणाश्च माधुर्यौजःप्रसादाख्याः त्रय एव सन्तीति मन्यन्ते । शब्दार्थमात्रवृत्तीनां श्लेषादीनां च पृथग्गुणत्वं नाङ्गीकुर्वन्ति ।
१५ तांश्च उक्तगुणत्रयेन्तर्भावयन्ति । तदुक्तं प्रकाशे—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।

उत्कर्षहेतवस्ते स्युरचलस्थितिहेतवः ॥

१८ माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ॥ इति । ( ८. ६६ )

परमेतत् सर्वं भरतवचनविरुद्धत्वाचिन्त्यम् । एते गुणाः उपरिनिर्दिष्टेषु कस्मिन् गुणे तैरन्तर्भावितास्तत् तत्तद्गुणनिरूपणप्रसङ्गे दर्शयामः । एवं वैदर्भीं निरूप्य

**एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥ ४२ ॥**

**श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।**

२१गौडीं दर्शयति—**एषामिति** । गौडवर्त्मनि गौडमार्गे एषां गुणानां विपर्ययः व्यत्यासः । स च कुत्रचिदत्यन्ताभावरूपः कुत्रचिदंशतः संबन्धरूपश्चः प्रायः दृश्यते । प्रायः इत्यनेन क्वचिदुभयोः साम्यमपि अस्तीति सूच्यते । यथा ग्राम्य-२४त्वानेयत्वादिविषये उभयोरैकमत्यम्—एवमादि न शंसन्ति मार्गयोरुभयोरपि (१.६७) नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि ( १. ७५ ) इत्यादिनोपवर्णितम् । अत एव असमस्तगुणा गौडी इति कैश्चित् प्रतिपादितम् । इत्थं च प्रायः वैदर्भी-२७विरुद्धगुणवती पदरचना गौडी इति लक्षणं निष्पन्नम् । तादृशविरुद्धधर्मत्वं च दीर्घसमासपरुषाक्षरप्राचुर्यौद्धत्यरचनाविशेषशालित्वम् । तथा च भोजराजः

समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम् ।

३० गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥ इति । ( २. ३१ )

पुरुषोत्तमोपि—

बहुतरसमाससयुक्ता सुमहाप्राणाक्षरा च गौडीया ।

३३ रीतिरनुप्रासमहिमपरतन्त्रा स्तोभवाक्या च ॥ इति ।

एषु गुणेषु श्लेषः समता सुकुमारता ओजः इति चत्वारः शब्दगुणाः । प्रसादः अर्थव्यक्तिः उदारता कान्तिः समाधिः एते पञ्च अर्थगुणाः । माधुर्यं तु शब्दगुणः ३६अर्थगुणश्चेति ग्रन्थकर्तुर्मतम् । वामनादयस्तु शब्दगुणा अर्थगुणाश्च प्रत्येकं दश संख्याकाः सन्तीति स्वीकुर्वन्ति । तत्तल्लक्षणानि विधाय च उदाहरणान्यपि दर्शयन्ति । विस्तारभयान्नात्र सर्वो विषयः संग्रहीतुं शक्यते । स तु वामनादिग्रन्थेषु ३९द्रष्टव्यः ॥ ४२ ॥

तत्रोद्देशक्रमानुरोधेन प्रथमं श्लेषं लक्षयति-**श्लिष्टमिति** । अस्पृष्टशैथिल्यम् अस्पृष्टं असंबद्धं शैथिल्यं असंयुक्ताल्पप्राणाक्षरबाहुल्येन शिथिलमिव भासमानत्वं यस्मिंस्तत् । तच्च अन्तरान्तरा निवेशितैः महाप्राणाक्षरैः संयुक्तवर्णैश्च भवति । शैथि-३ल्यार्थविबोधाय तल्लक्षयति— **अल्पप्राणाक्षरोत्तरमिति** । अल्पः प्राणः उच्चारण-

---

१. लक्ष्यते. कपा.

२. अस्पष्ट इति रसगङ्गाधरे । ( पृ. ५६ ).

शिथिलं मालतीमाला लोलालिकलिला यथा ॥ ४३ ॥
अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात् ।
वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति ॥ ४४ ॥

प्रयत्नो येषामिति अल्पप्राणाः असंयुक्ताक्षराणि वर्गाणां प्रथमतृतीयपञ्चमाः यरलवाश्च
६ते उत्तराः प्रधाना बहुला वा यत्र तत् शिथिलम् । एतदेव उदाहरणेन विशदयति—
**मालतीति** । लोलाः सौरभाहरणाय लोलुपाः अलयः भ्रमराः तैः कलिला व्याप्ता ।
मालतीमाला मालतीस्रक् । विलसतीति शेषः । अत्र असंयुक्ताल्पप्राणवर्णबाहुल्या-
९च्छैथिल्यम् ॥ ४३ ॥

एवंविशिष्टं शैथिल्यं वैदर्भैर्नाद्रियते चेत् केषां तत्स्वीकरणेभिनिवेशोस्तीति
कथयति—**अनुप्रासेति** । गौडैः पौरस्त्यैः । अनुप्रासः वर्णावृत्तिरनुप्रासः इत्य-
३चिरादेव लक्षिष्यमाणो वर्णानुप्रासः तस्मिन् या धीः अनुरागबुद्धिस्तया । अथवा
अनुप्रासस्य या धीः रचनाबुद्धिः तया । तत् शिथिलम् मालतीमालेतिवत्
शिथिलं काव्यम् । इष्टम् ईप्सितम् । सर्वथा अनुप्रासप्रिया गौडा इति भावः ।
६अस्पृष्टशैथिल्यात्मकं प्रकृतं श्लेषोदाहरणं दर्शयति —**मालतीदामेति** । भ्रमरैः
मालतीदाम लङ्घितम् व्याप्तम् इति ईदृशमेव श्लेषोदाहरणम् वैदर्भैः बन्धगौरवात्
बन्धस्य रच्यमानकाव्यस्य गौरवं निबिडत्वम् तस्मात् । अनुमतमिति भावः । अत्र
९संयुक्तमहाप्राणवर्णसद्भावात् शैथिल्यं नास्ति । ततश्चास्पृष्टशैथिल्यत्वादिदं श्लेषो-
दाहरणं ज्ञेयम् । अपरमिदमुदाहरणम्—

प्रेक्षामृदङ्गनिनदानुपकर्ण्य तूर्ण-
१२ मम्भोदनादरभसा ननृते मयूरैः ।
यन्मन्दिरे सरलकण्ठमकुण्ठकूज-
मुन्मण्डलीकृतशिखण्डमकाण्ड एव ॥ इति ।

१५अत्र केश्चित् शिथिलशब्दस्य पुरतः अपिशब्दमध्याहृत्य अल्पप्राणाक्षरोत्तरं अतः
शिथिलमपि अस्पृष्टशैथिल्यं रचनाविशेषेणास्फुटशैथिल्यं यत् तत् श्लिष्टम् ।
उदाहरणं च मालतीमालेति एवं व्याख्याय अयं श्लेषगुणः अनुप्रासधिया गौडा-
१८नामपीष्ट इत्युपपाद्य अनन्तरं अनुप्रासरहितोपि वैदर्भसंमतः श्लेषो भवति तस्यो-
दाहरणं मालतीदामेति एवं व्याख्यायि । ततश्च वैदर्भगौडानामत्र ऐकमत्यमेवेति

प्रत्यपादि । परं तन्न रुचिरम् । अपिशब्दस्याध्याहारस्तथा अस्पृष्टशब्दस्याप्रका-
[२१]शितेत्यर्थकरणं च क्लिष्टं भवति । अतस्तद्व्याख्यानं न ग्रन्थकृदभिप्रेतमिति सुधीभिर्विचार्यम् ॥ अस्य गुणस्य निरूपणे साहित्यशास्त्रविदुषां विविधाः प्रकाराः सन्ति ताँल्लेशतो दर्शयामः । तत्र तावत् स्वभावस्पष्टं विचारगहनं वचः श्लेषः
[२४]इति भरतः । उक्तं च तेन षोडशेध्याये—

विचारगहनं यत् स्यात् स्फुटं चैव स्वभावतः ।
स्वतः सुप्रतिबद्धं च श्लिष्टं तत् परिकीर्तितम् ॥ (१६. ९४) इति । (१७-६७)

[२७]अस्योदाहरणम्—

क्षणं स्थिताः पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ इति ।

[३०]अयं अभिधानाभिधेयपद्धतिविशेषो नायं संदर्भरचनाविशेषः इति असंतुष्टाः रचनाविशेषमेव श्लेषगुणं मन्वते वामनीयाः । तदाह वामनः——मसृणत्वं श्लेषः । ( ३.१.१० )– मसृणत्वं नाम यस्मिन् सति बहूनि पदानि एकवद्भासन्ते ।
[३३]एतदेवोपसंहारकारिकायां स विशदयति—

यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसन्धीनां स श्लेषः परमो गुणः ॥ इति ।

[३६]एतदुदाहरणम्– अस्त्युत्तरस्यां दिशि देवतात्मा इत्यादिकम् । गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते । इति भोजः ( १. ६६ ) उदाहरति च

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
[३९] तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ इति ।

अत्र भिन्नानामपि पदानामेकपदताप्रतिभासहेतुत्वेन संदर्भस्य सुश्लिष्टत्वात् श्लेषो नाम गुण इति । प्रकाशकृदाह —बहूनामपि पदानामेकपदवत् भासनात्मा श्लेष
[४२]इति । ( ८. ७२ वृत्ति ) गौडास्तु शिथिलमेव श्लेषत्वेनाद्रियन्ते यथा

लीलाविलासवनितालुलितालकलासकाः ।
विलुप्तमालतीमाला जलकालानिला ववुः ॥ इति । (भोजः १.३१)

[४५]कविर्जगन्नाथो ब्रूते— शब्दानां भिन्नानामपि एकत्वप्रतिभानप्रयोजकः संहितयैक-जातीयवर्णविन्यासविशेषो गाढत्वपरपर्यायः श्लेषः । यथा—अनवरतविद्वद्द्रुम-

प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।
लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥ ४५ ॥

द्रोहिदारिद्र्यमाद्यद्द्विपोद्दामदर्पौघविद्रावणप्रौढपञ्चाननः इति । ( ५६ पत्रे ) अयं ४८श्लेषः ओजस्येवान्तर्भवतीति प्रकाशकारादयः अर्वाचीनाः मन्वते । तदुक्तं दर्पणे—

श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ।
गुणाश्चिरंतनैरुक्ता ओजस्यन्तर्भवन्ति ते ॥ इति । ( ८. ९-१० )

५१परमेतन्मतं पूर्वोक्तभरतवचनविरुद्धत्वादुपेक्ष्यमेव । इमं श्लेषं संविधाने सुसूत्रता ( १. ७८ ) इति लक्षणं विधाय भोजः अर्थगुणत्वेनापि स्वीकरोति । किंतु न स तथा वैशिष्ट्यावह इत्युपेक्षितोऽस्माभिः ॥ ४४ ॥

इदानीं क्रमप्राप्तं प्रसादं लक्षयति—**प्रसादवदिति** । प्रसिद्धार्थम् झटिति अर्थावबोधकम् । अत एव प्रतीतिसुभगम् प्रतीतिरर्थावगमः तत्र सुभगम् अनायास-३करम् । वचः वाक्यम् । प्रसादवत् प्रसादगुणयुक्तम् । एवं च प्रसिद्धार्थपद-प्रयोगेणार्थप्रतीतौ चेतःसंतोषापादको गुणः प्रसादः इति लक्षणं निष्पन्नम् । उदाहरणमाह —**इन्दोरिति** । इन्दोश्चन्द्रस्य इन्दीवरं कमलं तद्वद्द्युतिर्यस्य तत् ६श्यामलम् । **लक्ष्म कलङ्कः** । लक्ष्मीम् शोभाम् । तनोति विस्तारयति । अत्र इन्द्विन्दीवरलक्ष्मादयः शब्दाः चन्द्रकमलचिह्नादिप्रसिद्धार्थेषु प्रयुक्ताः श्रुतिमात्रेणैव अर्थावबोधकाः सन्तीति एतद्वाक्यं प्रसादगुणवदिति बोध्यम् । अयं च प्रसादः ९अर्थवैमल्यरूपोऽर्थगुणः ओजोमिश्रितशैथिल्यरूपः शब्दगुणोऽपि वर्तते । स तु अग्रे स्फुटीभविष्यति । अत्रान्ये साहित्यनदीष्णा एवं वदन्ति । तथा च भरतः—

अथानुक्तो बुधैर्यत्र शब्दादर्थः प्रतीयते ।
१२ सुखशब्दार्थसंयोगात् प्रसादः परिकीर्त्यते ॥ ( १६.९५ ) इति

एतदुदाहरणम्—

यस्याहुरतिगम्भीरजलदप्रतिमं गलम् ।
१५ स वः करोतु निःसङ्गमुदयं प्रति मङ्गलम् ॥ इति ।

वामनस्तु शैथिल्यं प्रसादः इत्याह । इदं शैथिल्यं च ओजसा संमिश्रं तेन प्रसादगुणत्वेन स्वीकृतम्—

१८ श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ( ३.१.६ )

इत्यादिः । इति । ननु विरुद्धधर्मयोः श्लथौजसोः कथमेकत्रावस्थानमिति चेत्—

करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।

२१ यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥ इति ।

बहुविस्तारेण च तेन निरूपितं श्लथौजसोर्मिश्रत्वम् । तत् तद्ग्रन्थतोवबोद्धव्यम् । स तु प्रसादोदाहरणं वदति यथा—

२४ कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो

न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ॥ ( ३·१.९ ) इत्यादि ।

भोजराज आह—

२७ प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते । (१.६६)

इति । उदाहरति च गाहन्तां महिषा इत्यादि ।

काव्यप्रकाशकारोपि— श्रुतिमात्रेण शब्दात् तु येनार्थप्रत्ययो भवेत् ।

३० साधारणः समग्राणां स प्रसादो गुणो मतः ॥ (८.७६) इति ।

उदाहरति च—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-

३३ स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः

कृशाङ्ग्याः संतापं वदति बिसनीपत्रशयनम् ॥ इति ।

३६ वाग्भटोपि झटित्यर्थापकत्वं यत् प्रसत्तिः सोच्यते बुधैः ( ३·९ ) । इति लक्षणं कृत्वा कल्पद्रुम इवाभाति वाञ्छितार्थप्रदो जिनः । इति उदाजहार । काव्यानुशासनकारो वाग्भटोपि झगित्यर्थार्पणेन चेतोविकासजनकः सर्वरसरचनात्मकः प्रसादः

३९ ( ३१ पत्रे ) इति लक्षणं विधाय उदाहरति—

पर्याप्तपुष्पस्तबकस्तनाभ्यः

स्फुरत्प्रवालोष्ठमनोहराभ्यः ।

४२ लतावधूभ्यस्तरवोप्यवापु-

र्विनम्रशाखाभुजबन्धनानि ॥ इति ।

दर्पणकारः—

४५ चित्तं व्याप्नोति यत् क्षिप्रं शुष्केन्धनमिवानलः ।

स प्रसादः समस्तेषु रसेषु रचनासु च ॥ ( ८. ७. ८ )

**व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते ।**[1]

इति व्याख्यायोदाहरति--

४८ सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तवर्मा
५१ स्वप्नेपि तां कथमहं न विलोकयामि ॥ इति ।

जगन्नाथस्तु गाढत्वशैथिल्याभ्यां व्युत्क्रमेण मिश्रणं बन्धस्य प्रसादः इति प्रसादं लक्षयित्वोदाहरति

५४ किं ब्रूमस्तव वीरतां वयममी यस्मिन् धराखण्डल-
क्रीडाकुण्डलितभ्रुषोणनयने दोर्मण्डलं पश्यति ।
माणिक्यावलिकान्तिदन्तुरतरैर्भूषासहस्रोत्करै-
५७ र्विन्ध्यारण्यगुहागृहावनिरुहास्तत्कालमुल्लासिताः ॥ इति । ( ५६ पत्रे )

प्रागुपवर्णितः प्रसादाख्यो गुणः शब्दगुणः । अर्थगुणोप्ययम् अर्थवैमल्यलक्षणः कैश्चिदभ्युपगतः । यथाह भोजः —यत् तु प्राकट्यमर्थस्य प्रसादः सोभिधीयते ।
६० इति । ( १. ७९ ) उदाहरति च–

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
६३ विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

अत्र पद्मिनीविकासकरणे उदयशैलावतरणे कोकशोकहरणे तमोविदारणे चानु-
६६ क्तोपि सूर्यलक्षणोर्थः प्रकटमुपलक्ष्यते । इति ॥ ४५ ॥

गौडास्तु अस्मिन् प्रसादे नात्यादरं दर्शयन्तीति सोदाहरणं दर्शयति— **व्युत्पन्नमिति** । गौडीयैः गौडदेशनिवासिभिः । नातिरूढमपि अनतिप्रसिद्धमपि ।
३ निहतार्थादिदोषयुतमपीति भावः । व्युत्पन्नम् व्युत्पत्तियुक्तम् । योगार्थघटितमिति हेतोः । इष्यते एतत् प्रसादशून्यमतो न काव्यमिति तैर्न मन्यते अपि तु काव्यत्वे-नाङ्गीक्रियते । तेषां प्रबन्धे गाढबन्धवैचित्र्यस्यैव प्राधान्यादिति भावः । उदाहरति

१ रूढमितीष्यते. अ.

**यथानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥ ४६ ॥**
**समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।**
**बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४७ ॥**

यथेति । अर्जुनं धवलं अत्यर्जुनम् अतिधवलं अनत्यर्जुनं नातिधवलं एतादृशं यदब्जन्म अद्भ्यो जन्म यस्य तत् कमलं तस्य सदृक्षः सदृशः अङ्कः कलङ्कः यस्य सः । वलक्षगुः वलक्षाः धवलाः गावः किरणानि यस्य सः चन्द्रः । अत्र अर्जुनशब्दः कार्तवीर्यपाण्डवयोः विशेषप्रसिद्धः श्वेतवर्णे न तादृशः इति स निहतार्थदोषदुष्टः । अब्जन्मशब्दश्च कमले अप्रसिद्ध एव । सदृक्षशब्दश्च उपमागर्भबहुव्रीहिणैव तदर्थबोधनाद् अधिकः इति अधिकपदतादोषदुष्टस्तथा श्रुतिकटुरपि । वलक्षगुशब्दश्च अप्रयुक्तदोषकलङ्कितः । एवंविधबहुदोषकलुषितापि एषा रचना व्युत्पत्त्येयमवयवार्थादिना अर्थावबोधिकेयमिति अनुप्रासप्रियाः गौडास्तां काव्यत्वेन स्वीकुर्वन्ति ॥ ४६ ॥

क्रमप्राप्तां समतां लक्षयति—**समं बन्धेष्विति** । बन्धेषु रचनासु । अविषमाम् अविभिन्नां यावत्प्रबन्धमेकरूपामिति भावः । एतादृशी संघटना समम् समताख्यागुणवत् । एवं च येन प्रकारेण कश्चिदर्थो वर्णयितुमुपक्रम्यते तेनैवोपसंहारः समता इति लक्षणं सिध्यति । एते बन्धाः कतिविधाः सन्तीत्याकाङ्क्षायामाह— **ते मृद्विति** । ते बन्धाः मृदुः कोमलः स्फुटः विकटः मध्यमः अनुभयात्मकः एवंरूपास्त्रिविधाः सन्ति । बन्धानां मृदुत्वादिकस्य किं प्रयोजकमित्याह —**बन्धा इति** । मृदुवर्णाः टवर्गरहिताः शिरसि निजपञ्चमाक्रान्ता वर्ग्याः ह्रस्वान्तरितौ रणौ च । तदुक्तमग्निपुराणे—

मधुरायाश्च वर्गान्तादधो वर्ग्या रणौ स्वनौ ।
ह्रस्वस्वरेणान्तरितौ संयुक्तत्वं नकारयोः ॥ इति । ( ३४३. ३ )

प्रकाशकारोपि—मूर्ध्नि वर्गान्त्यगाः स्पर्शाः अटवर्गा रणौ लघू इति । ( ८. ७३ ) स्फुटाः विकटवर्णाः टवर्गीयाः प्रथमतृतीयसंयुक्तौ द्वितीयचतुर्थौ येनकेनापि रेफसंयोगश्च । उक्तं चाग्निपुराणे—

---

१ अनभ्यर्जुन. क.

२ —बन्धे. क.

अकारवर्ज्यमावृत्तिः स्वराणामतिभूयसी ।
१५ अनुस्वारविसर्गौ च पारुष्याय निरन्तरौ ॥
शषसा रेफसंयुक्ताश्चाकाराश्चापि भूयसा ।
अन्तस्था भिन्नमाभ्यां च हः पारुष्याय संयुतः॥ इति।(३४१.७-८)

१८प्रकाशेपि—योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः । टादिः शषौ इत्यादि । (८. ७५) उन्मिश्राः उभयजातीयवर्णमिश्राः । एतेषां विन्यासो निवेशो योनिः कारणं येषां ते तथा । एतादृशाः बन्धाः मृदुस्फुटमध्यमाः भवन्ति । अत्र हि २१वर्णशब्दः असमासमध्यमसमासदीर्घसमासादीनामुपलक्षकः । तदुक्तं अवृत्तिमध्यवृत्तिर्वा वृत्तिदैर्घ्यं इति । अन्यत्रापि ।

असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
२४ वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥
बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रा स्तोभवाक्या च ॥

२७प्रतापरुद्रटीकायामपि—( ६३ पत्रे )

टवर्गवर्जिताः स्पर्शाः स्वस्ववर्ग्यान्तशेखराः ।
लघुरेफणकारौ च कोमलाः परिकीर्तिताः ॥
३० रेफेण यस्य कस्यापि योग आद्यतृतीययोः ।
स्वोत्तराभ्यां तुल्ययोर्वा परुषाक्षरकौ शषौ ॥ इति ।

तत्र मृदुप्रबन्धोदाहरणम्—

३३ शिञ्जानमञ्जुमञ्जीरचारुकाञ्चनकाञ्चयः ।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥ इति ।
दारुणरणे रणन्तं करिदारणकारणं कृपाणं ते ।
३६ रमणकृते रणरणकी पश्यति तरुणीजनो दिव्यः ॥ इति च ।

एतद्विरुद्धं यथा—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
३९ कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ इति ।

स्फुटप्रबन्धोदाहरणं यथा—

**कोकिलालापवाचालो मामैति मलयानिलः ।**

क्षुद्रः कोयं तपस्वी क्षणवदनवनच्छेदनिष्ठ्यूतमज्ज-
४२ व्याजाज्यस्फारधाराहुतिहुतहुतभुक्पच्यमानः कपालैः ।
जातास्थिस्फोटभीतिप्रविघटितवलद्वामपार्श्वप्रवेश-
क्राम्यत्सव्येतरार्धाकुलितहरहठाकृष्टखड्गो दशास्यः ॥ इति ।

४५अन्यच्च—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
४८ द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ इति ।

इयमेव गौडीरीतिः मिश्रवर्णयुता पाञ्चाली । तदुक्तं दर्पणे — वर्णैः शेषैः पुनर्द्वयोः । ५१समस्तपञ्चषपदो बन्धः पाञ्चालिका मता । इति । ( ९. ४ ) उदाहरति च—

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ इति ।

५४अन्यत्रापि—

ललितमङ्गमपाङ्गविलोकितं स्मितसुधालवपल्लवितावधरः ।
इति मनो जयतः प्रमदाजनं मनसिजस्य जयन्ति शिलीमुखाः ॥ इति ।

५७इत्थं च वर्णानां समासानां च त्रैविध्येन प्रबन्धत्रैविध्यं मृदुस्फुटमध्यमाभिधम् । तत्र येन यत् काव्यमारब्धं तेनैव परिसमाप्तिः समम् । सोयं समताख्यो गुणः ग्रन्थकृता शब्दगुणत्वेन वर्णितः । अन्यैस्तु अर्थगुणत्वेनापि स्वीक्रियते । लक्ष्यते ६०च—प्रक्रान्तप्रत्ययाविपर्यासेन अर्थस्य विसंवादिताविरहः इति । तदुदाहरणं च— उदेति सविता ताम्रस्ताम्र एवास्तमेति च । इति प्रेमचन्द्रशर्माणः । परमयं प्रक्रमभङ्गाख्यदोषाभावरूपः एवेति ज्ञेयम् । वामनस्तु—प्रक्रमाभेदरूपमवैषम्यं ६३समता इति अर्थसमतां लक्षयति । ( ३. २. ५ ) तथैव च भोजः — अवैषम्यं क्रमवतां समत्वमिति कीर्तितम् । इति ( १. ७० ) ॥ ४७ ॥

त्रिविधसमताया उदाहरणत्रयं दर्शयति सार्धश्लोकेन—**कोकिलेति** । कोकिलाया आलापो मञ्जुलध्वनिस्तेन वाचालः सशब्दो मलयानिलो मलयवायुः मामेति

**उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥ ४८ ॥**
**चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।**

३मामागच्छति शीतलयतीत्यर्थः । अत्र मृदुबन्धेन प्रारब्धस्य संदर्भस्य तेनैव समापनान्मृदुबन्धयुता समता । स्फुटबन्धमुदाहरति—**उच्छलदिति** । उच्छलन्तः उत्सर्पन्तः शीकरास्तुषारा यत्र तथा अच्छाच्छमतिनिर्मलं यन्निर्झराम्भः निर्झरोदकं ६तस्य कणास्तैरुक्षितः सिक्तः । अतिशीतल इत्यर्थः । अत्रापि मलयानिलो मामेति इत्यनुषज्यते । अत्र स्फुटबन्धेनैव उपक्रमोपसंहारौ इति स्फुटबन्धगता समता । अन्यत्रापि —

९ आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात ।
त्रुट्यतः प्रियतमोरसि हारात् पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥
(हेमचन्द्र १९७ पत्रे)

१२इति उदाहृतम् ॥ ४८ ॥

मध्यमसमतां दर्शयति—**चन्दनेति** । चन्दनस्य चन्दनवनस्य प्रणयः संसर्गस्तेनोद्गन्धिः उत्कृष्टगन्धवान् । मन्दः मृदुः । मलयमारुतः मामेति इति ३योजनीयम् । उदाहरणान्तरं यथा—

ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ इति ।
६ (हेम० १९७ पत्रे)

एषु बन्धेषु मृदुस्फुटौ न वैदर्भाभिमतौ । तौ हि अनुप्रासप्रियानां गौडानामेव इष्टौ । केवलस्फुटप्रबन्धे सौकुमार्यं नास्ति मृदुप्रबन्धे च शैथिल्यदोषो भवति । ९तदुक्तमग्रे बन्धशैथिल्यदोषो हि दर्शितः सर्वकोमले इति । (१. ६९) अतो नैवैतौ वैदर्भाभिमतौ । मध्यमस्तु मृदुस्फुटमिश्रतया वैदर्भप्रियो भवति ॥ केचित्तु कोकिलालपेति समतायाः प्रत्युदाहरणं मन्यन्ते । परं तन्न विचारास्पदम् । उदाह१२रणमन्तरा प्रत्युदारणस्यैव केवलस्य कथनं ग्रन्थकृद्रीतिविरुद्धम् । उदाहरणप्रदर्शनाभावेन च न्यूनतापत्तिः । एवं समतां प्रदर्श्य गौडानामत्रानादरः इति सोदाहरणं

---

१. उच्चरत्. कपा. २ °प्रसवो°. अ.

स्पर्धते रुद्धमद्धैर्यो वररामा[1]मुखानिलैः ॥ ४९ ॥
इत्यनालोच्य वैषम्यमर्थालंकारड[2]म्बरौ ।
अ[3]वेक्षमाणा [4]ववृधे पौरस्त्या काव्यपद्धतिः ॥ ५० ॥

कथयति–**स्पर्धत** इति । रुद्धमद्धैर्यः रुद्धं स्तम्भितं मम धैर्यं धृतिर्येन सः । एतादृशो १५मलयमारुतः । रामाणां पद्मिनीलक्षणयुतानां कामिनीनां । मुखानामाननानाम-निलैर्निःश्वासैः । साकं स्पर्धते तत्तुल्यो मृदुसुरभिश्च वर्तते इति भावः ॥ ४९ ॥

**इतीति** । इति पूर्वोदाहरणदर्शितं वैषम्यमनालोच्य । तत्र हि स्पर्धते रुद्धमद्धैर्यः इत्यत्र स्फुटः वररामाननानिलैः इत्यत्र च मृदुः इति उभयोः स्फुटमृदु-३नोः वैषम्यं विषमतामनालोच्य अवगणय्य । केवलमर्थाः अत्युक्तिरूपाः अलंकाराः वर्णानुप्रासप्रधानाः तेषां डम्बरौ उत्कर्षौ । प्रतियोगिद्वित्वात् द्विवचनम् । अवेक्षमाणा तत्र बद्धादरा इति भावः । पौरस्त्या गौडीया । काव्यपद्धतिः पद्यरचनासरणिः । ६ववृधे वितस्तार । अयमाशयः । गौडाः केवलमनुप्रासाकुलधियः पूर्वोदाहृतपद्ये यथा मृदुस्फुटरचना विषमगुणा दृश्यते तथाविधरचनायां बद्धादराः सन्तः समता-मनालोच्य तं विषमप्रबन्धं काव्यत्वेन स्वीकुर्वन्ति । वैदर्भास्तु वर्णानुप्रासं काव्य-९स्यासाधारणं लक्षणं न मन्वते यतस्ते व्याकुलीभवन्तमर्थं नापेक्षन्ते । अर्थानुरोधेन रचनाक्रमानुरोधेन च युक्तमनुप्रासमङ्गीकुर्वन्ति । न केवलं शैथिल्ये न वा विकटे न वा विषमे प्रबन्धे ते रुचिं बध्नन्ति । तेषां परुषकोमलवर्णमिश्रः प्रबन्धः १२मनोहरो भवति । इति गौडवैदर्भयोः काव्यप्रबन्धे विशेषोऽस्ति ॥ अत्र प्रेमचन्द्र-शर्मभिरेवं व्याख्यायि । गौडानामयमाशयः । अर्थानुसारिणो हि बन्धा । अर्थाश्च मृदुविकटमध्यमात्मकाः । तत्र यदि प्रथमं मृदुरर्थः अवसाने च विकटः तदा १५मृदुबन्धेनोपक्रान्तमपि विकटबन्धेन समापनीयम् । बन्धनामर्थानुगतत्वनियमात् । अतः एवंविधस्थले समतापरित्यागो गुण एव । यथा

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
१८ सारङ्गाः महिषा मदं व्रजत किं शून्येषु शूरा न के ।

---

१ °रामानना°. क. २ ° डम्बरम्. क.
३ अवेक्ष्य°. अ, अपेक्षमाणा. ब, कपा, डपा. ४ बवृते. अ, बपा, क.

कोपाटोपसमुद्भटोत्कटशटाकोटेरिभारेः शनैः
सिंधुध्वानिनि हुंकृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥

२१ (का० प्र० ७. ५९)

इत्यादौ उत्तरार्धे कुपितसिंहरूपार्थस्य उद्धतत्वात् सुकुमारतात्यागो गुण एव इति। परं नैतद्ग्रन्थकर्तुराशयानुकूलम् । स्पर्धते रुद्धमद्धैर्यो वररामाननानिलैः । इत्यत्र २४एकस्मिन्नेव वाक्यार्थे समतायाः परित्यागस्य कवेरभिप्रेतत्वात् । अथ तत्रापि अवान्तरार्थभेदप्रकल्पनेन स्पर्धते रुद्धमद्धैर्यः इत्यत्र शृङ्गारिणोपि वक्तुः धैर्यरोधेन वायुं प्रति कुपितत्वात् कुपितवाक्यस्य च औद्धत्योचितत्वाद्युज्यते विकटबन्धः । वररामा-२७ननानिलैः इत्यत्र तु कोपाभावात् शृङ्गाराङ्गस्य वररामापदवाच्यनायिकार्थस्य मृदुत्वाच्च युक्तो मृदुबन्धः । इति समतात्यागो गुण एवेति चेत् तदपि न क्षोदक्षमम् । यतः एवं कल्पितेपि वरमाननानिलैः इत्यस्मिन् मधुरार्थबोधके वाक्ये स्पर्धते ३०इति विकटप्रयोगस्यानुचितत्वात् । तस्मान्नायं कवेरभिप्रायः । केवलं गौडानां दण्ड्याचार्यकटाक्षितदोषप्रमार्जनप्रयत्न एव । अर्थानुरोधेन समतात्यागस्य वैदर्भाणामपि इष्टत्वात् । तदर्थं च अर्थालंकारडम्बरौ इत्यत्र अर्थशब्दः वक्त्राद्युपलक्षकः । ३३तेन वक्त्राद्योचित्यवशादपि बन्धवैषम्यं युज्यते । यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
३६ स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ इति ।

अत्र प्रथमचरणत्रये विकटप्रबन्धः । चतुर्थे तु द्रौपदीनायिकारूपसुकुमारार्थमुद्दिश्य ३९तत्र शब्दाडम्बरत्यागः वैदर्भानुमत एव । अपरं च वैदर्भाणामस्पृष्टशैथिल्यस्यापेक्षितत्वात् । तेन च मधुरविकटप्रबन्धस्यैव तेषामिष्टत्वान्नैवंविधमिश्रप्रबन्धे तेषामसूयावसरः । अनुप्रासप्रवणानामगणितान्यसमतादिगुणानां गौडानामेवानुप्रासशून्ये ४२काव्ये असूयायाः संभवात् । एवं स्थिते यत् प्रेमचन्द्रशर्मभिः प्रतिपादितं वैदर्भास्तु गुणपक्षपातितया विसदृशार्थकेपि संदर्भे उपक्रान्तबन्धत्यागो दोष एवेति

मन्यन्ते इति तत् तेषां गौडपक्षपातनिवेशेनैव कथनमिति सुधीभिर्विचार्यम् ।
४५ केचित्तु अर्थालंकारा उपमादयः डम्बरो विकटवर्णता च तौ अपेक्षमाणा इति विवृण्वते । परमार्थलंकारविषये गौडवैदर्भयोः समानरागत्वान्न तदेव विशिष्य गौडानां काव्यस्य लक्षणं भवेत् ॥ इदानीं समताविषये साहित्यकोविदानामन्येषां
४८ लक्षणोदाहरणानि दर्शयामः । परस्परविभूषणो गुणालंकारग्रामः समम् इति भरतः । तदुक्तम्—

नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
५१ न दुर्बोधा तैश्च कृता समत्वात् समता मता ॥ (१६.९६) इति ।

अस्योदाहरणम्—

स्मरनवनदीपूरेणोढा मुहुर्गुरुसेतुभि-
५४ र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥ इति ।

५७ मार्गाभेदः समता इति वामनः ( ३. १. ९१ ) उदाहरति च अस्त्युत्तरस्याम् इति ।

यन्मृदुप्रस्फुटोन्मिश्रवर्णबन्धविधिं प्रति ।
६० अवैषम्येन भणनं समता साभिधीयते ।

इति भोजराजः ( १. ६७ ) अस्योदाहरणं च—

यच्चन्द्रकोटिकरकोरकभारभाजि
६३ बभ्राम बभ्रुणि जटापटले हरस्य ।
तद्वः पुनातु हिमशैलशिलानिकुञ्ज-
झङ्कारडम्बरविरावि सुरापगाम्भः ॥ इति ।

६६ अविषमबन्धत्वं समता इति वाग्भटः ( काव्यानुशासन, ३० पत्रे ) । तदुदाहरणं च—

मसृणचरणपातं गम्यतां भूः सदर्भा

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः ।**

६९ विरचय सिचयान्तं मूर्ध्नि धर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥ इति ।

७२जगन्नाथस्तु ( ५९ पत्रे ) प्रक्रमभङ्गेन अर्थघटनात्मकमवैषम्यं समता इति समतां संलक्ष्य—

हरिः पिता हरिर्माता हरिर्भ्राता हरिः सुहृत् ।
७५ हरिं सर्वत्र पश्यामि हरेरन्यन्न भाति मे ॥

इत्युदाजहार । मम्मटस्तु समतां क्वचिद्दोषरूपां मन्यते । यथा मातङ्गा इत्यादौ ( पूर्वस्मिन् ५६ पत्रे ) । क्वचिच्च गुणस्वरूपाम् । गुणस्वरूपायाः अस्याः प्रबन्धा-
७८नुरूपेण माधुर्यौजःप्रसादेषु यथायथमन्तर्भावः । दर्पणकारोपि प्रकाशकारमेवानुसरति । तेनोक्तं यथा—

क्वचिद्दोषस्तु समता मार्गभेदस्वरूपिणी ।
८१ अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् । ( ८. १३ ) इति ।

हेमचन्द्राचार्योपि समता न सर्वत्र गुणरूपा इति कविसंप्रदायानुमत्या निवेद्य समतोज्झितं काव्यमुदाहरति । यथा—

८४ अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रतिमुच्यतामिति वचो गत्वा दशास्यं वद ।
नोचेल्लक्ष्मणमुक्तमार्गणगणाच्छादोच्छलच्छोणित-
८७ च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि । (१९७पत्रे) इति ।

एवमन्यत्रापीति ज्ञेयम् ॥ ५० ॥

माधुर्यं लक्षयति—**मधुरमिति** । रसवत् सरसं वाक्यं मधुरम् माधुर्यगुणवत् । ननु अनेन लक्षणेन माधुर्यमेव रसः इति पर्यायेण प्रतिपादितं भवति ।
३माधुर्यं च गुणः । गुणानां हि साक्षादथवा शब्दार्थनिष्ठतया परंपरया रसोपकारकत्वं सर्वैः प्राचीनार्वाचीनैः साहित्यशास्त्रप्रवीणैरङ्गीकृतं वर्तते । न केनापि तस्य रसात्मकत्वमङ्गीकृतमत आह—**वाचि** इति । वाचि वाक्यघटकतत्तद्वर्णसमास-
६निबद्धरीत्यादिषु । तथा वस्तुनि प्रतिपाद्यतत्तदर्थविशेषेषु च । अर्थाश्चात्र

**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ५१ ॥**

तत्तद्रसीयविभावानुभावादयो ग्राह्याः । एषां रसव्यञ्जकत्वमुक्तं प्रकाशे —व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः (४. २८) इति । रसः—

९ शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञाश्च शान्तोपि नवमो रसः ॥

इत्येतेष्वन्यतमः । तथा रसनधर्मसंबन्धित्वात् भावतदाभासादयश्च रसशब्देन १२ग्राह्याः । तेषां स्थितिः व्यञ्जकतया संबन्धः रसस्थितिः । तेन च वाक्यस्य रसव्यञ्जकवर्णविशिष्टरचनात्वं रसव्यञ्जकार्थविशिष्टत्वं वा माधुर्यम् इति लक्षणं सिद्धम् । तत्र शृङ्गारकरुणशान्तानामसमासा अल्पसमासा वा मृदुवर्णा १५वैदर्भी रीतिर्व्यञ्जिका । वीरबीभत्सरौद्राणां दीर्घसमासा विकटवर्णबहुला च गौडीया रीतिः प्रकाशिका । हास्याद्भुतभयानकानां च मध्यमवर्णा मध्यमसमासा च पाञ्चाली रीतिः उद्बोधिका । तदुक्तं प्रकाशटीकायाम् —

१८ वैदर्भीपाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः ।
लाटीं गौडीं रौद्रे कुर्याद्यथायथैवोचितं सुकविः ॥ इति । (५८७ पत्रे )

सोयं रसः किंस्वरूपः तत् कथयति— **येनेति** । धीमन्तः सहृदयाः कुशलबुद्धयो २१वा । येन वस्तुना माद्यन्ति आनन्दातिशयेन हृष्टा भवन्ति स रसः । अस्य हर्षातिशयस्य हेतुस्तावत् काव्यार्थानुशीलनोद्बुद्धचमत्कारापरपर्यायः लोकोत्तराह्लादः । स एव च रसः । आह्लादस्य स्वरूपमुपमया विशदयति —**मधुनेति** । मधुव्रताः २४भ्रमराः । मधुना यथा माद्यन्ति तथेत्यर्थः ॥ माधुर्यविषये अन्येषां लक्षणोदाहरणानि । तत्र प्रथमं तावद्भरतः—

बहुशो यच्छ्रुतं काव्यमुक्तं वापि पुनः पुनः ।
२७ नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥ इति । ( १६. ९८ )

श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते । ( २. ३ ) इति भामहः । ओजःप्रसादयोरपि श्रव्यत्वान्नैतल्लक्षणं निर्दोषमिति प्रकाशकारादयः । वामनस्तु— पृथक् ३०पदत्वं माधुर्यमिति ( ३. १.२० ) लक्षणं कृत्वा अस्त्युत्तरस्यामिति उदाहरत् । भोजोपि —या पृथक्पदता वाक्ये तन्माधुर्यमिति स्मृतम् । ( १. ६८ ) इति शब्द-

गतमाधुर्यलक्षणं कृत्वा—स्थिताः क्षणं पक्ष्मसु ताडिताधराः इत्युदाजहार । परं
३३नैतत् क्षोदक्षमम् । समासेपि माधुर्यदर्शनात् । यथा हेमचन्द्रः—

अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् ।
करतलनिषण्णमबले वदनमिदं किं न तापयति ।। इति । (१९८ पत्रे)

३६वाग्भटस्तु—( काव्यानुशासन, ३० पत्रे ) यत्र आनन्दमन्दं मनो द्रवति तन्माधुर्यम् । तच्च रसभेदेन विविधम् । तत्र शृङ्गारे यथा—

प्रियतमावदनेन्दुविलोकितैरसुहितः कलकण्ठयुवा नवः ।
३९ प्रतिमुहुः प्रतिगत्य नभस्तलाद्वलति याति चलत्यथ यात्यथ ।।

शान्ते यथा—

यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
४२ निर्मापितस्त्रिभुवनैकललामभूतः ।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत् ते समानमपरं न हि रूपमस्ति ।।

४५करुणे यथा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ।। इति ।

४८प्रकाशकार आह—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् । इति ।। ( ८. ५८ )

५१जगन्नाथस्तु ( ५९ पत्रे ) एकस्या एवोक्तेर्भङ्ग्यन्तरेण पुनः कथनात्मकयुक्तिवैचित्र्यं माधुर्यमिति अर्थगतमाधुर्यस्य लक्षणं विधाय उदाहरति—

विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो
५४ सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ।। इति ।

५७दर्पणकारस्तु—चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते । इति ( ८. २ ) लक्षणं विधाय—

**यया कयाचिच्छ्रुत्या[1] यत् समानमनुभूयते ।**
**तद्रूपा[2] हि पदासत्तिः[3] सानुप्रासा रसावहा ॥ ५२ ॥**

अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
६० जनयन्ति मुहुर्यूनामन्तः संतापसंततिम् ॥

इत्युदाहरत् । एवमेवान्येपि विद्यानाथादयः ॥ ५१ ॥

वाचि रसः स्थितः इत्यनेनोक्ताया वाक्यरसस्थितेर्व्यञ्जकं विशिष्टवर्णविन्यासरूपं श्रुत्यनुप्रासं वैदर्भानुमतं वर्णयति—**ययेति** । यया कयापि कण्ठतालव्याद्यन्यतरया श्रुत्या श्रूयतेनेनेति श्रुतिरुच्चारणम् । करणे क्तिन् । अथवा श्रुतिः श्रवणम् । भावे क्तिन् । तया श्रुत्या समानम् पूर्वोच्चरितसदृशम् । अथवा पूर्वश्रुतवर्णसदृशम् अर्थादेकस्थानत्वेन । यत् अनुभूयते तद्रूपा तादृशसादृश्यानुभवोत्पादिका । पदासत्तिः अव्यवहितपदप्रयोगः । सानुप्रासा अनु समीपे प्रकृष्टः रसानुकूलो न्यासः अनुप्रासः तया युक्ता । श्रुत्यनुप्रासवतीति बोद्धव्यम् । सा च रसावहा रसपोषिका अस्तीति शेषः । अयमाशयः । कण्ठतालव्याद्यनेकस्थानोच्चार्यत्वेन व्यञ्जनानां सादृश्यं श्रुत्यनुप्रासः । अयं वैदर्भप्रियः । तदुक्तं भोजराजेन—

आवृत्तिर्या तु वर्णानां नातिदूरान्तरस्थिता ।
अलंकारः स विद्वद्भिरनुप्रासः प्रदर्श्यते ॥
१२ श्रुतिभिर्वृत्तिभिर्वर्णैः पदैर्नामद्भिरुक्तिभिः ।
लाटानामुक्तिभिश्चायं षट्प्रकारः प्रकाशते ॥
प्रायेण श्रुत्यनुप्रासः तेष्वनुप्रासनायकः ।
१५ सनाथैव हि वैदर्भी भाति तेन विचित्रिता ॥

इति । ( २. ७०-७२ )

दर्पणकारोपि—

१८ उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।
सादृश्यं व्यञ्जनस्यैष श्रुत्यनुप्रास उच्यते ॥ ( १०. ५ ) इति ।

---

१. कयापि. अ.
२. तद्रूपादि°. अ, क. ३. पदासक्तिः. क.

**एष राजा यदा लक्ष्मीं[2] प्राप्तवान् ब्राह्मणप्रियः ।**
**तदा[2] प्रभृति धर्मस्य लोकेस्मिन्नुत्सवो[3]भवत् ॥ ५३ ॥**
**इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः ।**

अस्यानुप्रासस्य सौन्दर्यं वर्णितं भोजराजेन—

२१　यथा ज्योत्स्ना शरच्चन्द्रं यथा लावण्यमङ्गनाम् ।
अनुप्रासस्तथा काव्यमलंकर्तुमिह क्षमः ।। ( २. ७६ ) इति ।

अलंकारस्यास्य अलंकारनिरूपणप्रकरणे निरूपणीयत्वेपि अत्र वैदर्भगौडमार्गभेद-
२४कथनप्रसङ्गतः निरूपणं कृतमिति बोद्धव्यम् । अतोग्रे वक्ष्यति—काश्चिन्मार्ग-
विभागार्थमुक्ताः प्रागप्यलंक्रियाः । ( २. ३ ) इति ॥ ५२ ॥

श्रुत्यनुप्रासमुदाहरति---**एष इति** । ब्राह्मणप्रियः ब्राह्मणाः प्रिया यस्य
सः । अथवा ब्राह्मणानां प्रियः धर्मशीलत्वात् । एतादृशः एष राजा यदा लक्ष्मीं
३संपदं राज्यश्रियं वा प्राप्तवान् लब्धवान् । तदा प्रभृति तत्कालमारभ्य अस्मि-
ल्लोके धर्मस्य सदाचरणस्य उत्सवः उत्कर्षः अभवत् । दानादिभिः धर्मकृत्यं
विस्तारयामास । अथवा धर्मेण प्रजाः शशासेत्यर्थः । अत्र षकाररेफौ मूर्धन्यौ ।
६जकारयकारौ तालव्यौ । दकारलकारौ दन्त्यौ । इति प्रथमपादे । तकारदकारौ
दन्त्यौ । पकारभकारावोष्ठ्यौ । तकारधकारौ दन्त्यौ । इति तृतीयपादे च
निरन्तरौ । द्वितीयपादे रेफणकारौ मूर्धन्यौ । चतुर्थे च लकारसकारौ दन्त्यौ ।
९सान्तरौ । इति स्थानसाम्याच्छ्रुत्यनुप्रासः । स च धार्मिकराजर्षिविषयकरति-
भावस्य पोषकः इति अस्ति माधुर्यम् ॥ ५३ ॥

गौडवैदर्भयोरन्तरं स्फुटं वर्णयति---**इतीदमिति** । इति एवं पूर्वदर्शित-
रचनाप्रकारकमिदं श्रुत्यनुप्रासघटितं काव्यं गौडैः पौरस्त्यैः नादृतम् माधुर्यगुण-
३त्वेन नाङ्गीकृतम् । समानश्रुतिवर्णानां रसोपकारकचमत्कृतिशून्यत्वान्नायमलंकार इति
तेषामभिप्रायः । अनुप्रासः वर्णावृत्तिरनुप्रासः इत्यग्रे ( १. ५५ ) वर्णितो वर्णानु-
प्रासः । तेषां गौडानां प्रियः । सदृशवर्णोच्चारणेन आविर्भूता चमत्कृतिः रसावहा

---

१. राज्यं. अ, कपा.

२. ततः ब, कपा, ड, प. ३. उद्भवः. कपाः

**अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम् ॥ ५४ ॥**

**वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।**

इति तेषां हृदयम् । वैदर्भीयैस्तु अनुप्रासादपि वर्णानुप्रासादपि वर्णानुप्रासमपेक्ष्ये-त्यर्थः । ल्यब्लोपे पञ्चमी । इदम् श्रुत्यनुप्रासस्नाथं काव्यमिति शेषः । इष्यते रसोपकारकत्वेन स्वीक्रियते । प्रायःपदेन शैथिल्यपारुष्यदोषवर्जिते वृत्यनुप्रासेपि तेषामादरोस्तीति ध्वन्यते । तदुक्तं प्रकाशे—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैश्च परुषा कोमला परैः ॥ इति । ( ९. ८० )

उपनागरिका वैदर्भी परुषा गौडी कोमला पाञ्चाली इति संज्ञान्तरं ज्ञेयम् । श्रुत्य-नुप्रासवृत्यनुप्रासयोः चमत्काराचमत्कारसाक्षात्कारे वैदर्भगौडा एव प्रमाणम् । न तत्र काचन युक्तिरित्यलं पल्लवितेन ॥ ५४ ॥

गौडप्रियमनुप्रासं लक्षयति—**वर्णा इति** । पादेषु श्लोकतुरीयभागेषु पदेषु सुप्तिङन्तरूपेषु । चद्वयमुभयप्राधान्यं सूचयति । तथा च पादगता पदगता वा वर्णावृत्तिः वर्णस्य वर्णयोर्वर्णानां वा आवृत्तिः पुनः पुनरुच्चारणं अनुप्रासः । पुनः पुनरुच्चारणेन साम्यप्रतीतिरनुप्रास इत्यर्थः । तदुक्तं प्रकाशे —वर्णसाम्य-मनुप्रासः । ( ९. ७२ ) इति । अत्र वर्णशब्देन व्यञ्जनं ग्राह्यम् । केवलस्वराणा-मावृत्तौ चमत्काराभावात् । पादेषु च पदेषु च इति बहुवचनेन नैकपादगतो नैकपदगतो वा अनुप्रासो वैचित्र्यावहः इति सूचितम् । अत एव च पतत्प्रकर्ष-ताया दोषत्वं समताया गुणत्वं च संगच्छते । सादृश्यं भिन्नयोरेव भवति इति उच्चारणकालभेदेन एकस्यापि वर्णस्य भेदोवगन्तव्यः । अथवा वर्णावृत्तिरित्यस्य वर्णनामावृत्तिः आवृत्तिजन्या प्रत्यभिज्ञा इत्यर्थः स्वीकर्तव्यः । पुनः पुनः श्रवण-जन्यायाः प्रत्यभिज्ञाया अपि चमत्कारजनकत्वं सुकरम् । आवृत्तिश्च स्वरसहित-स्येति नाग्रहः । स्वरवैषम्येपि चमत्कारदर्शनात् । उक्तं हि दर्पणे —अनुप्रासः शब्दसाम्यं वैषम्येपि स्वरस्य यत् । ( १०, ३. ) इति । सा वर्णावृत्तिः कीदृशी अपेक्ष्यते इति विशदयति—**पूर्वेति** । पूर्वोच्चारितवर्णस्य यः अनुभवः श्रावणप्रत्यक्षं

---

१. इष्यते ब. ड, प. आदतम्. कपा.

**पूर्वानुभवसंस्कारबोधिनी यद्यदूरता[1] ॥ ५५ ॥**

**चन्द्रे शरन्निशोत्तंसे कुन्दस्तवकविभ्रमे[2] ।**

१५तज्जनितो यः संस्कारः भावनाविशेषस्तस्य बोधिनी उद्बोधकर्त्री । एतादृशी यदि अदूरता द्वितीयवर्णादीनां निकटस्थितिः स्यात् तदैवानुप्रास इति शेषः । अस्यायमाशयः । सादृश्यप्रतीतेः प्रत्यभिज्ञाया वा चमत्कृतिजनिकायाः असंभवे नालं-१८कारः स्यात् । वैचित्र्यस्यैव अलंकारत्वेन शिष्टैः स्वीकृतत्वात् । तथा च सादृश्योद्बोधिका वर्णावृत्तिः अनुप्रासालंकार इत्यर्थः । तच्च सादृश्योद्बोधनं आवृत्तौ द्वित्रवर्णव्यवधानं कथंचित् सहते न तु बहुवर्णव्यवधानम् । एतदग्रे प्रत्युदाहरणे २१स्फुटीभविष्यति । अस्यानुप्रासस्य भोजराजप्रभृतिभिर्बहवः प्रकारा दर्शिताः । तान् सर्वान् विस्तारभिया वयमत्र प्रतिपादयितुं नेहामहे । जिज्ञासुभिस्ते सर्वे तत एव ज्ञातव्याः । कांश्चिदतिप्रसिद्धान् वयमत्र विवेचयामः । तथा च सोयमनुप्रासः २४छेकवृत्तिलाटभेदेन त्रिविधः । तदुक्तं प्रकाशे —वर्णसाम्यमनुप्रासः छेकवृत्तिगतो द्विधा ।( ९. ७९ ) इति । तथैव —शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः । ( ९. ८१ ) इति । एतेषां क्रमेणोदाहरणानि—

२७ ततो रणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ इति ।

अत्र नकारदकारात्मकस्य तथा णकारडकारात्मकस्य अनेकव्यञ्जनस्य सकृत् ३०साम्यमिति छेकानुप्रासः ।

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥

३३अत्र रेफस्य लकारस्य च असकृदावृत्त्या वृत्त्यनुप्रासः ।

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥

३६अत्र तात्पर्यभेदेनार्थभेदः इति लाटानुप्रासः ॥ ५५ ॥

उद्देशानुरोधेन पादगतं वर्णानुप्रासमुदाहरति—**चन्द्रे इति** । कुन्दानां कुन्दकुसुमानां स्तबकः गुच्छः तद्वत् विभ्रमः शोभा यस्य तस्मिन् । शरन्निशोत्तंसे

---

१. °बोधनी यद्यदूरगा. अ.

२. संनिभे. कपा, प.

इन्द्रनीलनिभं लक्ष्म संदधात्यलिनः[1] श्रियम् ॥ ५६ ॥
चारु चान्द्रमसं भीरु बिम्बं पश्यैतदम्बरे ।
मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥ ५७ ॥

शारदरात्रिभूषणायमाने चन्द्रे । इन्द्रनीलमणेः निभं सदृशं । लक्ष्म कलङ्कः । अलिनः भ्रमरस्य । श्रियं शोभां । संदधाति बिभर्ति । अत्र चतुर्षु पादेषु चन्द्र कुन्द इन्द्र सन्द इति क्रमेण नकारदकारौ अनुसृतौ भवतः । अथवा चन्द्र इन्द्र कुन्द सन्द इति नकारदकाररेफाणां नकारदकारयोश्च आवृत्तिः इति वृत्यनुप्रासः । एवंविधैः अलंकारैः उपस्कृतोयं श्लोकः स्ववर्ण्यशृङ्गारोद्दीपकविभावभूतं रजनीकरमलंकुरुते । तेन च शृङ्गाररसः परिपुष्टो भवतीति शब्दनिष्ठमाधुर्यं रसपरिपोषकं ज्ञेयम् । तथैव च रूपकोपमाद्यर्थालंकारैरुपस्कृतो वाच्यार्थोपि तमेव रसं परिपोषयति इत्यर्थनिष्ठमपि माधुर्यं ज्ञेयम । केचित्तु अत्र प्रथमपादे शकारयोः द्वितीये बवयोरभेदात् ककारवकारयोस्तृतीये लकारनकारयोरनतिदूरस्थितयोरावृत्त्या वृत्यनुप्रासः । चतुर्थे तु संदधात्यलिनः इत्यत्र यकारवर्जिताः सर्वे दन्त्या इति श्रुत्यनुप्रासः । इति योजयन्ति । परं मूले लक्षणश्लोके पादेषु च पदेषु च इति स्थानद्वयस्य निर्देशः कृतः । तदनुरोधेनैव उदाहरणोपपत्तिः कर्तव्या इति चिन्त्यमेतद् व्याख्यानमिति भाति ॥ ५६ ॥

इत्थं पादगतमनुप्रासं प्रदर्श्य संप्रति पदगतमनुप्रासं दर्शयति—**चार्विति** । हे भीरु संशयसंत्रस्ते कोमलाशये । चारु त्वच्चिन्तनेन मनोहरम् । मन्मथाक्रान्तं मदनाभिभूतम् । मन्मनः मच्चित्तम् । निर्दयं यथा तथा । हन्तुं प्रहर्तुम्[2] । उद्यतं उद्युक्तम् । एतत् चान्द्रमसं इन्दुसंबन्धि । बिम्बं मण्डलम् । अम्बरे वियति । पश्य । कामुकस्य कुपितां नायिकां प्रत्युक्तिरियम् । अत्र प्रथमपादे चाकाररुकारयोरावृत्तेर्वृत्त्यनुप्रासः । द्वितीये मकारबकारयोः संयुक्तयोः सकृदावृत्तेः छेकानुप्रासः । अत्र पादद्वये भिन्नाः अनुप्रासाः केवलं पदेषु वर्तमानाः सन्तीति पदगता ज्ञेयाः । पूर्वत्र तु पादे पादे तेषामावृत्तिरिति पादगतता बोद्धव्या । केचित्तु अनुप्रासे स्वरावृत्तेः प्रयोजनं नास्ति । तथापि स्वरसहितव्यञ्जनावृत्तिः सविशेषां शोभां धत्ते इति प्रदर्शनाय एतदुदाह-

---

१. अनिलः. ब.

२. कर्तुं. अ, कपा.

**इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्[1] ।**
**न तु रामामुखाम्भोजसदृश[2]श्चन्द्रमा इति ॥ ५८ ॥**
**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः ।**

रणमिति मन्यन्ते। चाकाररुकारयोरावृत्त्या च तत् समर्थयन्ते। परं तत्रारुचिबीजं पूर्वश्लोकव्याख्याने दर्शितमेव। अत्र पूर्ववदेव अनुप्रासालंकारस्य पर्यायोक्तालंकारस्य १२च विप्रलम्भशृङ्गारपरिपोषकत्वात् शब्दार्थनिष्ठं माधुर्यं ज्ञेयम् । चारु चान्द्रमसमिति वाक्यस्य कोपं विहाय मां भजस्व इत्यर्थतात्पर्यकत्वेन पर्यायोक्त्यलंकारो ज्ञेयः॥ ५७॥

अनुप्रासलक्षणे निवेशितस्य अदूरता इति विशेषणस्य अन्वयव्यतिरेकेण प्रयोजनं दर्शयति—**इत्येति** । इति पूर्वश्लोकेषु दर्शिताम्। नातिदूरान्तरश्रुतिम् ३अतिदूरं अत्यन्तं दूरं अन्तरं व्यवधानं यस्याः सा अतिदूरान्तरा। तथाविधा श्रुतिर्यत्र सा अतिदूरान्तरश्रुतिः। तथा न भवतीति नातिदूरान्तरश्रुतिः ताम् । अत्र वर्णावृत्तिरिति पदमध्याहार्यम् ! अथवा नातिदूरान्तरश्रुतिम् इतिपदमनुप्रासं इत्य६स्यैव विशेषणम् । इच्छन्ति सहृदया इति शेषः । अदूरतायाः प्रत्युदाहरणं कथयति—**नत्विति** । रामाया मुखमेव अम्भोजं तत्सदृशः चन्द्रमा इति । एवंविधविदूरावृत्तौ वृत्त्यनुप्रासो न भवति ।अत्र रामा इति माकारस्य चन्द्रमा ९इत्यत्र आवृत्तिः। सा च दूरश्रुतिरिति पूर्वसंस्कारबोधिका न भवतीति नात्र माकारानुप्रासः। विभिन्नस्वरयोः मकारयोः प्रथमे पादे दकारयोश्च नातिदूरस्थयोर्द्वितीये आवृत्तिर्वर्तते। अतः केवलवर्णावृत्तेः सत्त्वादत्र वृत्त्यनुप्रासो वर्तते एव १२तथा सदृशश्चन्द्रमा इत्यत्र श्रुत्यनुप्रासोपि दृश्यते । उदाहृते अस्मिन् वृत्त्यनुप्रासे वैदर्भाणां न प्रतिकूलता इति–अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते इति उत्तरश्लोकस्थविधानेन निष्पद्यते इति विचारणीयं विद्वद्भिः॥ ५८॥

वैदर्भाप्रियं सदोषमनुप्रासं दर्शयति—**स्मर इति** । नायकेन उपेक्षिताया विरहिण्या उक्तिरियम्। स्मरः मदनः। खरः निष्ठुरः तीक्ष्णः अतिदुःसहः इत्यर्थः।

---

१. स्थितिम्. कपा. २. °सदृक्ष°. अ.

च्युतो मानोधिको रागो[1] मोहो जातोसवो गताः ॥ ५९ ॥
इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति[2] ।
अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥
आवृत्तिं[3] वर्णसंघातगोचरां यमकं विदुः ।

३कान्तः प्रेयान् । खलः निष्ठुरः । नः अस्माकम् । कायः शरीरम् । कोपश्च कान्तविषयकः क्रोधः । कृशः क्षीणः नष्टप्रायः । मानः स्वगौरवम् । च्युतः गलितम् । रागः संभोगाभिलाषः । अधिकः वृद्धिं प्राप्तः । मोहः चित्तवैक्लव्यम् । जातः उत्पन्नम् । ६असवः प्राणाः । गताः गतप्रायाः । अत्र प्रथमचरणे रेफखकारयोः द्वितीये ककाराणां च आवृत्त्या वृत्त्यनुप्रासः । तृतीयचतुर्थयोर्दन्तस्थानिनां निवेशात् श्रुत्यनुप्रासः । प्रथमार्धे विसर्गबाहुल्यात् पारुष्यम् । उत्तरार्धे संयुक्तवर्णाद्यभावाच्च शैथिल्यम् । अत्र ९वृत्त्यनुप्रासश्रुत्यनुप्रासयोः पारुष्यशैथिल्यदोषग्रस्तत्वान्नेमौ अलंकारौ भवतः । तेन च नैताभ्यां विप्रलम्भशृङ्गारस्य परिपोष इति नास्त्यत्र माधुर्यगुणसद्भावः ॥५९॥

उदाहृतानुप्रासस्य दोषं दर्शयति—**इत्यादीति** । एवमादिकं सानुप्रासमपि काव्यं बन्धपारुष्यम् विसर्गबाहुल्येन पूर्वार्धे । शैथिल्यम् संयुक्तव्यञ्जनविसर्गादीनाम- ३भावाच्छिथिलताम् उत्तरार्धे च । नियच्छति अर्पयति । उक्तं हि विसर्गादीनां पारुष्यम्—अनुस्वारविसर्गौ तु पारुष्याय निरन्तरौ । इति । एवं दोषसनाथमनुप्रासम् वृत्तिश्रुत्यनुप्रासम् । दाक्षिणात्याः वैदर्भाः । न प्रयुञ्जते न व्यवहरन्ति । अयमाशयः । ६वैदर्भाः श्रुत्यनुप्रासे आदरयुक्ताः वृत्त्यनुप्रासे च अमत्सरिणः । तथापि केवल- मनुप्रासलोभेन न सदोषयोस्तयोः स्वीकारं ते कुर्वन्ति । गौडास्तु सदोषमपि तमनु- प्रासलोभेनाङ्गीकुर्वन्ति । अयमेव भावः नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते इति ९वाक्येन कविना स्पष्टीकृतः । अत्र गौडैः प्रेमचन्द्रशर्मभिर्यद्व्याख्यानं कृतं तन्न ग्रन्थकृदाशयानुकूलमिति सुधीभिर्विचारणीयम् ॥ ६० ॥

ननु यदि वर्णावृत्तिः रसपोषकमाधुर्यगुणवती तर्हि यमकमपि वर्णसंघाता- वृत्तिरूपं माधुर्यगुणशालि अस्तीति तस्याप्यत्र निरूपणं कुतो न कृतमिति कथ- ३यति—**आवृत्तिमिति** । वर्णसंघातः पूर्वोक्तवर्णसमुदायः गोचरो विषयो यस्यास्ता-

---

१. रोगो. अ. २. निगच्छति. ब.

३. आवृत्तिमेव संघात°. बपा, क.

**तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते ॥ ६१ ॥**

मावृत्तिं पुनरुच्चारणम् । यमकम् यमकसंज्ञकशब्दालंकारम् । विदुः जानन्ति । अलंकारिका इति शेषः । अत्र आवृत्तिः यथानुपूर्विकाणां स्वरसहितव्यञ्जनानाम् । ६स्वररहितकेवलव्यञ्जनावृत्तेरनुप्रासविषयत्वात् । सेयमावृत्तिः सार्थपदस्यास्ति चेत् द्वितीयपदं भिन्नार्थमपेक्ष्यते । अन्यथा—यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि सादरं वचः । इत्याद्येकार्थपदावृत्तिस्थले यमकालंकारातिप्रसङ्गः स्यात् । परं ९नैतादृशे स्थले केनापि साहित्यकोविदेन यमकं स्वीक्रियते । ससुरभिं सुरभिं सुमनोभरैः । इत्यादौ रभिंसु इति निरर्थकपदावृत्तौ यमकस्य सद्भावादुक्तं सार्थपदस्यावृत्तौ इति । तथा चोक्तं दर्पणे—

१२ सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ इति । ( १०. ८ )

अनुप्रासे बहूनां क्वचिदेकस्वरसाहितस्य व्यञ्जनस्य आवृत्तिः संभवति । यमके तु १५स्वरसहितव्यञ्जनानां पूर्वक्रमेणैवावृत्तिः इत्युभयोर्भेदः । स च यमकविषये तृतीयपरिच्छेदे तन्निरूपणप्रसङ्गे विशेषं कथयामः । तत् तु तद्यमकं तु । नैकान्तमधुरम् न अनुप्रासवच्छब्दमाधुर्यगुणवत् । यतः स्वरसहितवर्णसंघातावृत्त्यपेक्षया वर्णावृत्तौ १८मध्ये मध्ये विभिन्नवर्णनिवेशात् सा अनुप्रासरचना विशेषशोभाशालिनी भवति । यथा मालायाः सजातीयपुष्पसंघातग्रथनापेक्षया प्रतिकुसुमं परस्तात् भिन्नभिन्नकुसुमसंनिवेशे सति सा माला रमणीया भवति तथेयमनुप्रासरचना मनोहरा २१भवतीति भावः । अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । इत्यादिवृत्त्यनुप्रासोदाहरणेषु अन्तरान्तरा एकवर्णावृत्त्या यादृशी चारुता न तादृशी—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
२४ मृदुलतान्तलतान्तमलोकयत् ससुरभिं सुरभिं सुमनोभरैः ॥

इत्यादौ स्वरव्यञ्जनसंघातावृत्तिरूपे यमके । अपरं च वर्णसंघातावृत्तौ अर्थावबोधः क्लेशेन भवति । न तथा अनुप्रासविशिष्टे काव्ये । तथा च यमके अर्थानुसंधानव्यग्र२७तया रसप्रतीतेर्विलम्बेनोद्भवान्नेयं रचना रसोपकारिका । अनुप्रासस्तु अर्थानुसंधाने व्यग्रतामकुर्वन्नेव श्रुतिमात्रेण शब्दमलंकुर्वन् रसं पुष्णाति इति तत्र माधुर्यमस्तीति भावः । अथ यमकस्य रसानुपकारकत्वे कथमलंकारता स्यात् । रसोपकारकयोरेव

**कामं सर्वोऽप्यलंकारो रसमर्थे निषिञ्चति[1] ।**
**तथाप्यग्राम्यतैवैनं[2] भारं वहति भूयसा ॥ ६२ ॥**

३०शब्दार्थान्यतरशोभाजनकयोरलंकारत्वनियमात् इति चेत् सत्यम् । तदर्थमेव हि नैकान्तमित्युक्तम् । यमके माधुर्यं वर्तते एव । परं तन्नानुप्रासवत् विपुलमस्ति । अतस्तद् यमकनिरूपणं नात्र माधुर्यगुणविवेचने क्रियते । तद्विचारं शब्दालंकार-
३३प्रस्तावे करिष्याम इति भावः ॥ ६१ ॥

उद्देशवाक्ये वस्तुन्यपि रसः स्थितः इति अर्थगतमाधुर्यं निर्दिष्टमस्ति । तदिदानीं दर्शयति—**काममिति** । सर्वोपि शब्दगतः अर्थगतः उभयगतश्चानु-
३प्रासोपमापुनरुक्ताद्यलंकारः । अर्थे वाच्यलक्ष्यव्यङ्ग्यस्वरूपे प्रस्तुतेर्थे । कामं पर्याप्तम् । रसं निषिञ्चति । उत्कर्षतया स्वाश्रयीभूतार्थस्थिताम् रसव्यञ्जकतामुत्कर्षयतीत्यर्थः । तथापि अलंकारस्य रसोत्कर्षाधायकत्वेपि । अग्राम्यता ग्राम्यः हालिकादिप्राकृत-
६जनव्यवहृतः तद्भिन्नः अग्राम्यः तस्य भावस्तत्ता । विदग्धजनव्यवहारः इति भावः । भूयसा अलंकाराद्यपेक्षयापि बाहुल्येन । एनं भारं रसनिषेकरूपम् । वहति । अलंकाराः यथाकथंचिद्रसं परिपोषयन्ति । अग्राम्यता तु तदेव बाहुल्येनानुतिष्ठति ।
९दृश्यते हि निरलंकारयोरपि विशुद्धयोः शब्दार्थयोः रसपरिपोषकता । तथा च अग्राम्यतासनाथा एव अलंकारा रसोत्कर्षा इति सिद्धम् । ग्राम्यतापदं अश्लीलता-दीनामुपलक्षणम् । भूयसा इत्यनेन प्राकृतजनव्यवहारे ग्राम्यता न दोषाय इति
१२ध्वनितम् । तदुक्तं साहित्यदर्पणे विश्वनाथेन—सुरतारम्भगोष्ठ्यादावश्लीलत्वं गुणो भवेत् । इति । ( ७. १७ ) तत्र अवैदग्धग्राम्यत्वं यथा—

स्वपिति यावदयं निकटे जनः स्वपिति तावदहं किमपैति ते ।
१५ इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥ इति ।

असभ्यार्थनिबन्धनं वा ग्राम्यत्वम् । यथा—

ब्रह्मचर्योपतप्तोहं त्वं च क्षीणा बुभुक्षया ।
१८ भद्रे भजस्व मां तूर्णं तव दास्याम्यहं पणम् ॥ इति ।

व्रीडादिव्यञ्जकमश्लीलम् । यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।

---

१. निषिञ्चतु. क. २. एतं. ब.

**कन्ये कामयमानं मां न त्वं[1] कामयसे कथम् ।**
**इति ग्राम्योयमर्थात्मा वैरस्याय[2] प्रकल्पते ॥ ६३ ॥**
**कामं कन्दर्पचाण्डालो[3] मयि वामाक्षि निर्दयः ।**

२१ यथास्य जायते पातो न तथा पुनरुन्नतिः ॥ ( भामह १. ५१ )
इत्यलं पल्लवितेन ॥ ६२ ॥

अग्राम्यतास्वरूपावबोधाय प्रथमं ग्राम्यं दर्शयति—**कन्ये इति** । कन्ये इति पदं पुत्र्या आह्वाने एव प्रयुज्यते । नायिकायास्तु प्रेयसिसुंदरिविलासिनीत्यादीनि पदानि प्रयुज्यन्ते । अतोत्र कन्ये इतिपदं वैरस्योत्पादकत्वेनानुचितम् । अत एव ३ग्राम्यता । तदुक्तम्—यद्यत्रानुचितं तद्धि तत्र ग्राम्यं स्मृतं यथा । इति । अत्र वैरस्योत्पादकः कन्याशब्दार्थः एव । न तु अविदग्धजनव्यवहृतगल्लकत्यादि-शब्दवत् कन्याशब्दः । स च—कन्येयं कलधौतकोमलरुचिः इत्यादौ सभ्यै-६र्व्यवहृतोस्ति । सभ्येतरव्यवहृतस्यैव गल्लादिशब्दस्य प्राचीनैर्ग्राम्यत्वमुक्तम् । काम-यमानम् कामाभिलाषुकम् । मां कथं न कामयसे उपभोक्तुं कथं न वाञ्छसि । सुरताभिलाषरूपो ह्यर्थो निगूहितः सन् भङ्ग्यन्तरेण सूचितः कामिनीकुचकलशवत् ९रसातिशयं प्राप्नोति । न तथा विस्पष्टमभिधीयमानः सभ्यानां लज्जामुत्पादयन् रसस्वादवैमुख्यजनकः । अतः ईदृशः ग्राम्योर्थः सर्वथा परिहरणीय एव । अत्र यद्यपि शृङ्गारानुकूल्योः ककारमकारयोरावृत्त्या वृत्त्यनुप्रासः वर्तत एव तथापि १२न सोनुप्रासः अन्यो वा यः कोपि शब्दार्थालंकारः वर्ण्यमपि ग्राम्यार्थेन निकृष्टी-कृतं पद्यस्थशृङ्गारं उपकर्तुं प्रभवति । अतोत्र ग्राम्यतादोषेण माधुर्यगुणाभावो बोद्धव्यः । एतदेव कथयति । इति एवंप्रकारकः । ग्राम्यः ग्राम्यतादोषकवलितः । १५अर्थात्मा अर्थस्वरूपम् । वैरस्याय रसानुभवप्रतिबन्धेन अरुचये । प्रकल्पते प्रभवति ॥ ६३ ॥

तमेवार्थमग्राम्यस्वरूपं दर्शयति—**काममिति** । वामे मनोहरे अक्षिणी यस्याः सा तत्संबुद्धिः हे वामाक्षि मनोहरलोचने । अनेन नायिकायाः सौन्दर्य-३प्रशंसया अभिप्रेतसंपादनानुकूलवचोवैदग्धिः चाटुकारस्य सूच्यते । अतो नास्ति-

---

१. त्वं न. कपा. २. वैरस्यायैव कल्पते. क.

३. °चण्डालो. अ, क.

**त्वयि निर्मत्सरो दिष्टयेत्यग्राम्योऽर्थो रसावहः ॥ ६४ ॥**
**शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्तनात् ।**
**यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥**
**पदसंधानवृत्त्या[1] वा वाक्यार्थत्वेन वा पुनः ।**

ग्राम्यता । कन्दर्पचाण्डालः कन्दर्पे चाण्डालारोपेण तस्य प्रखरवेदनाप्रदत्वं तेन च स्वस्य दुःखातिरेकः सूच्यते । कामम् अत्यन्तम् । मयि निर्दयः । तेनाभिहतः ६कथमपि जीवितं धारयामीत्यर्थः । त्वयि निर्मत्सरः मत्सदृशदुःखाप्रदानेन अपगतमत्सरोऽस्तीति जानामि । दिष्टया एतन्मदीयसौभाग्यमेव । इति अग्राम्यः शिष्टसंप्रदायानुसृतः । अर्थः रसावहः रसव्यञ्जकतया माधुर्यगुणवानित्यर्थः । अयं ९भावः । कन्दर्पचाण्डालो मयि निर्दयः त्वयि निर्मत्सरः इति वाक्याभ्यां त्वयि अनुरक्तोऽहं त्वं च मां नानुकम्पसे इति पूर्वश्लोकोक्त एवार्थः मनोहरया भङ्गया सूचितोऽस्ति । अतः अग्राम्यः सन् वक्तृवैदग्ध्यसूचनेन चमत्कारभूमिरेषः । अनेन १२च विप्रलम्भशृङ्गारस्य परिपोषो भवति । अतोऽयमर्थो माधुर्यं गुणमावहति ॥६४॥

माधुर्यप्रतिबन्धकमर्थगतं ग्राम्यत्वं निरूप्य शब्दगतं तन्निरूपयति — **शब्देऽपीति** । सा ग्राम्यता । सभ्येतरकीर्तनात् सभायामुच्चारणयोग्यत्वेन साधु ३सभ्यम् तस्मादितरदसभ्यम् ग्राम्यजनमात्रव्यवहृतं पदम् तस्य कीर्तनात् प्रयोगात् । शब्देऽपि भवतीति शेषः । अत्र कीर्तनं विदग्धजनकर्तृकमेव । ग्राम्यकर्तृके तु दोषाभावः । रत्युत्सवस्य संभोगशृङ्गारस्य निरूपणे वर्णनप्रसङ्गे । यकारादिपदं यकारः ६आदिर्यस्य तत् पदम् । यभ् मैथुने इति धातुनिष्पन्नं यभस्वेत्यादिपदम् । तत्पदप्रयोगश्च प्रयोक्तुर्ग्राम्यतां व्यञ्जयन् श्रोतुर्लज्जामुद्बोधयन् रसास्वादमाधुर्यमन्तरयति । अतः आस्वादव्यवधायकत्वान्नात्र माधुर्यगुण इति भावः । सुरतनिधुवनादिपदानां शिष्टा९दृतत्वात् तत्प्रयोगे न शब्दग्राम्यता । यथा माघे—नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य । इति । (११.१८) । उत्तिष्ठन्त्या रतान्ते इति च वेणीसंहारे (१.३) ॥६५॥

पूर्वं विशिष्टपदे ग्राम्यता दर्शिता । इदानीं सा पदानां सान्निध्यविशेषेण वाक्यार्थविशेषेण च आविर्भवन्ती रसास्वादवैमुख्यं जनयतीति न तत्र माधुर्यमिति ३सोदाहरणं प्रदर्शयति—**पदसंधानेति** । पदानां संधानं संधिः संहितेति यावत् ।

---

१. पदसंघात°. बपा.

**दुष्प्रतीतिकरं ग्राम्यं यथा यां भवतः प्रिया ॥ ६६ ॥**
**खरं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति ।**

तद्वृत्त्या तद्वत्त्वेन । विशिष्टपदसंहिताजन्या इति यावत् । तथा वाक्यार्थत्वेन आर्थ्या व्यञ्जनया वाक्यार्थगतत्वेन वा । दुष्प्रतीतिकरं दुः दुष्टा व्रीडाजुगुप्साद्यमङ्गलार्थ-
३सूचकत्वेन निन्दिता या प्रतीतिः पदार्थानुभवः तत्करम् । वाक्यस्य वाक्यार्थस्य वा दुष्प्रतीतिकरत्वरूपाश्लीलत्वमिति भावः । ग्राम्यम् ग्राम्यतादोषवत् । तच्च माधुर्ये परित्याज्यम् । तत्र पदसंधानगतं व्रीडाव्यञ्जकत्वरूपमश्लीलं दर्शयति—
९**यथेति** । भवतस्तव । प्रिया प्रेयसी । इति असंहितायां प्रस्तुतार्थः । संहितायां तु याभो मैथुनम् । यभ् मैथुने इत्यस्मात् भावे घञ् । पश्चाद्भूमार्थे मतुप् । सततमैथुनानुरक्तस्य तव प्रिया मैथुनसाधनेन प्रीणयित्री इति अश्लीलार्थद्योतनेन सभ्यानां
१२व्रीडाकरमेतद्वाक्यम् । अतो नात्र माधुर्यम् । ननु—यथा यकारादिपदम् इत्यनेनैव यभ्धातुनिष्पन्ने ग्राम्यत्वमुक्तमस्ति । अत्रापि तद्धातुनिष्पन्न एव याभवान् शब्दः । तर्हि तेनैवास्य प्रयोगस्य सदोषत्वे सिद्धे पुनः किमर्थं पदसंधानवृत्त्या दुष्प्रतीति-
१५करस्य सदोषत्वेन कथनमिति चेन्न । अभिधावृत्त्या असभ्यार्थोपस्थापकस्य स्वतन्त्रपदस्यैव शब्दग्राम्यत्वम् । अत्र तु मुख्यार्थबोधानन्तरं संहितोच्चारण-कल्पनानुरोधेन व्यञ्जनया अश्लीलार्थभानम् । अतो न द्वयोः स्वरूपैक्यम् ।
१८पदसंधानवृत्त्या दुष्प्रतीतिकराणि—चलं डामरचेष्टितम् । तदत्रैव रुचिं कुरु । गौरी नारींग्लण्डदेशे विभाति । इत्यादीनि बहूनि सन्ति । अत्र संहितानिरपेक्षाणि पदानि अभिधावृत्त्या असभ्यार्थं दर्शयितुं लेशतोपि न प्रभवन्ति । संहितायां तु
२१असभ्यच्छाया वरीवर्ति । अतः पदपदसंधानयोर्दोषयोर्भिन्नस्वरूपत्वेन भिन्नं लक्षणं युक्तमेव ॥ ६६ ॥

वाक्यार्थगतं ग्राम्यमुदाहरति—**खरमिति** । वीर्यवान् पराक्रमशाली पुरुषः दाशरथी रामः । खरं तन्नामकं राक्षसम् । प्रहृत्य । विश्रान्तः विश्रान्तिं लेभे । अथवा
३पुरुषः कोपि शूरः । खरं तीक्ष्णम् । प्रहृत्य शत्रुमभिहत्य । विश्रान्तः विश्रान्तिं लेभे । एवं प्राकरणिकोर्थः प्रथममाविर्भवति । पश्चात् वक्त्रादिवैलक्षण्येन वर्यिवान् शुक्रवान् । पुरुषः कश्चित् कामुको युवा । खरं गाढम् । प्रहृत्य मदनध्वजप्रहारं दत्त्वा
६विश्रान्तः ग्लानिं प्राप्तः इत्यर्थः आर्थ्या व्यञ्जनया प्रतीतिपदवीमारोहति ।

---

१. वा, अपा.

**एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥**
**भगिनीभगवत्यादि सर्वत्रैवानुमन्यते ।**

एवं वाक्यार्थगताश्लीलदोषेण दुष्टत्वान्नात्र माधुर्यम् । न चेदं वाक्यगतमश्लीलत्वम् । एकार्थमात्रसंकेतितानां खरमित्यादिवाक्यघटकपदानां शाब्द्या व्यञ्जनाया अनाश्र-
९यत्वेन असभ्यार्थोपस्थापकत्वाभावात् । वाक्यार्थस्यैव वक्तृविशेषादिभिः आर्थ्या व्यञ्जनया द्वितीयार्थोपस्थापकत्वम् । एवं च शब्दपरिवृत्त्यसत्वसहत्वाभ्यां शब्दार्थ-गतत्वनिश्चयोवगन्तव्यः । तथा च यत्र शब्दपरिवृत्त्यसहमश्लीलं तद्वाक्यगतम् । यत्र
१२च तत्सहं तदर्थगतम् । प्रकृतोदाहरणे खरादिपदानां गाढादिपदैः परिवर्तनेपि अश्लीलतायाः सद्भावात् शब्दपरिवृत्तिसहत्वेन अर्थगतत्वं ज्ञेयम् । एवं च यत्र एकार्थमात्रप्रतिपादकानां पदानां प्रकरणादिभिः प्रस्तुतेर्थे निश्चितेपि वक्त्रादि-
१५वैशिष्ट्यसचिवया आर्थ्या व्यञ्जनया अपरार्थस्य भानम् तत्रार्थगतत्वम् । यत्र च अनेकार्थस्य शब्दस्य प्रकरणादिभिः प्रस्तुतार्थे निश्चिते शाब्द्या व्यञ्जनया अप्रस्तुतार्थप्रतीतिस्तत्र शब्दगतत्वम् । यदुक्तं प्रकाशे—

१८ अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ इति । ( २. १९ )

न चात्र वीर्यपदस्य शुक्रबलवाचकत्वेन द्व्यर्थता अस्तीति शाब्दी व्यञ्जना
२१शङ्कितव्या । बलस्य केवलवीर्यजन्यत्वेन एकत्वाङ्गीकारात् । वीर्यपदस्य परिवृत्ता-वपि अश्लीलार्थभानस्य अनपायाच्च । तथा च नेदं वाक्यगतमश्लीलत्वम् । अपि तु अर्थगतमेव । एवमादि निरुक्तग्राम्यतादि । आदिशब्देन नेयत्वादयो दोषा अग्रे
२४वर्ण्यमाना ग्राह्याः । उभयोः गौडवैदर्भयोः मार्गयोः । न शंसन्ति न प्रशंसन्ति । तत्तन्मार्गानुयायिनः इति शेषः । एवं च अनुप्रासकृतवैलक्षण्येपि ग्राम्यतादोष-विषये उभयोरैकमत्यमिति भावः ॥ ६७ ॥

पूर्वोक्तग्राम्यतायाः अपवादमाह—**भगिनीति** भगिनी भगवती आदि-शब्देन योनीलिङ्गादीनां संग्रहः । यथा शिवलिङ्गं विश्वयोनिरित्यादि । सर्वत्र
३व्यवहारे काव्येषु वैदर्भ्यादिरीतिषु च अनुमन्यते निर्दुष्टतया सर्वैः स्वीक्रियते । शिष्टपरिगृहीतानां शब्दानां प्रयोगे दोषानुसंधानायोगात् । श्रोतॄणां वैरस्योत्पाद-नेन वैमुख्यजनकत्वाभावात् इति भावः । तदुक्तं भोजराजेन—

६ ग्राम्यं घृणावदश्लीलामङ्गलार्थं यदीरितम् ।
तत् संवीतेषु गुप्तेषु लक्षितेषु न दुष्यति ॥ इति । ( १. १०५ )

संवीतेषु अपुष्टतयाङ्गीकृतेषु । स एव संवीतस्यादुष्टत्वं पुनर्दृष्टान्तपूर्वकमाह—

९ संवीतस्य हि लोकेस्मिन् न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्ववासना ॥ इति ।

संवीतादीनामुदाहरणानि—

१२ तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने योजयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ इति ।

अत्र तद्वीर्यनिषेकभूमिः इति पदस्याश्लीलत्वेपि संवीतत्वाद् गुणत्वम् । गुप्तत्वं नाम १५प्रसिद्धार्थेनाप्रसिद्धासभ्यार्थस्य गोपनम् । यथा—

सुदुस्त्यजा यद्यपि जन्मभूमिः गजैरसंबाधमयांबभूवे ।
स तेनुनेयः सुभगोभिमानी भगिन्ययं नः प्रथमाभिसंधिः ॥

१८इति । अत्र जन्मभूमिसंबाधसुभगभगिनीशब्दानां जन्मभूसंकटसुन्दरस्वस्राद्यर्थेषु प्रसिद्धानां योन्यादिरूपाश्लीलार्थान्तरत्वेपि प्रथमार्थप्रभावेन गुप्तत्वात् गुणत्वम् । तथा चोक्तम् तत्रैव—

२१ वस्तुमाहात्म्यगुप्तस्य पदार्थस्य विभावनात् ।
भगिनीभगवत्यादि नासभ्यत्वेन भाव्यते ॥ इति ।

लक्षितानि असभ्यार्थबोधकानि यथा—

२४ ब्रह्माण्डकारणं योप्सु निदधे बीजमात्मनः ।
उपस्थानं करोम्येष तस्मै शेषाहिशायिने ॥ इति ।

अत्र ब्रह्माण्डोपस्थानशब्दयोरसभ्यस्मृतिहेतुत्वेपि अन्यत्र लक्षितत्वाद्गुणत्वम् । २७क्वचिदाश्रयसंबन्धादश्लीलादीनां गुणत्वम् । तदुक्तं भोजराजेन—

किंचिदाश्रयसंबन्धाद्धत्ते शोभामसाध्वपि ।
कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ॥ इति । (१. १०६)

३०यथा—

आन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयत्यम्बरम् ।

**विभक्तमिति माधुर्यमुच्यते सुकुमारता ॥ ६८ ॥**
**अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते[1] ।**

३३ पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

अत्राश्रयस्य पिशाचाङ्गनानां बीभत्सरसोचितत्वात् तद्वर्णनमदोषः । एवं शृङ्गारे
३६ शान्तरसे च न दोषः । तदुक्तं प्रकाशे——अश्लीलत्वं क्वचिद्गुणः । (७. ३०३)
यथा सुरतारम्भगोष्ठ्याम्——द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु । इति काम-
शास्त्रस्थितौ——

३९ करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥

इत्यत्र करिहस्तादयः शब्दा असभ्यार्थबोधकाः सुरतप्रसङ्गवर्णनोद्युक्तस्य कामिन
४२ उक्तित्वान्न दोषावहाः । अत्राप्रस्तुतसमरवृत्तान्तार्थस्तु स्फुट एव । पद्यार्थस्तु
प्रकाशटीकायां द्रष्टव्यः । शान्तेपि रसे अश्लीलत्वं न दोषास्पदम् यथा——

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
४५ क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ इति ।

एवमादयो ग्राम्यतादोषस्य बहवः अपवादाः सरस्वतीकण्ठाभरणादिषु द्रष्टव्याः ।
माधुर्यमुपसंहरति—**विभक्तमिति** । इति एवं पूर्वोक्तगौडवैदर्भमार्गयोः विभक्तम् ।
४८ गौडा वृत्त्यनुप्रासप्रधानं प्रबन्धं मधुरं मन्यन्ते वैदर्भास्तु श्रुत्यनुप्रासप्रधानम् इति
विभागद्वयेन स्थितम् । माधुर्यम् माधुर्यगुणः । अस्तीति शेषः । विभक्तं रसघटि-
तत्वात् विशेषेण दर्शितमिति केचित् । उच्यते सुकुमारता क्रमप्राप्तं सौकुमार्यम्
५१ उच्यते ॥ ६८ ॥

सुकुमारं लक्षयति——**अनिष्ठुरेति** । निष्ठुराणि श्रुतिकटूनि तद्विपरीतानि
अनिष्ठुराणि अपरुषाणि कोमलानीत्यर्थः । एतादृशानि यान्यक्षराणि तानि
३ प्रायः बाहुल्येन यत्र तादृशं वाक्यं सुकुमारम् सौकुमार्यगुणयुक्तम् । इह
साहित्यशास्त्रे । इष्यते कविभिरभिलष्यते । प्रायःशब्देन कोमलवर्णानां सामस्त्यं

---

१. इहोच्यते. क.

**बन्धशैथिल्यदोषोपि**[1]

नापेक्ष्यते । तदेव सप्रयोजनं विशदयति —**बन्धेति** । सर्वकोमले कोमल-
६ वर्णात्मके काव्ये । बन्धस्य शैथिल्यरूपो दोषो दर्शितः—अल्पप्राणाक्षरोत्तरम्
शिथिलं मालतीमाला लोलालिकलिला यथा—इति पूर्वमेव कथितः । ( १. ४३ )
दोषोपि इत्यत्र दोषस्तु इति पाठे हेत्वर्थकः तुशब्दो ज्ञेयः । एवं च कोमला-
९ क्षराणां मध्ये मध्ये च परुषाक्षरविन्यासेन मौक्तिकमालाया अन्तरान्तरा रत्न-
विन्यासेनेव प्रबन्धस्य चारुत्वं सौकुमार्यम् । न चैवं सति श्लेषसौकुमार्ययोरभेदा-
पत्तिः उभयोरपि लक्षणैक्यादिति वाच्यम् । श्लेषस्य महाप्राणमिश्रिताल्पप्राणाक्षर-
१२ विन्यासविशेषेण सौकुमार्यस्य चानिष्ठुराक्षरप्रायत्वेन च द्वयोः परस्परभिन्नत्वात् ।
नन्वल्पप्राणाक्षराण्येव सुकुमाराणीति चेन्न । अल्पप्राणान्यक्षराणि रचनाविशेषेण
निष्ठुराणि महाप्राणान्यपि च कोमलानि भवन्ति । निष्ठुरत्वं नाम श्रुतिकटुत्वम् ।
१५ तच्चैकजातीयानां संयुक्तवर्णानाम् तथा क्षकारह्लाकारादीनामित्यनुभवसिद्धम् ।
यथा—

व्यग्रैरग्र्याग्रहेन्दुग्रसनगुरुभरैर्नो समग्रैरुदग्रैः
१८ प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन् गाम् ।
उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भामिवाह्ना-
मग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥

२१ यथा वा—क्षुत्क्षामान् रूक्षरक्षोरदखरनखरक्षुण्णविक्षोभिताङ्गान् । इति । यथा
वा अग्रे कविनानेनैव दर्शितम् —न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणादिति ।
( १. ७२ ) अत्राल्पप्राणानामपि श्रुतिकटुत्वं वर्तते । महाप्राणानां रचनाविशेषेण
२४ श्रुतिमनोहरत्वं यथा—मधुरया मधुबोधितमाधवी इति पूर्वोदाहृते पद्ये । (११ पत्रे)
अत्र धकारस्य महाप्राणत्वेपि श्रुतिमाधुर्यं वरीवर्ति । नवीनास्तु इदं सौकुमार्यं श्रुति-
कटुत्वदोषाभावफलं मन्वाना श्रुतिकटुत्वदोषपरिहारेणैव तल्लाभान्न तत् स्वतन्त्रतया
२७ गुणत्वेन स्वीकुर्वन्ति ॥ सौकुमार्यस्यान्येषां लक्षणान्युदाहरणानि च । तत्रादौ
भरतः—

सुखप्रयोज्यैर्यच्छन्दैर्युक्तं सुश्लिष्टसंधिभिः ।
३० सुकुमारार्थसंयुक्तं सुकुमारं तदिष्यते ॥ इति । ( १६. १०० )

---

१. दोषो हि. अ, बपा. दोषस्तु. ब, कपा.

दर्शितः सर्वकोमले[1] ॥ ६९ ॥

उदाहरणम्—

अङ्गानि चन्दनरजःपरिधूसराणि
३३ ताम्बूलरागसुभगोधरपल्लवश्च ।
अच्छाञ्जने च नयने वसनं तनीयः
कान्तासु भूषणमिदं विभवावशेषः ॥ इति ।

३६भोजराजस्तु आचार्यदण्डिन एव लक्षणोदाहरणानि स्वीकरोति । ( १. ६८ ) वामनः अजरठत्वं सौकुमार्यं अजरठत्वमपारुष्यम् । यथा—अस्त्युत्तरस्यां दिशि देवतात्मा इति । ( ३. १. २१ ) जगन्नाथः अकाण्डे शोकदायित्वाभाव-३९रूपमपारुष्यं सुकुमारता । यथा—त्वरया याति पान्थोयं प्रियाविरहकातरः । इति । ( ६० पत्रे ) । अत्र प्रियामरणकातरः इति पाठे पारुष्यं तद्रहितत्वात् सुकुमारता इति भावः । आचार्यदण्डिना शब्दगुणत्वेन सौकुमार्यं स्वीकृतम् । परे तु अपारुष्यं ४२सौकुमार्यं तच्चार्थगुणत्वेन स्वीकुर्वन्ति । अपारुष्यं नाम परुषेप्यर्थे वक्तव्ये अपरुषरूपेणाभिधानम् । यथा मृत इति वक्तव्ये कीर्तिशेषं गतः इति । यथा वा—

४५ स किलेन्द्रप्रयुक्तेन शौरिणा भूमिनन्दनः ।
चक्राघातोपदिग्धाध्वा नीतोत्यन्तप्रवासिताम् ॥ इति ।

भोजोपि अर्थगुणं सौकुमार्यमाह—अनिष्ठुरत्वं यत् प्राहुः सौकुमार्यं तदुच्यते ४८इति । ( १. ८० ) उदाहरति च—

सद्यः पुरीपरिसरेपि शिरीषमृद्वी
सीता जवात् त्रिचतुराणि पदानि गत्वा ।
५१ गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥ इति ।

अयं अमङ्गलदोषाभावः अतो न गुणः । तदुक्तं दर्पणे—ग्राम्यदुःश्रवतात्यागात् ५४कान्तिश्च सुकुमारता । ( ८. १२ ) गतार्थेति भावः ॥ ६९ ॥

---

१. °कोमलैः. अ, कपा.

**मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।**
**कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ७० ॥**
**इत्यनूर्जित एवार्थो नालंकारोपि तादृशः ।**
**सुकुमारतयैवैतदारोहति सतां मनः ॥ ७१ ॥**

सुकुमारतामुदाहरति—**मण्डलीति** । मधुराः गीतयः यत्र तादृशैः । कण्ठैः उपलक्षिताः केकारवं कुर्वन्त इत्यर्थः । कलापिनः मयूराः । जीमूताः मेघाः तेषां ३मालाः सन्ति यस्मिन् तादृशे वर्षाकाले । बर्हाणि पिच्छानि । मण्डलीकृत्य मण्डलाकारं विधाय । नृत्यन्ति । अत्र मयूरे नर्तकव्यवहारप्रतीतेः समासोक्तिः । नर्तका अपि गानपूर्वकं नृत्यन्ति । अत्र पूर्वोक्तनिष्ठुरवर्णरचनाभावात् सौकुमार्यम् ॥ ७० ॥

भरतमुनिना स्वीकृतापि सुकुमारता कैश्चित् प्राचीनाचार्यैर्न गुणत्वेन परिगणितास्ति । तदनुरोधेनैवार्वाचीना अपि वर्णविशेषविन्यासात्मका हि सुकुमारता ३तस्या न गुणत्वं युक्तम् । अर्थस्यालंकारचमत्कृतेर्विना तस्याः स्वयं चमत्काराजनकत्वादिति वदन्तः सा ग्राम्यदुःश्रवणादिदोषपरिहारेण गतार्था भवतीति मन्यन्ते । तन्मतं खण्डयति— **इतीति** । इति मण्डलीकृत्येति पद्येन वर्णितः अर्थः कलापि६नर्तनरूपः । अनूर्जित एव अतेजिष्ठ एव रससंपर्कशून्यत्वेनेति भावः । तथालंकारोपि समासोक्तिरूपः न तादृशः न चमत्कारातिशयेन शृङ्गारं परिपोषयति । यथा पिबन् मधु ( २. २०६ ) इत्यादिपद्ये । तथाप्येतत् पद्यं केवलं सुकुमारतयैव ९सौकुमार्यगुणसंबन्धेनैव । सतां सहृदयानां । मनः आरोहति । ते तत्रासक्ता भवन्ति इत्यर्थः । अयमत्राशयः । यद्यप्यस्मिन् पद्येस्ति समासोक्तिः । तथापि न तया सविशेषा चमत्कृतिः रसशून्यत्वात् । अतः सौकुमार्यगुणप्राधान्येनैवैतत् पद्यं १२काव्यं भवति । ततश्च सौकुमार्यं गुणत्वेन स्वीकार्यम् । गुणा एव अलंकारापेक्षया प्राधान्येन काव्यहेतवः । इममेवार्थमभिसंधाय प्राचीनैरुक्तम्—

तया कवितया किं वा तया वनितया च किम् ।
१५ पदविन्यासमात्रेण यया नापहृतं मनः ॥ इति ।

असति गुणवैचित्र्ये अर्थालंकारौ न शोभेते । तदुक्तं भोजराजेन —

---

१. मुखम्. कपा.

**दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।**
**न्यक्षेण क्षपितः[1] पक्षः क्षत्रियाणां क्षणादिति ॥ ७२ ॥**

अलंकृतमपि श्रव्यं न काव्यं गुणवर्जितम् । इति ।

१८ यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥
(१.५९.१५९) इति ।

२१जगन्नाथेनापि रसात्मकं वाक्यं काव्यम् इत्यस्य खण्डनप्रसङ्गे काव्ये शब्दप्राधान्यमुद्दिश्य यदुक्तं तदपि आचार्यदण्डिनोनुरोधेनैवेति ज्ञेयम् । तददोषौ शब्दार्थौ इति लक्षणं न विचारक्षममिति तु पूर्वं ( १३ पत्रे ) प्रपञ्चितमेव ॥ ७१ ॥

गौडास्त्विदं सौकुमार्यं नापेक्षन्त इत्याह—**दीप्तमिति** । अपरैः गौडकविभिः । दीप्तम् दीप्तिः औज्ज्वल्यं तद्युक्तं तद्व्यञ्जकं समुत्तेजकमिति यावत् । दीप्तमिति ३हेतुना कृच्छ्रोद्यमपि कृच्छ्रेण कष्टेन उद्यं उच्चार्यमपि । पदं वाक्यं चेति शेषः । भूम्ना बाहुल्येन । बध्यते काव्ये प्रयुज्यते । ओजस्विरचनानुकूलतया परुषवर्णघटितमत एव कष्टोच्चार्यमपि तैः पदं वाक्यं वाङ्गीक्रियते । सर्वथा ओजोगुण६विशिष्टरचनाप्रिया गौडा रसादिकमननुरुध्यैव तां रीतिमाद्रियन्ते । एतदुदाहरणेन विशदयति —**न्यक्षेणेति** । निर्गते अक्षिणी यस्य सः न्यक्षः धृतराष्ट्रः तेन । क्षत्रियाणां पक्षः समूहः । अखिलक्षत्रियकुलमिति यावत् । क्षणात् क्षणमात्रादेव । ९क्षपितः दुर्मन्त्रेण पुत्रादिभिः नाशितः । कुरुक्षेत्रे महासंग्रामे इत्यर्थः । अत्र धृतराष्ट्रस्य वर्णनप्रसङ्गे तस्यायुध्यमानत्वान्न वीररसप्रसङ्गः । अपि तु दुर्मन्त्रेण सकलक्षत्रियोत्सादात् करुणरसस्यैव वर्णनं प्रस्तुतम् । तत्र चौजःप्रधानरचनाया अयुक्तत्वान्न १२केवलमुच्चारणेन अपि तु रसप्रसङ्गेनापि कृच्छ्रोद्यमेतादृशं प्रबन्धं गौडा विरचयन्ति । तच्च रसापकर्षकत्वान्न वैदर्भैरङ्गीक्रियते । अत्र प्रेमचन्द्रशर्मभिः स्वटीकायां यदुक्तम्—गौडा हि यत्र वीररसादिरूपमोजस्वि व्यङ्ग्यं तत्र परुषवर्णैस्तद्व्यञ्जनस्यावश्यकतया १५सौकुमार्यं नाद्रियन्ते । वैदर्भास्तु तत्रापि सौकुमार्यं प्रवेशयन्ति । यथा—

कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।

---

१. पक्षः क्षपितः. अ, क्षयितः. ब, कपा, ड, प.

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥ ७३ ॥**

१८ नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ इति ।

अत्र रौद्रेपि रसे नात्यन्तमुद्धता वर्णाः इति । तत् सर्वं ग्रन्थकर्तुराशयविरुद्धम् । न २१हि ग्रन्थकर्त्रा वैदर्भाणां कुत्रचिदपि साक्षात् परंपरया वा निन्दा कृता दृश्यते यथा गौडानाम् । न वा वैदर्भैः कृतमनुमतमित्यादि पद्यमनुद्धतवर्णत्वेन निर्दोषमिति प्रशंसितमस्ति । तथा चैतादृशं किमपि पद्यं प्रदर्श्य वैदर्भाणामुपहासविधानं २४गौडानामुपहासायैव भवतीत्याचार्यदण्डिन आशयं विजानन्तः पण्डिता अवगच्छेयुः । तथैव च गौडानां न्यक्षेणेत्यस्य परशुरामेणेत्यर्थकरणमपि कष्टसाध्यं केवलं गौड-दोषपरिहारार्थं वीररसवर्णनप्रसङ्गसंपादनायैवेति सुधियो विदांकुर्वन्त्वित्यलं परम-२७त्सरोद्घाटनेन ॥ ७२ ॥

क्रमप्राप्तामर्थव्यक्तिमुदाहरति—**अर्थेति** । अर्थस्य वाक्यार्थाङ्गभूतस्य अने-यत्वम् अध्याहारादिकष्टकल्पनानैरपेक्ष्येण प्रयुक्तपदेभ्य एवोपस्थितिः । अर्थव्यक्तिः ३एतत्संज्ञको गुणः । तथा च यावन्तोर्था अन्वयोपयोगितयापेक्ष्यन्ते तद्बोधनाय तावतां पदानां विन्यासोर्थव्यक्तिः । उदाहरति —**हरिणेति** । हरिणा वराहरूपधारिणा विष्णुना । खुरक्षुण्णनागासृग्लोहितात् खुरेण शफेन अर्थात् स्वस्यैव क्षुण्णाः ६ताडिताः ये नागा रसातलवर्तिनो भुजगाः तेषामसृग्भिर्लोहितात् आरक्तात् । उदधेः समुद्रात् । भूः पृथ्वी । उद्धृता ऊर्ध्वमानीता । अत्राप्रसिद्धस्योदधेर्लौहित्यस्य वर्णने किमपि कारणमवश्यं निर्देष्टव्यम् । तच्च खुरक्षुण्णेतिविशेषणेन अत्र स्पष्टमेवो-९पात्तम् । अतो नात्रोन्नयनपरिश्रमस्य प्रयोजनमस्ति । अतो यादवपेक्षितार्थस्य विन्यस्तपदेनैव भानादत्रार्थव्यक्तिः । अयं शब्दगुणः ॥ अथ भरतादीनां लक्षणो-दाहरणानि । तत्र भरतः—

१२ सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥ इति ।
( १६. १०१ )

१५विवृणोत्येतद्धेमचन्द्रः ( १९९ पत्रे )—यस्मिन्नतथास्थितोपि तथास्थित एवार्थः प्रतिभाति सोर्थव्यक्तिगुण इति । उदाहरति च—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं

१८ द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया ।

अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा

स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥ इति ।

२१सोयं प्रसादादभिन्न इति वामनादयः । यदुक्तं तेन—अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः । यत्र झटित्यर्थप्रतिपत्तिहेतुत्वं स गुणोर्थव्यक्तिः । यथा—अस्त्युत्तरस्याम् इत्यादौ इति ( ३·१. २३ ) । वामनाभिप्रायमेवान्ये विवृण्वन्ति यथा—यत्र पुरस्तादिव २४वस्तुनोवगतिः पश्चादिव वाचां सार्थव्यक्तिः । उदाहरणं तु—

महेश्वरे वा जगतां महेश्वरे जनार्दने वा जगदान्तरात्मनि ।

न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ इति ।

२७अयं प्रसाद एवेति परे । भोजराजः—यत्र संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम् । इति लक्षयित्वा उदाहरति । यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।

३० जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ इति । ( १. ६९ )

वाग्भटस्तु—यत्र सुखेनार्थप्रतीतिः सार्थव्यक्तिः । यथा —

बाले तिलकलेखेयं भाले भल्लीव राजते ।

३३ भ्रूलताचापमाकृष्य न विध्नः कं हनिष्यति ॥ इति । ( ३० पत्रे )

अयमर्थगुणोपि । यत्र वस्तुस्वभावस्फुटीकरणरूपोर्थः सोर्थगुणः । तदुक्तं वामनेन—वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः । वस्तूनां भावानां स्वभावस्य स्फुटत्वं यत् असा-३६वर्थव्यक्तिः । यथा—

पृष्ठेषु शङ्खशकलच्छविषु च्छादानां

राजीभिरङ्कितमलक्तकलोहिनीभिः ।

३९ गोरोचनाहरितबभ्रुबहिःपलाश-

मामोदते कुमुदमम्भसि पल्वलस्य ॥ इति । ( ३. २. १३ )

अत्र कुमुदस्वरूपस्य साक्षादिव प्रतीयमानत्वेन यत् स्पष्टरूपाभिधानमसावर्थ-४२व्यक्तिः इति स्ववृत्तौ भोजः । ( १. ८१ ) जगन्नाथोपि झगिति प्रतीयमानार्था-

**मही महावराहेण लोहितादुद्धृतोदधेः ।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥ ७४ ॥**

न्वयकत्वमर्थव्यक्तिः इति शाब्दीमभिधाय वस्तुनो वर्णनयिस्यासाधारणक्रिया-रूपयोर्वर्णनमर्थव्यक्तिः इति आर्थीमाह । ( ६८ पत्रे ) यथा—

४५　　गुरुमध्ये कमलाक्षी कमलाक्षेण प्रहर्तुकामं माम् ।
रदयन्त्रितरसनाग्रं तरलितनयनं निवारयांचक्रे ॥ इति । (६०पत्रे)

इयं स्वभावोक्तावन्तर्भवतीति प्रकाशकारादयः । तदुक्तं —अभिधास्यमानस्वभावो-
४८क्त्यलंकारेण वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः स्वीकृता इति । ( ५८३ पत्रे )
दर्पणकारः शब्दगुणामिमां प्रसादगुणे एव अन्तर्भावयति यथा—

अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ।
५१　　अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ॥ इति ।(८.११-१२)

तथा च शाब्दी अर्थव्यक्तिः प्रसादगुणेन आर्थी स्वभावोक्त्यलंकारेण गतार्था इति ज्ञेयम् । अत्र केचित् इमामर्थव्यक्तिं निर्हेतुदोषाभावरूपां परिकल्प्य यत्र तद्दोषा-
५४वसरो नास्ति तत्र नेयत्वेपि अर्थव्यक्तिरस्तीति मन्यन्ते । तच्च यत्रातिप्रसिद्धितो नेयार्थो झटित्याविर्भवति तत्रैव संभवति । यथा—संप्रति संध्यासमयश्चक्रद्वन्द्वानि विघटयति । इति । अत्र संध्यायां चक्रवाकविघटनस्य कविसमयप्रसिद्धतया
५७तत्कारणप्रतिपादकशब्दाभावेप्यर्थव्यक्तिरस्ति । भोजराजेनापि उक्तम्—

अध्याहारादिगम्यार्थं नेयार्थं प्रागुदाहृतम् ।
स गम्यते प्रसिद्धश्चेन्न तद्दोषवदिष्यते ॥ इति । ( १. १३० )

६०उदाहरति च—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेस्तु लतया सह वृक्ष ॥

६३अत्र दहत्वित्यादीनामध्याहार्यतया नेयत्वेप्यतिप्रसिद्धया प्रतीयमानत्वात् गुणत्वम् । इति ॥ ७३ ॥

अनेयार्थप्रतियोगिभूतं नेयार्थं दर्शयति—**महीति** । पूर्वार्धस्यार्थः प्रोक्त एव । इति इयत्येव एतावन्मात्रे एव खुरक्षुण्णनागासृग् इति पदं परिहृत्येत्यर्थः ।
३निर्दिष्टे प्रयुक्ते सति । उरगासृजः नेयत्वम् अध्याहारेण कल्पनीयत्वमवश्यं स्यात् । अन्यथा उदधेर्लौहित्यस्यासंभवात् लोहितादिति विशेषणं व्यर्थं स्यात् । तथा च

लौहित्यसंपादनाय कश्चिदुपाधिः कथनीयः । तदुपाधिवाचकपदाभावे चावश्यमेवा-
६ध्याहारः करणीयः इति नास्त्यर्थव्यक्तिः । तदुक्तं भोजेन—

वाक्यं भवति नेयार्थमर्थव्यक्तेर्विपर्ययात् ॥

मही महावराहेण लोहितादुद्धृतोदधेः ।

९ इतीयत्येव निर्दिष्टे नेया लौहित्यहेतवः ॥ इति । ( १. ३४ )

यत्र त्वन्वयबोधात् प्राक् बाधादिज्ञानेन लक्षणयार्थान्तरोपस्थितिस्तत्रार्थव्यक्ति-
रस्त्येव न तत्र नेयत्वम् । अभिधाशक्त्येव लक्षणयाप्युपस्थाप्यार्थस्यान्वयबोध-
१२विषयतायामवैलक्षण्यात् । अन्वयबोधोत्तरमनुपपत्त्युदयेन कल्पनीयार्थस्य नेयत्वात् ।
लक्षणायामपि यत्र रूढिप्रयोजनाभावेपि लक्षणास्वीकारस्तत्रार्थस्य नेयत्वमिति
नार्थव्यक्तिः । एतादृशलाक्षणिकपदस्यैव नेयार्थत्वमुक्तं प्रकाशकारादिभिः ।
१५एतादृशलक्षणाया निषेधोपि भट्टकुमारिलेन तन्त्रवार्तिकेभिहितः । तथा हि—

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।

क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥ इति ।

१८ ( ३. १८; ७०० पत्रे )

अस्यार्थः—अभिधानवत् अभिधाशक्तिवत् सामर्थ्यात् प्रसिद्धेः शब्दस्वभावाद्वा
निरूढाः अनादिप्रसिद्धाः काश्चिल्लक्षणा भवन्तीति शेषः । यथा कर्मणि कुशलः ।
२१सांप्रतम् अधुना काश्चित् लक्षणाः क्रियन्ते प्रयोजनवशादिति शेषः । यथा
गङ्गायां घोषः इत्यादौ । काश्चिल्लक्षणा अशक्तितः प्रत्यायनसामर्थ्याभावान्नैव
क्रियन्ते । तत्र रूढिप्रयोजनान्यतरासंभवादिति शेषः । यथा रूपी घट इत्यादौ ।
२४इति । एवं रूढिप्रयोजनान्यतराभावाल्लक्षणा नैव कर्तव्या इत्यर्थः । कविरशक्त्या
यत्रैवं लक्षणां करोति तत्रैव नेयत्वं यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।

२७ करोति ते मुखं तन्वि चपेटापतनातिथिम् ॥ इति ।

अत्र जितमित्यर्थे चपेटापतनातिथिम् इत्यस्य लक्षणा वर्तते । परं तत्र रूढि-
प्रयोजनान्यतराभावात् मुख्यार्थातिरिक्तार्थस्याप्रतीतेर्नैव लक्षणा भवितुमर्हतीत्यलं
३०प्रसक्तानुप्रसक्त्या ॥ ७४ ॥

**नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि ।**
**न हि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥ ७५ ॥**
**उत्कर्षवान् गुणः कश्चिद् यस्मिन्नुक्ते प्रतीयते ।**

नेयत्वदोषे गौडवैदर्भयोरैकमत्यं कथयति——**नेदृशमिति** । ईदृशं नेयार्थकं वाक्यम् । उभयोरपि मार्गयोः गौडवैदर्भयोः । न बहु मन्यन्ते । आलंकारिका इति शेषः।
३अत्र हेतुं दर्शयति —**न हीति** । शब्दन्यायः शब्दजान्वयबोधपद्धतिः वृत्त्युपस्थाप्यानामेवार्थानामन्वय इत्येवंरूपा तं विलङ्घयति अतिक्रामतीति शब्दन्यायविलङ्घिनी । अध्याहारेण यथाकथंचिदर्थसंपन्नेत्यर्थः । प्रतीतिः अन्वितो वाक्यार्थः । न हि
६सुभगा न समीचीनः । अत्राहुः प्रेमचन्द्रशर्माणः——अर्थापत्त्याद्युपस्थापितार्थप्रतीतेस्तु न शाब्दबोधत्वं तदुत्तरमेव तस्याः सद्भावात् । एवं तात्पर्यपर्यालोचनया अर्थान्तरप्रतीतिरपि शाब्दबोधोत्तरकालीनैव । अतस्तादृशं वाक्यं नेयत्वदोषग्रस्त-
९मिति भावः । यत्र तु द्वारं द्वारमित्यादौ त्वरादिना पिधेहीत्यादिसाकाङ्क्षपदान्तरानुपादानेन शाब्दबोधासंभवात् तदर्थं श्रुतार्थापत्त्या तादृशपदाध्याहारः तत्र अध्याहृतपदेपि शक्तिग्रहाभ्युपगमेन तदर्थस्य वृत्त्युपस्थाप्यत्वेन न तन्नियमाति-
१२क्रमः । एतच्च विशिष्टशक्तिवादमभिप्रेत्योक्तम् । उपाधिशक्तिवादिभिस्तु आक्षेपगम्याया अपि व्यक्ते शाब्दबोधाभ्युपगमान्निरुक्तनियमो नाङ्गीक्रियते इति विभावनीयम् इति दिक् ॥ ७५ ॥

उदारं लक्षयति——**उत्कर्षवानिति** । यस्मिन् वाक्ये । उक्ते सति । उत्कर्षवान् वर्णनीयोत्कर्षप्रतिपादकः लोकोत्तरचमत्काराधायी । गुणः धर्मविशेषः । प्रतीयते
३ज्ञानविषयो भवति । तद्वाक्यमुदाराह्वयम् उदारसंज्ञकम । तेन औदार्यगुणेन काव्यपद्धतिः गौडवैदर्भीया काव्यरीतिः । सनाथा प्रकृष्टाश्रया । औदार्याश्रयेण काव्यं सविशेषमुल्लसतीत्यर्थः । अत्रोत्कर्षवान् इत्यनेन वर्ण्योत्कर्षजनकगुणोपेक्ष्यते नाप-
६कर्षजनकः । तेन——

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।

---

१. उक्ते यस्मिन्. कपा.

**तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ ७६ ॥**

९ तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहाय्यकं यन्मरो: ॥

इत्यत्र नोदारतेति केचित् । परे तु उत्कर्षवान् वर्णनभङ्गिविशेषेण चमत्कारजनको १२गुणः उत्कर्षापकर्षस्वरूपो वर्ण्यस्य धर्मः औदार्यमिति स्वीकुर्वन्ति । हे हेलाजितेत्यत्र औदार्यगुणं च मन्वते । सर्वपद्धतिः इति पाठे सर्वा गौडवैदर्भीरूपा इति अयमेवार्थः । औदार्ये गौडवैदर्भयोरैक्यमस्तीति भावः । गुणव्यञ्जकता वाक्यस्य १५वाक्यार्थद्वारा । तेनास्य गुणस्यार्थगतत्वम् । शब्दगतस्त्वयं विकटत्वस्वरूपः वामनादिभिः स्वीकृतो वर्तते । विकटत्वं च पदानां नृत्यत्प्रायत्वम् । उदाहरति च वामनः—

१८ स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झणिति रणितमासीत् तत्र चित्रं कलं च । (३.१.२२)

इति । न पुनः—

२१ चरणकमललग्नैर्नूपुरैर्नर्तकीनां
झटिति रणितमासीन्मञ्जु चित्रं च तत्र ।

इति । अत्रेतरेषां लक्षणोदाहरणानि । तत्रादौ भरतः—

२४ दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारं तत् प्रकीर्तितम् ॥ ( १६. १०२ )

अत्रोदाहरति हेमचन्द्रः—

२७ ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायाधाम पुनर्मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रिय-
३० स्तेमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥ इति ।
( १९९ पत्रे )

शब्दगुणमिममुदाहरति हेमचन्द्रः—

---

१ सर्व°. कपा.

३३ अत्रान्तरे झणितहारलतानितम्ब-
संवाहनस्खलितवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तु-
३६ रन्तःपुरं गतवती सह सौविदल्लैः ॥ इति ( १९९ पत्रे )

अर्थगुणं तु अग्राम्यत्वमुदारता इति लक्षयति वामनः । अस्य उदाहरणं च --

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
३९ कलानां सीमान्तं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति मा-
मतः शेषं चेत् स्यात् जितमिह तदानीं गुणितया ॥ इति ।
४२ ( ३. २. १३ )

अत्र प्रथमं त्वं स चेति पृथक्तयोक्तेस्तदनन्तरं युवामिति सामान्यमिश्रीकरणादनन्तरं द्वन्द्वमिति विशिष्टसंश्लेषदर्शनात् अन्ते ततः शेषमिति विवक्षितार्थव्यञ्जनमुखेन ४५फलपर्यवसायित्वम् औचित्यशालिना क्रमेण कामन्दक्या मालतीमुद्दिश्योक्तम् इति उदारता इति कामधेनुकाराः । अस्य प्रत्युदाहरणम्--स्वपिति यावदयमिति पूर्वोक्तः श्लोकः ( ६७ पत्रे ) । भोजराजः शब्दौदार्यम्—विकटाक्षरबन्धत्वमार्यै-४८रौदार्यमुच्यते । इति लक्षयति उदाहरति च—

आरोहत्यवनीरुहं प्रविशति श्वभ्रं नगैः स्पर्धते
खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते ।
५१ अन्तर्भ्राम्यति कोटरस्य विहरत्यालम्बते वीरुधः
किं तद्यन्न करोति मारुतवशं यातः कृशानुर्वने ॥ इति ।
( १. ७० )

५४अर्थगुणं तु भूत्युत्कर्षमुदारता इति संवर्ण्योदाहरति--

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
५७ ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयः तस्मिंस्तपस्यन्त्यमी । इति ॥( १.८१ )

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।**
**तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ७७ ॥**
**इति त्यागस्य वाक्येस्मिन्नुत्कर्षः साधु लक्ष्यते ।**

वाग्भटो हि विकटबन्धत्वमौदार्यम् इति निर्दिश्य उदाहरति--

६० वाचाला कनकमयध्वजाग्रसङ्गि-
व्यालोलस्फुरदुरुकिङ्किणीनिनादैः ।
चैत्याली जगति न कस्य राहडस्य
६३ प्रेङ्खन्ती भवति मनःप्रहर्षणीयम् ॥ ( ३० पत्रे ) इति ।

जगन्नाथः शब्दगुणस्य---कठिणवर्णघटनारूपविकटत्वलक्षणोदारता इति लक्षणं प्रदर्श्य उदाहरति यथा---

६६ प्रमोदभरतुन्दिलप्रमथदत्ततालावली-
विनोदिनि विनायके डमरुडिण्डिमध्वानिनि ।
ललाटतटविस्फुटन्नवकृपीटयोनिच्छटो
६९ हठोद्धतजटोद्भटो गतपटो नटो नृत्यति ॥ ( ५७ पत्रे )

अर्थगुणं तु--चुम्बनं देहि मे भार्ये कामचाण्डालतृप्तये । इत्यग्राम्यार्थपरिहारमुदारता इति । सोयं शब्दगुणः ओजसि अन्तर्भवति अर्थगुणस्तु अग्राम्यतादोष-
७२परिहाररूपः इति वदन्त्यर्वाञ्चः दर्पणकारादयः ॥ ७६ ॥

उदारमुदाहरति---**अर्थिनामिति** । कस्यचिद्राज्ञः प्रशंसेयम् । हे देव महाराज । अर्थिनां याचकानाम् । कृपणा दीना । दृष्टिः त्वन्मुखे सकृत् एकवार-
३मेव । पतिता सती । पुनः पश्चात् । तदवस्था दीना भूत्वा । अन्यस्य मुखं नेक्षते । त्वयैव परिपूरिताशानां नान्यत्र याञ्चार्थं गमनमिति भावः । एतेन राज्ञः ईदृशी दानशक्तिर्यद्याचकाः परिपूर्णमनोरथाः नान्यं दातारं पश्यन्ति इति भङ्ग्यन्तरेण
६दानमाहात्म्यवर्णनेन सहृदयानां चमत्कारविशेषो भवति । अतः उदारगुणमेतत् पद्यम् ॥ ७७ ॥

उदाहरणं लक्षणेन संयोजयति--**इतीति** । इति पूर्वोक्तप्रकारेण दर्शि-

१ खलु. बपा.

**अनेनैव पथान्यंच्च समानन्यायमूह्यताम् ॥ ७८ ॥**
**श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।**
**यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥ ७९ ॥**
**ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।**

तस्य वर्णनीयस्य राज्ञो दानस्य उत्कर्षः चमत्कारविशेषेण परिपोषः । अस्मिन् ३वाक्ये अर्थिनां कृपणेत्यादिवाक्ये । साधु सम्यक् । लक्ष्यते दृश्यते । खलु इति पाठे निश्चयेनेत्यर्थः । अनेनैव पथा ईदृशवर्णनप्रकारेण । अन्यत् वीर्यधैर्यादेरुत्कर्षापकर्षा-देर्वर्णनम् । समानन्यायं समानः सदृशः न्यायो व्यवस्थितिः उत्कर्षेण वर्णनरूपा ६यस्य तत् तादृशमुदाहरणम् । ऊह्यतां विभाव्यताम् । अनेन गुणवर्णने एव उदारो भवतीति न । अपि तु दोषस्याप्युत्कर्षेण वर्णने स भवति । यथा हे हेलाजितेत्यादौ इति सूचितम् ॥ ७८ ॥

उत्तानपदतौदार्यं युतं श्लाघ्यैर्विशेषणैः । इत्यग्निपुराणस्थम् (३४६. ९) उदारतालक्षणं वर्णयति—**श्लाघ्यैर्विशेषणैरिति** । श्लाघ्यैः विशेष्यस्योत्कर्षाधाय-३कत्वेन मनोहरैः । विशेषणैर्युक्तम् । उदारम् उदारगुणवत् । इति कैश्चिदभियुक्तैः । इष्यते अङ्गीक्रियते । अत्र कैश्चिदित्यनेन साभिप्रायविशेषणत्वस्यापुष्टार्थत्वदोषाभाव-रूपत्वादन्यैः परिकरालंकारेणोक्तत्वाच्च न गुणत्वमुचितमित्यस्मिन् कल्पे स्वस्या-६स्वरसः सूचितः इति यत् प्रेमचन्द्रमहाशयैरुक्तं तन्न मनोहरम् । प्रकृतकाविना अर्थालंकारे परिकरस्यापरिगणितत्वात् दोषविचारेऽपि अपुष्टार्थत्वदोषस्यानुक्तत्वाच्चेति ज्ञेयम् । उदाहरति— **यथेति** । अत्र लीलाशब्देन वर्णाकारसौरभ्यातिशयः ९क्रीडाशब्देन कमलसारसविहारनौसनाथत्वम् हेमशब्देन च महार्घत्वं रत्नखचि-तत्वं च सूच्यते । एवं मणिनूपुरं रत्नकाञ्ची कनककुण्डलम् इत्यादीन्युदाहरणानि ऊह्यानि ॥ ७९ ॥

क्रमप्राप्तमोजो लक्षयति— **ओज इति** । समासभूयस्त्वम् समसनम् पदयोः पदानां वा एकीकरणं समासः । अथवा समस्यते एकीक्रियते अनेकं पदं ३यस्मिन् स समासः । अकर्तरि च कारके संज्ञायामिति घञ् । तेषां भूयस्त्वं

---

१. अन्यत्र. ब, ड, प.

**पद्येप्यदाक्षिणात्यानामिदमेकं परायणम् ॥ ८० ॥**

बाहुल्यम् । बहुपदसमासः इत्यर्थः । ओजः ओजोगुणः । एतत् समासभूयस्त्वरूपमोजः । गद्यस्य गद्यप्रबन्धस्य । जीवितं प्राणभूतम् । इदं चोभयोः मार्गयोः ६समानम् । अदाक्षिणात्यानां गौडानां पद्येपि अपिना गद्यसमुच्चयः । एकं परायणम् अद्वितीयावलम्बनम् । विकटबन्धप्रिया हि गौडाः तत्संपादकानुप्रासदीर्घसमासादिषु अत्यन्तादरशालिन इत्यर्थः । समासस्य शब्दमात्रगतत्वेन इदमोजः ९शब्दगुणः । वामनस्तु अर्थस्य प्रौढिरोजः ( ३·२·२ ) इति अर्थगतमपि तं स्वीकरोति । सा च प्रौढिः पञ्चविधा । तथाहि—

पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
१२ प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥ इति ।

एकपदार्थस्य बहुभिः पदैरभिधानं पदार्थे वाक्यवचनम् । यथा चन्द्र इत्येकपदार्थे वक्तव्ये—अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः । इति वाक्यवचनम् । १५बहूनां पदार्थानामेकपदेनाभिधानं वाक्यार्थे पदाभिधा यथा--दिव्येयं न भवति किंतु मानुषी इति वक्तव्ये निमिषति इति पदप्रयोगः । व्यासः विस्तारः एकवाक्यार्थस्यानेकवाक्येन प्रतिपादनम् । यथा—

१८ अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा न भवति भवत्येव च ततः ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
२१ पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम् ॥ इति ।

अयमविसंवादितयानुभूयमानः सुखदुःखव्यतिकरो नानाकारो विचित्ररूपो भवतीति प्रतिपाद्यार्थः । तस्यैव सुखं वा दुःखं वा इत्यादिभिर्विस्तरः । अनेकवाक्यार्थ२४स्यैकवाक्येन प्रत्यायनं समासः यथा—

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ इति ।

२७ते खमुद्ययुरित्येकेनैव वाक्येनामन्त्रणप्रेक्षणनिवेदनविसर्जनाद्यर्थानां नानावाक्यार्थप्रतिपाद्यानां प्रतिपादनात् समासः । अस्य वाक्यार्थस्य साभिप्रायत्वं सहेतुकत्वम् । यथा—

३० सोयं संप्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ॥ इति ।

अत्राश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्योपक्षेपपरत्वात् साभिप्रायत्वम् । अथवा ३३सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः । इत्यत्र सुधांशुकलितोत्तंसः इति विशेषणस्य तापहरणरूपप्रकृतार्थोपयुक्तत्वात् साभिप्रायत्वमिति केचित् । तत्र चत्वारः प्रथमभेदाः उक्तिवैचित्र्यमात्ररूपाः न तु गुणरूपास्तेषामभावेपि यः कौमारहरः ३६इत्यादिप्रबन्धेषु काव्यव्यवहारात् । यश्च साभिप्रायत्वरूप ओजोगुणस्तस्यापुष्टार्थत्वदोषपरिहारस्वरूपेण गतार्थत्वान्न पृथक् परिगणनमावश्यकमिति प्रकाशकारादयः। ( ५८२ पत्रे ) ॥ अत्रान्येषां लक्षणोदाहरणानि । तत्र भरतः —

३९ समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सा तु( यत् तु )स्वैरुदारैश्च तदोजः परिकीर्त्यते ॥ (१६·९९) इति ।

अत्र हेमचन्द्रः— अवगीतस्य अहीनस्य वा वस्तुनः शब्दार्थसंपदा यदुदात्तत्वं ४२निषिञ्चन्ति कवयस्तदोज इति भरतः इति भरतमनूद्य उदाहरति —

गोमायवः शकुनयोत्र शुनां गणोत्र
लुम्पन्ति कीटकृमयः परितस्तथैते ।
४५ त्वं संपदं सकलसत्त्वकृतोपकारां
न [नो] दृष्टवान् यदसि तच्छव वञ्चितोसि ॥ (१९५ पत्रे ) इति ।

अयं कवेर्वर्णनप्रकारो न तु काव्यगुणः इति आचार्यदण्डिन आकूतमभिधाय ४८समासभूयस्त्वमोजः इति तल्लक्षणमभिधत्ते । वामनस्तु—गाढबन्धत्वमोजः (३.१.५) इति शब्दगतौजसो लक्षणं विधाय विलुलितमकरन्दा मञ्जरीर्नर्तयन्ति । इति उदाहरति । हेमचन्द्रस्तु वामनेन लक्षितस्यौजसः —

५१ भस्मवर्म फणिनः पतिर्गवा-
मस्थिपङ्क्तिरिति ते परिग्रहः ।
ईश इत्ययमनन्यचुम्बित-
५४ श्चन्द्रचूड तदपि त्वयि ध्वनिः ॥ ( १९५ पत्रे ) इति ।

एतदुदाहरणं दर्शयति । भोजराजस्तु—ओजः समासभूयस्त्वम् इति शब्दगुणस्य लक्षणं विधाय—

५७ जयति भुजगरज्जुग्रन्थिनिष्पीडितेन्दु-
स्रवदमृतनिवृत्तप्रेतभावैः कपालैः ।
विरचितनुतिबन्धो मूर्ध्नि सद्यः पुरारेः
६० परिणतबहुकल्पब्रह्मणां ब्रह्मघोषः ॥ ( १·७४ )

इत्युदाहरति । अर्थगुणं तु— ओजः स्वाध्यवसायस्य विशेषोर्थेषु यो भवेत् । इति लक्षयित्वोदाहरति—

६३ तान्येव यदि भूतानि ता एव यदि शक्तयः ।
ततः परशुरामस्य न प्रतीमः पराभवम् ॥ ( १·८२ ) इति ।

अत्र परशुरामो विजयते एव इत्यभिप्रेतार्थे स्वनिश्चयप्रतिपादनत्वेनौजः । प्रकाश-
६६कारः चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः इति ( ८·६९ ) लक्षयति । उदाहरणं तु चञ्चद्भुजेत्यादि ऊहनीयम् । दीप्तिहेतुरोजः इति तु वाग्भटः । तच्च वीरबीभत्सरौद्रेषु क्रमेण विशेषतो रम्यम् इत्यभिधायोदाहरति । तत्र वीरे —

६९ शैलोत्तुङ्गतरङ्गवेगगमनप्रोत्कम्पमानावनि-
स्तम्बक्षोभितभैरवार्णवभवत्कल्पान्तकालभ्रमम् ।
क्रोधान्धाः खरदूषणत्रिशिरसः प्राप्तास्त एव द्रुतं
७२ ब्रूत ब्रूत भटाः क स क स नरः शम्बूकजीवाहरः ॥
( ३० पत्रे ) इति ।

बीभत्से—उत्कृत्योत्कृत्य कृत्तिम् इत्यादिकम् रौद्रे— चञ्चद्भुजभ्रमितेत्यादिकं च
७५अनुसर्तव्यम् । दर्पणकारस्य लक्षणं प्रकाशकारानुरोधि एव । कविराजस्तु संयोगपरह्रस्वप्राचुर्यरूपं गाढत्वमोजः इति लक्षणं विधाय —

साहंकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
७८ क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वंकषाः ।
तृष्णाताम्यदमन्दतापसकुलैः सानन्दमालोकिता
भूमीभूषण भूषयन्ति भुवनाभोगं भवत्कीर्तयः ॥ (रसगङ्गा.५८पत्रे)

८१इत्युदाहरति । पदार्थे वाक्यरचना इत्याद्यर्थगुणस्य पञ्चप्रकारत्वं प्रपञ्च्य विविधान्युदाहरणान्यपि ददाति । तेषां च निष्प्रयोजकत्वं काव्यप्रकाशकारानुरोधेनैव दर्शयति । परं विस्तारभयान्न तदनुवादः क्रियतेस्माभिरित्यलम् ॥ ८० ॥

**तद्गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः।**
**उच्चावचप्र[1]कारं त[2]द् दृश्यमाख्यायिकादिषु ॥ ८१ ॥**
**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा।**
**पीनस्तनस्थितातात्रकम्र[3]वस्त्रेव वारुणी ॥ ८२ ॥**
**इति पद्येपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः।**
**[4]अन्ये त्वनाकुलं हृद्यमिच्छन्त्योजो गिरां यथा ॥ ८३ ॥**

ओजोगुणस्य रचनाप्रकारं दर्शयति--**तदिति**। समासभूयस्त्वरूपमोजः गुरूणाम् पदघटकगुरुवर्णानाम्। लघूनां लघुवर्णानाम्। बाहुल्याल्पत्वमिश्रणैः क्वचिद्गुरूणां बाहुल्यं लघूनामल्पत्वं क्वचिदेतद्विरुद्धं लघूनां बाहुल्यं गुरूणामल्पत्वं क्वचिच्च उभयोरपि समानं यन्मिश्रणम् संमेलनम् तैः। उच्चावचप्रकारम् अनेकविधम्। भवतीति शेषः। अत्र केचित् गुरूणां महाप्राणानां लघूनामल्पप्राणानामिति व्याख्यां कुर्वन्ति। तदेतादृशं बहुप्रकारमोजः आख्यायिकादिषु गद्यप्रबन्धविशेषेषु। दृश्यम्। आदिना चम्पूविरुदादीनां संग्रहः ॥ ८१ ॥

ओज उदाहरति--**अस्तेति**। अस्तः अस्ताचलः तस्य मस्तकं शिखरं तत्र पर्यस्ताः प्रसृता ये समस्ताः सायंकाले तत्रैव सर्वेषाम् अवस्थानात् संपूर्णाः अर्कांशवः सूर्यकिरणाः तैः संस्तरः आच्छादनं यस्याः सा तादृशी। सूर्यकिरणव्याप्तेत्यर्थः। वारुणी वरुणस्वामिका पश्चिमदिक्। पीनः पुष्टो यः स्तनः तस्मिन् स्थितम् आताम्रं किंचिल्लोहितं कम्रं मनोहरं च वस्त्रं यस्याः तादृशी। नायिका इव शोभते। अत्र पीनस्तनेत्यनेन सायंकालीनसूर्यमण्डलस्य वारुण्याः स्तनत्वेनारोपः सूचितः। एतदनुप्रासपरिपूर्णतया अनुप्रासाकुलधियां गौडानाम् ओजस उदाहरणं ज्ञेयम्। वैदर्भाणामग्रे ( १·८४ ) वक्ष्यति ॥ ८२ ॥

पूर्वोदाहरणं गौडानामिति स्पष्टमभिधत्ते--**इतीति**। पौरस्त्याः गौडाः। इति पूर्वश्लोकोक्तप्रकारेण। पद्येपि। ओजस्विनीः समासबाहुल्येन ओजोगुणवतीः। गिरो बध्नन्ति रचयन्ति। वैदर्भाभिमतमोजो लक्षयति। **अन्ये त्विति**। अन्ये तु वैदर्भास्तु। गिरामनाकुलम् भावप्रधानो निर्देशः अनाकुलत्वमित्यर्थः। अथवा न

---

१ प्रकारेण. ब. २ सद्दृश्यं. बपा, कपा; °दृष्टं. बपा., ३ °वस्त्रेवाभाति. क. आतम्र° कपा. ४ अन्येप्यनाकुलं. अ, क.

**पयोधरतटोत्सङ्गलग्नसंध्यातपांशुका ।**
**कस्य कामातुरं चेतो वारुणी न करिष्यति ॥ ८४ ॥**
**कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् ।**

विद्यते आकुलं विषमोच्चारणं यस्य इत्यनाकुलम् । सुखोच्चारणमित्यर्थः । एतादृशं ६हृद्यं पारुष्यशैथिल्यादिदोषपरिमार्जनेन मनोहारि । ओजः ओजोगुणम् । इच्छन्ति । अयमत्राशयः । ओजोगुणः उभयोः गौडवैदर्भयोः इष्टः । परं गौडा अनुप्रासलोभात् कष्टपदबहुलसमासविन्यासेन सहृदयानां बुद्धिं व्याकुलयन्ति । वैदर्भास्तु बन्ध-९पारुष्यशैथिल्यादिदोषपरिहारेण प्रसन्नार्थानां पदानां समासेन बुद्धेरनाकुलत्वं साधयन्ति । तादृशसमासभूयस्त्वं च ओज इति मन्यन्ते । समासभूयस्त्वं उभयो-रपि अभिप्रेतम् । परं बुद्धेराकुलीकरणानाकुलीकरणविषये उभयोर्भेदः । गौडाः १२अनुप्रासानुकूलतया क्लिष्टत्वं न विचारयन्ति । वैदर्भास्तु तत्परिहरन्तीति भावः ॥ ८३ ॥

वैदर्भाभिमतम् ओज उदाहरति—**पयोधरेति** । पयोधरो मेघ एव पयो-धरः स्तनः तस्य तट प्रान्तप्रदेशः तस्य उत्सङ्गे मध्यप्रदेशे लग्नं संलग्नं संध्या-३तपः संध्याकालीनसौरकिरणा एव अंशुकं आरक्तवसनं यस्याः सा । एतादृशी वारुणी पश्चिमदिक् । कस्य सहृदयस्य चेतः कामातुरं मदनव्यथितम् । न करोति । आरक्तवसनावगुण्ठितस्तनमनोहराया नायिकायाः स्मरणेनेति भावः । अत्र ६पूर्वार्धे दीर्घसमासवद्वाक्यमपि अस्तमस्तकेतिवत् क्लिष्टपदशून्यत्वात् न बुद्धिमा-कुलयति । प्रत्युत प्रसन्नार्थतया उच्चारणसौकर्येण च चित्तश्रवणयोः सौख्यमाद-धाति । अत्र तृतीयचरणे अल्पसमासः चतुर्थचरणे तु समासाभावः । तथापि ९रचनायाः गाढत्वेन लालित्येन च इदं पद्यं रसिकानां मन आकर्षति । अनेन कुत्रचिदंशे समासहानावपि न ओजोगुणहानिरिति मन्तव्यम् ॥ ८४ ॥

कान्तिं लक्षयति—**कान्तमिति** । लौकिकस्य लोकप्रसिद्धस्य अर्थस्य वस्तुनः अनतिक्रमात् अपरित्यागात् । लोकप्रसिद्धयनुरूपवस्तुवर्णनादित्यर्थः । ३सर्वजगत्कान्तम् सर्वजगतां विदग्धादिबालान्तानाम् । कान्तं कमनीयम् । अर्थबोध-

---

१ गतिक्रमात्. अ.

**तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते ॥ ८५ ॥**

सौकर्येण चमत्कारजनकतया च सर्वमनोहरमिति भावः । ईदृशं वाक्यं कान्तं कान्तिगुणविशिष्टम् । एवं च लोकप्रसिद्धयनुरोधेन वस्तुवर्णनं कान्तिरिति लक्षणं ६संपन्नम् । अयं च कान्तिगुणः आचार्यदण्डिनो मतेन अर्थगुणः । अर्थानुसंधानतः प्रागस्य अनुदयात् । कान्तेर्विषयं दर्शयति —**तच्चेति** । तत् कान्तिगुणयुतं वाक्यम् । वार्ताभिधानेषु वार्तायाः लौकिकोपचारवचनस्य अभिधानानि कथनानि ९तेषु । तथा च वर्णनासु प्रशंसावचनेषु । दृश्यते । केचित्तु वार्ताभिधानेषु अनामयप्रियालापप्रस्तावेषु । वर्णनासु वस्तुस्वरूपनिरूपणेषु । इत्येवमर्थं दर्शयन्ति । उभयत्रापि लौकिकसीमानतिक्रमस्यावश्यकत्वं वर्तते एव । अन्ये तु वार्ताभिधानेषु १२इतिहासवर्णनेषु । इतिहासे यथावद्वर्णनस्यौचित्यादित्याहुः । अनेन व्यञ्जकार्थस्य स्वतःसंभवित्वेन प्रौढोक्तिसिद्धत्वेन च प्रकाशकारादीनां काव्यभेदकरणं संगच्छते । तदुक्तं प्रकाशकारेण —

१५ अर्थशक्त्युद्भवोप्यर्थो व्यञ्जकः संभवी स्वतः ।
प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य च ॥ (४·३९)इति ।

अत्रान्येषां लक्षणोदाहरणानि । तत्र भरतः—

१८ यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥
( १६·१०३ ) इति ।

२१अत्रोदाहरति हेमचन्द्रः—

दद्दृशुर्द्वारदेशस्थां सीतां वल्कलधारिणीम् ।
अङ्गदाहादनङ्गस्य रतिं प्रव्रजितामिव ॥ (२०० पत्रे) इति ।

२४स एवाग्रे कथयति—तदिदं माधुर्यसाधारणम् इति वामनीयाः इति । वामनस्तु औज्ज्वल्यं कान्तिः । ( ३·१·२५ ) औज्ज्वल्यं नाम नवप्रातिभाप्रकर्षः । यदभावे पुराणी बन्धच्छायेयमिति व्यपदिशन्ति । इदमुदाहरति स्वटीकायां हेमचन्द्रः—

२७ स्त्रीणां केतकगर्भपाण्डुसुभगच्छेदावदातप्रभे
मन्दं कुड्मलिताः कपोलफलके लावण्यनिष्यन्दिनि ।

१ विद्यते, अ.

अन्यां कामपि कामनीयककलामातन्वते नूतनां

३० शीतांशोर्बिसकन्दकन्दलशिखामुग्धश्रियो रश्मयः ।। (२०० पत्रे) इति ।

ओजोपि औज्ज्वल्ययोगात् कान्तिः स्यात् । तत्परिजिहीर्षया लोकसीमानतिक्रमात् इत्युक्तम् । अस्य गुणस्य वार्तावर्णनात्वेन द्विविधत्वं प्रोच्य उदाहरति हेमचन्द्रः ।

३३ तत्र वार्तायाम्—

एते वयममी दाराः कन्येयं कुलजीवितम् ।

ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ।। (२०० पत्रे) इति ।

३६ वर्णनायां—

तदाननं निर्जितचन्द्रकान्ति कन्दर्पदेवायतनं मनोज्ञम् ।

प्रदक्षिणीकर्तुमितः प्रवृत्ते विलोचने मुग्धविलोचनायाः ।। इति ।

३९ लोकसीमातिक्रमणे न कान्तिः । तत्र वार्तायामतिक्रमणं यथा—

मम दृष्टस्य राजेन्द्र तव दीर्घेण चक्षुषा ।

चरणद्वितयस्याग्रे नित्यं लुठति वासवः ।। इति ।

४२ एवमेव वर्णनायां यथा—

वदनस्य तवैणाक्षि लक्ष्यते पुरतः शशी ।

पिण्डीकृतेन बहुना कज्जलेनैव निर्मितः ।। इति ।

४५ वामनस्तु दीप्तरसत्वं कान्तिः इति अर्थगतायाः कान्तेर्लक्षणं विधायोदाहरति—

प्रेयान् सोयमपाकृतः सशपथं पादानतः कान्तया

द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।

४८ तावत् प्रच्युतपाणिसंपुटलसन्नीवीनितम्बं धृतो

धावित्वैव कृतप्रणाममहहा प्रेम्णो विचित्रा गतिः ।। इति । (३.२.१४)

अत्र शृङ्गाररसस्य दीप्तत्वम् । एवमन्येषामपि रसानां कामधेनुव्याख्यायाम् उदा-
५१ हरणानि द्रष्टव्यानि । भोजराजस्तु यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते ।
(१.६९) इति शब्दगुणं कान्तिमभिधाय उदाहरति—

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले

५४ न साले सालम्बो लवमपि लवङ्गे न रमते ।

**गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।**

प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरँल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ इति ।

५७अर्थगुणं तु वामनवत् दीप्तरसत्वं स्वीकरोति उदाहरति च—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
६० अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ ( १.८१ ) इति ।

वाग्भटस्तु आचार्यदण्डिमतानुरोधेन लौकिकार्थानतिक्रमेणौज्ज्वल्यं कान्तिः इति ६३लक्षणं विधाय उदाहरति—

सजलनिबिडवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः स्नानमात्रोत्थिताभिः ।
६६ रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वास्तिकाभिर्वधूभिः ॥ ( २९ पत्रे ) इति ।

प्रकाशकारादयस्तु ग्राम्यपदाघटितत्वेनोज्ज्वलत्वरूपां कान्तिं स्वीकृत्य तां ग्राम्य- ६९रूपदोषाभावे अन्तर्भावयन्ति । जगन्नाथस्तु अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयुज्यमानेषु पदेषु लोकोत्तरशोभारूपमौज्ज्वल्यं कान्तिः इति लक्षणं विधायोदाहरति—

७२ नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम् ॥
( ५८ पत्रे ) इति ।

७५अर्थगुणस्य तु दीप्तरसत्वं कान्तिः ( ६२ पत्रे ) इत्येव लक्षणं विहितम् । उदाहरणं च—नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे इत्यादि ॥ ८५ ॥

तत्र वार्ताभिधाने कान्तिमुदाहरति—**गृहाणीति** । तान्येव गृहाणि गृह-पदवाच्यानि प्रशस्तानि गृहाणीत्यर्थः । नाम इति संभावनायां निपातः । भवादृशः ३युष्मत्सदृशः । तपोराशिः तपःसंघस्वरूपः । यानि गृहाणि । पावनैः पवित्रैः ।

**संभावयति [1]यान्येव पावनैः पादपांसुभिः ॥ ८६ ॥**
**अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।**
**अवकाशो न पर्याप्तस्तव बाहुलतान्तरे [2] ॥ ८७ ॥**
**[3]इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।**
**कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः ॥॥ ८८ ॥**

पादपांसुभिः चरणधूलिभिः । संभावयति । गौरवं प्रापयति । अत्र सत्पुरुषचरणसंपर्केण गृहादीनां प्राशस्त्यवर्णनं लोकव्यवहारप्रसिद्धमेवेति इयं वार्ताभिधानरूपा ६कान्तिः ॥ ८६ ॥

वर्णनायां कान्तिमुदाहरति —**अनयोरिति** । हे अनवद्याङ्गि शोभनगात्रे । तव बाहुलतान्तरे हस्तद्वयस्य मध्ये वक्षसि । जृम्भमाणयोः वर्धमानयोः । स्तनयोः ३कुचकलशयोः । अवकाशः अवस्थितये स्थानम् । न पर्याप्तः न अलम् । करिकुम्भसदृशयोः पयोधरयोः तदपेक्षया ह्रस्वस्वरूपे वक्षसि परस्परविमर्देन कथमपि स्थितिरस्तीति भावः । अत्र वर्णनायां पीनस्तनयोः वक्षसि ससंबाधावस्थानं ६लोकप्रसिद्धमेवं । अतो लौकिकार्थस्यानतिक्रमेण वर्णनादत्र कान्तिगुणः ॥ ८७ ॥

उपरिनिर्दिष्टोदाहरणद्वये कान्तिलक्षणं संगमयति—**इतीति** । इति वार्तावर्णनाविषये । उदाहरणद्वयदर्शितप्रकारमिदं संभाव्यमेव लोकप्रसिद्धतया संभवनी३यमेव न तु प्रौढोक्त्या कल्पनीयम् । एवमेव एतत् । विशेषाख्यानसंस्कृतम् विशेषेण यथा स्यात् तथा यदाख्यानं कथनं तेन संस्कृतं सुशोभितम् । कान्तम् कान्तिगुणयुतम् भवति । कस्य भवतीत्याह —**सर्वस्येति** । लोकयात्रानुवर्तिनः लोकव्यवहार६निष्णातस्य । सर्वस्य जनस्य । वार्तावर्णनयोः केवलं सामान्यपदप्रयोगेण कथने न कान्तिगुणः अपि तु सहृदयहृदयहारिविशिष्टवर्णनप्रकारेणैव कान्तिगुणो भवतीति भावः । अन्यथा—

९ गोरपत्यं बलीवर्दः घासमत्ति मुखेन सः ।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् ॥

इत्यत्रापि कान्तिगुणसद्भावः स्यात् । अतश्चमत्कृतिसापेक्षोयं गुण इति ध्येयम् ॥८८

---

१ यान्येवं. क.   २ लतान्तरं. अ, कपा.

३ क पुस्तके एतत्पद्यं 'अल्पं निर्मितमाकाशं ( ९१ ) एतत्पद्यानन्तरं दृश्यते ।

**लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।**
**योर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः[1] ॥ ८९ ॥**
**देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम् ।**
**युष्मत्पादरजःपातधौतनिःशेषकिल्बिषम्[2] ॥ ९० ॥**

कान्तिगुणविषये गौडानां विपर्ययं दर्शयति—**लोकातीत इति** । अत्र इवशब्दः प्रायोर्थे । अत्यर्थम् अत्यन्तम् । लोकातीत इव लोकप्रसिद्धिमतिक्रान्त-प्रायः यः अर्थः । अध्यारोप्य कल्पयित्वा स्वप्रतिभया संभाव्य इत्यर्थः । विवक्षितः वक्तुमिष्टः । तेन कल्पितार्थेन । विदग्धाः अत्युक्तिकुशला गौडाः इत्यर्थः । अग्रे गौडोपलालितमिति कथनादत्र विदग्धा गौडा एव । अतितुष्यन्ति नितरां प्रमो-दन्ते । इतरे लोकयात्रानुवर्तिनः वैदर्भाः न तुष्यन्ति । अत्र केचित् इवशब्दः अप्यर्थे । तथा च लोकातीतोपि योर्थः अध्यारोप्य विवक्षितः इति योजयन्ति । तथैव च विदग्धाः गौडाः सोल्लुण्ठनोक्तिरियमिति कथयन्ति । अथवा विगतं दग्धं दाहः असंभव्यर्थानुभवकृतमनःक्लेशो येषां ते विदग्धा गौडा इत्यर्थमावि-ष्कुर्वन्ति । ननु आरोपितार्थस्यान्वयायोग्यत्वेन कथं शाब्दबोध इति वाच्यम् । शाब्दबोधे योग्यताया हेतुत्वेन सर्वैः अभ्युपेतत्वात् इति चेत् सत्यम् । परं रूपकालंकारादिवत् आहार्यारोपेण शाब्दबोधस्य सर्वैः आलंकारिकैः स्वीकृतत्वात् नात्र अनुपपत्तिः । अत एवोक्तम्—अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि । इति ॥ ८९ ॥

वार्ताभिधाने गौडाभिमतं कान्तेरुदाहरणं दर्शयति—**देवेति** । अद्यप्रभृति युष्मत्पादरजःपातधौतनिःशेषकिल्बिषम् भवतां पादरजः चरणधूलिः तस्याः पातः पतनं तेन धौतं शोधितं निःशेषं किल्बिषं पातकं यस्य एतादृशम् । नो गृहम् अस्मदीयागारम् । देवधिष्ण्यमिव देवागारमिव । सर्वैः पूजनीयम् जातमिति शेषः । सत्पुरुषचरणधूलिसंपर्केण गृहस्य प्रशस्ततैव लोकप्रसिद्धा न तु देवागारमिव आराध्यता । सा तु प्रौढोक्त्या तस्मिन्नारोपिता इति ज्ञेयम् । अत्र लौकिकार्थाति-क्रमान्नेयं वैदर्भाणां मते कान्तिः अपि तु गौडानामेव ॥ ९० ॥

---

१ यथा. कपा.

२ °कल्मषम्. अ, क.

**अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।**
**इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥ ९१ ॥**
**इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम् ।**
**प्रस्थानं प्राक्प्रणीतं तु सारमन्यस्य वर्त्मनः ॥ ९२ ॥**
**अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।**

वर्णनायां गौडाभिमतां कान्तिमुदाहरति—**अल्पमिति** । भवत्याः । इदम् पुरो दृश्यमानम् । स्तनजृम्भणम् कुचकलशविकासः । एवंविधम् निखिलाकाशव्यापकम् । भावि भविष्यति । इति अनालोच्यैव अविचार्यैव । वेधसा विधात्रा । आकाशम् । अल्पम् स्तनविस्तारापेक्षया अत्यल्पपरिमाणम् । निर्मितम् । अत्र आकाशस्याल्पत्व-वर्णनेन स्तनयोः पीनतुङ्गत्वप्रतिपादनमत्युक्तिविलास एव । तथा हि सर्वज्ञस्यापि विधातुरनालोचनपूर्विका सृष्टिः बिल्वफलसदृक्षयोः स्तनयोः मेरुमन्दरहिमालया-दिभिरपि साकल्येनाव्याप्ते आकाशे संबाधेन स्थितिरित्यादिवर्णनमतिशयोक्तिरूपम् । अतो न वैदर्भानुरोधेनेदं कान्तम् । गौडास्तु एतदेव कान्तत्वेन अङ्गीकुर्वते ॥९१॥

एवं गौडवैदर्भयोः कान्तिं प्रदर्श्य उपसंहरति—**इदमिति** । इदम् एवं-विधं काव्यम् । अत्युक्तिः अतिशयोक्तिरिति नाम्ना उक्तम् । आलंकारिकैरिति शेषः । अत्राह भोजराजः —

लौकिकार्थमतिक्रम्य प्रस्थानं यत्र वर्ण्यते ।
तदत्युक्तिरिति प्रोक्तं गौडानां मनसो मुदे ॥ इति । ( १·१४४ )

एतत् अत्युक्तिवर्णनम् । गौडोपलालितम् गौडैः कान्तिगुणत्वेन अङ्गीकृतम् । प्राक्प्रणीतम्— कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् । इत्यादिना पूर्वं सोदाहरणं प्रपञ्चितम् । प्रस्थानम् मार्गः सरणिरिति यावत् । अन्यस्य वर्त्मनः वैदर्भमार्गस्य । सारं हृद्यम् । एवं गौडवैदर्भयोः कान्तिगुणविषये नैकमत्यमिति भावः ॥ ९२ ॥

उद्देशवाक्यस्थमन्तिमं धर्मं समाधिं लक्षयति—**अन्यधर्म इति** । लोकसीमा-नुरोधिना लोकव्यवहारपरिपालनेन कविना । अन्यधर्मः अन्यस्याप्रस्तुतस्य धर्मो

---

१ इदमीदृग्विधं. अ.

सम्यगाधीयते [1]यत्र स समाधिः [2]स्मृतो यथा ॥ ९३ ॥

३गुणक्रियारूपः । ततः तस्मादप्रस्तुतात् । अन्यत्र प्रस्तुते । यत्र यस्मिन् वाक्यार्थे । सम्यगाधीयते साध्यवसानलक्षणया उपचर्यते । स वाक्यार्थः । समाधिः समाधिगुणविशिष्टः । स्मृतः पूर्वाचार्यैः कथितः । सम्यगाधीयते उपचर्यते स समाधिः इति ६अन्वर्थकी संज्ञा । उपचारश्चात्र आहार्याभेदप्रतीतिरूपः । स एव हि लक्षणायाः प्रयोजनभूतः । यतो लक्षणाजन्यसादृश्यप्रतीतेरनन्तरमेव तन्मूलव्यञ्जनया तस्य प्रतीतिसंभवात् । तदुक्तं प्रकाशकृता गौणलक्षणाप्रस्तावे—भेदेपि ताद्रूप्यप्रतीतिः ९सर्वथैवाभेदावगमश्च प्रयोजनम् । ( ५९ पत्रे ) इति । लक्षणा चात्र साध्यवसानरूपा । सा च विषयस्यानुपादाने एव संभवति । तेन च विषयोपादाने सारोपगौण्यां न समाधेः संभवः । इत्थं च प्रस्तुतस्य धर्मं निगीर्य तत्र सदृशतया १२अप्रस्तुतधर्मस्य तादात्म्याध्यवसानं समाधिरिति लक्षणम् इति प्रेमचन्द्रशर्माणः । धर्म इत्यनेन धर्मिणः समारोपे नायं गुणः । तत्रातिशयोक्तिरलंकार एव । यथा—

लतामूले लीनो हरिणपरिहीनो हिमकरः
१५ स्फुरत्ताराकारा गलति जलधारा कुवलयात् ।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवनो
बहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥ इति ।

१८अत्र मुखादौ धर्मिणि धर्मिणश्चन्द्रादेरध्यवसानादतिशयोक्तिरलंकारः । लोकसीमानुरोधिना इत्यनेन स्वेच्छया लोकसीमातिक्रमणेन अन्यधर्मारोपश्चेत् समाधिर्न । यथा बृंहन्ति मशका यत्र तत्र निद्रा सुदुर्लभा । इति । अत्र बृंहितं करिगर्जितम् । २१इति कोशात् करिधर्मस्य बृंहितस्य मशकरुतेरध्यवसानं लोकविरुद्धम् । यथेति पदस्य उत्तरश्लोकस्थेन उदाहरणवाक्येनान्वयः । अयमर्थगुणः अर्थे अर्थान्तरारोपात् । वामनादिभिस्तु आरोहावरोहक्रमरूपः शब्दगुणः समाधिरुक्तः । स चानुपद २४एव स्फुटीक्रियते ॥ अथान्यसाहित्यप्रबन्धेषु समाधेर्लक्षणोदाहरणानि । तत्र भरतः—

अभियुक्तैर्विशेषस्तु योर्थस्यैवोपलभ्यते ।
२७ तेन चार्थेन संपन्नः समाधिः परिकीर्त्यते ॥ इति । (१६.९७)

---

१ यत्तु. बपा. २ मतः. कपा.

अर्थस्य गुणान्तरसमाधानात् समाधिरिति अस्य व्याख्यां विधायोदाहरति हेमचन्द्रः-

परिणतशरकाण्डच्छायमच्छाच्छया यत्
३० किसलयितमिवासीच्चारुलावण्यलक्ष्म्या ।
तदनुदिवसमस्यास्तोयविच्छेदसीद-
न्नवकुवलयदामश्यामलं जातमङ्गम् ॥ इति । ( १९७ पत्रे )

३३ अयमतिशयोक्तिविशेष इति वामनीयाः । तथा च सूत्रयति वामनः— अर्थदृष्टिः समाधिः । अर्थो द्विविधः अयोनिरन्यच्छायायोनिश्च । तत्राद्यो यथा—

आश्वपेहि मम सीधुभाजनाद्यावदग्रदशनैर्न दश्यसे ।
३६ चन्द्र मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ॥ इति ।

द्वितीयो यथा—

मा भैः शशाङ्क मम सीधुनि नास्ति राहुः
३९ खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसंगमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥ ( ३·२·६ ) इति ।

४२ अत्र गातिस्थाघुपाभूभ्यः ( २·६·७७ ) इति पाठं स्वीकृत्य भैः इति लुङो रूपं ज्ञेयम् । भोजराजः—समाधिः सोन्यधर्माणां यदन्यत्राधिरोपणम् । इति लक्षणं विधायोदाहरति—

४५ प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
४८ मितीयं माधुर्यं स्पृशति न तनुत्वं च भजते ॥ इति । ( १·७२ )

अत्र प्रतीच्छति-अवतरति-अनुवदति-इत्यादिचेतनक्रियाधर्माणां अचेतनेष्वधरादिषु उपचारेणाध्यारोपणात् समाधिः । वाग्भटोपि अन्यस्य धर्मो यत्रान्यत्रारोप्यते स ५१ समाधिरित्याह । उदाहरति च —

रिपुषु सहजतेजःपुञ्जलीलायितैस्तै-
रजनि जनितकम्पस्तत्सुतो भूमिभर्ता ।

५४ प्रतिनृपतिवधूनां पल्लविन्यश्रुपूरै-
रधिवियदधिरूढा कीर्तिवल्लिर्यदीया ॥ ( ३० पत्रे) इति ।

जगन्नाथोपि —अवर्णितपूर्वोयमर्थः पूर्ववर्णितच्छायो वेति कवेरालोचनं समाधिः । इति ५७लक्षणं विधाय अवर्णितपूर्वमुदाहरति । तनयमैनाकगवेषणलम्बीकृतजलधिजठर-प्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी इति । ( ६२ पत्रे ) यमुनावर्णनमेतत् । इमं समाधिगुणं तु कविगतत्वेन काव्यमात्रस्य कारणं मत्वा ६०नस्य गुणत्वमग्रे निराकृतं तेनैव । (६३ पत्रे) ॥ अर्थगुणीभूतस्य समाधेरयं विस्तारः । शब्दगुणीभूतस्तु वामनेन— आरोहावरोहक्रमः समाधिः । ( ३·१·१२ ) इति लक्षयित्वा तत्रारोहपूर्वकोवरोहो यथा—निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे । ६३इति । अवरोहपूर्वकस्त्वारोहो यथा—नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः । इति चोदाहृतः । उदाहरति चेमं हेमचन्द्रः—

शृङ्गोत्खातभुवः कृतान्तमहिषात्संत्रस्त उच्चैःश्रवाः
६६ श्रुत्वैरावणकण्ठगर्जितमयं क्रुद्धोम्बिकाकेसरी ॥
संगीतागतकम्बलाश्वतरयोः प्रेक्षागृहद्वारि च ।
प्रेक्ष्य स्कन्दशिखण्डिनं चकितयोः कस्मान्मुखं म्लायति ॥
६९ ( १९८ पत्रे ) इत्यादि ।

प्रकाशकारा अपि आरोहावरोहक्रमरूपं समाधिमङ्गीकृत्य तस्यौजस्यन्तर्भावं कुर्वन्ति । (८. ७२) एवमेव दर्पणकाराः । जगन्नाथोपि बन्धगाढत्वशिथिलत्वयोः क्रमेणा-७२वस्थापनं समाधिः इति शब्दगुणसमाधेर्लक्षणं विधायोदाहरति—

स्वर्गनिर्गतनिरर्गलगङ्गातुङ्गभङ्गुरतरङ्गसखानाम् ।
केवलामृतमुचां वचनानां यस्य लास्यगृहमास्यसरोजम् ॥ इति ।

७५अस्य च ओजस्येवान्तर्भावं कुरुते । अन्ये तु —आचार्यदण्डिनोक्ता समाधिरुप-चरितवृत्तिस्वरूपा उपचरितवृत्तिर्गुणश्चेत् योगवृत्त्या किमपराद्धम् इति तां नैवाङ्गी-कुर्वन्ति । वामनोक्तामर्थगुणसमाधिमयोनिरन्यच्छायायोनिस्वरूपामपि न गणयन्ति । ७८सर्वस्यापि कविकाव्यप्रपञ्चस्य अयोनिरन्यच्छायायोनिस्वरूपत्वात् । इत्यलं पल्ल-वितेन ॥ ९३ ॥

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥ ९४ ॥
निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिर्व्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ ९५ ॥

समाधिमुदाहरति—**कुमुदानीति** । कुमुदानि निमीलन्ति संकुचन्ति कमलानि उन्मिषन्ति विकसन्ति । अत्र निमीलोन्मेषौ नेत्रस्य धर्मौ कुमुदकमलयोः ३संकोचविकासतादात्म्येन अध्यवसितौ । सादृश्यातिशयमहिम्नेदमध्यवसानं लोकसिद्धम् । सादृश्यातिशयादेवानयोरेकशब्दप्रयोगप्रतिपाद्यत्वम् । यथा चक्षुरुन्मिषति कमलमुन्मिषति तथा चक्षुर्निमीलति कमलं निमीलति इत्यादि । इति एवं- ६प्रकारेण । नेत्रक्रियाध्यासात् नेत्रक्रिया निमीलनोन्मीलनरूपा तया सह अध्यासात् तादात्म्यारोपात् । कुमुदकमलधर्माभ्यां संकोचविकासाभ्यां तद्वाचिनी तयोर्निमीलनोन्मेषयोर्वाचिनी प्रतिपादिका । श्रुतिः निमीलन्तीत्यादयः शब्दाः । लब्धा अधि- ९गताः । पदार्थानामेकत्वे एकशब्दप्रतिपाद्यत्वं समुचितं यथा घटः घटः इति । विभिन्नत्वे तु भिन्नशब्दप्रतिपाद्यत्वं यथा घटः पटः इति ॥ ९४ ॥

कानिचित् पदानि काव्ये गौणवृत्त्या एव शोभामावहन्ति न तु मुख्यवृत्त्या । तादृशपदप्रयोगे चायमेव गुणः इति तानि पदानि दर्शयति—**निष्ठ्यू- ३तेति** । निष्ठ्यूतम् उद्गीर्णम् वान्तम् इत्यादिपदम् । गौणवृत्तिव्यपाश्रयम् गौणवृत्तिः गौणीलक्षणावृत्तिः सैव व्यपाश्रयः विशिष्टाश्रयो यस्य तत् । गौणलक्षणया मुख्यार्थसदृशेर्थे प्रयुक्तमित्यर्थः । अतिसुन्दरम् सहृदयहारित्वेन मनोहरम् । तदेव ६समाधिगुणवदिति भावः । ननु वान्तादिपदमतिसुन्दरमित्यनेन अयं समाधिगुणः शब्दस्य दर्शितो भवति । स तु पुनः अर्थगुणः अर्थस्यैवारोपादिति चेत् अत्र शब्दगतत्वं परंपरयेति बोध्यम् । अन्यत्र मुख्यार्थे । अभिधावृत्त्या प्रयुक्तं निष्ठ्यूता- ९दिपदम् । ग्राम्यकक्षाम् ग्राम्यतादोषकालुष्यम् । विगाहते लभते । अभिधावृत्त्या प्रयुक्तं निष्ठ्यूतादिपदं सदोषमपि गौणवृत्त्या गुणवद्भवति । तत्र हेतुस्तु लक्षणाफलभूततादात्म्यारोप इति विभावनीयम् ॥ ९५ ॥

---

१. °व्यपाश्रयात्, अ. कपा. २. अन्यत्तु—अ. कपा.

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ९६ ॥**
**इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति ।**

उक्तार्थमुदाहरति——**पद्मानीति** । पद्मानि कमलानि । अर्कांशुनिष्ठ्यूताः अर्कस्य सूर्यस्य अंशवः किरणानि तैः निष्ठ्यूताः बहिः क्षिप्ताः । पावकविप्रुषः ३वह्निस्फुलिङ्गान् । पीत्वा । उद्गीर्णा बहिस्त्यक्ता अरुणरेणवः रक्तपरागाः यैस्तैः मुखैः । उद्गीर्णरेणुत्वं पावकस्फुलिङ्गवमनोत्प्रेक्षायां कारणम् । भूयः पुनः पुनः वमन्तीव उद्गिरन्तीव । संध्याकालीनपवनान्दोलनस्खलत्परागपद्मवर्णनमिदम् । अत्र ६निष्ठ्यूतोद्गीर्णशब्दौ दैहिककफपित्तलालादिविशेषनिःक्षेपवाचकौ अपि सामान्यनिक्षेपार्थे लक्षणया प्रयुक्तौ सहृदयमनोहरतां प्राप्तौ इति समाधिगुणः । लक्षणया सामान्यशब्दस्य विशेषार्थकस्य पदस्यापि सामान्यार्थपरत्वं सर्वसंमतमेव । सा च ९लक्षणात्र शक्यार्थलक्ष्यार्थयोः सादृश्याद् गौणीति ज्ञेयम् । वमन्तीवेत्यत्र उत्प्रेक्षैव । न लक्षणा । इवशब्दवैयर्थ्यापत्तेः । तथा च पूर्वश्लोके गौणवृत्तिपदं संभावनाया अपि उपलक्षकम् । आहार्यारोपवत् संभावनायामपि बाधोदयस्याकिंचित्करत्वेनान्वय-१२बोधाप्रतिबन्धात् । लक्षणाफलीभूततद्रूप्यप्रतीतेरिव संभावनाया अपि चमत्कारजनकत्वेन गुणत्वं युज्यते इति प्रेमचन्द्रशर्माणः । एवं च—

आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि मांसानि ।
१५ करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि ॥

इत्यादिसापह्नवोत्प्रेक्षायां निष्ठीवतीत्यादिपदेषु न लक्षणा ॥ ९६ ॥

निष्ठीवनादिशब्दानां गौणवृत्त्या प्रयोगं प्रशस्य मुख्यवृत्त्या प्रयोगं सोदाहरणं दूषयति——**इतीति** । इति पूर्वं दर्शितं गौणवृत्त्या प्रयुक्तं निष्ठ्यूतादिपदं ३हृद्यम् । गौणार्थप्रतिपादकत्वेन समाधिगुणवत्त्वात् सहृदयमनोहारि । अहृद्यं तु ग्राम्यतादोषेण रसिकमनोद्वेजकं तु । वधूः उह्यते पितृगेहाद्भर्तृगेहं सा वधूः नवोढा स्त्री । निष्ठीवति खाट् इति कृत्वा कफं निक्षिपति । इति । अत्र मुख्यार्थे ६प्रयुक्तेन ष्ठीविना जुगुप्सा प्रतीयते । वधूशब्दप्रयोगश्च वध्वाः शृङ्गाररस्य आलम्बनविभावत्वेनाङ्गत्वात् शृङ्गारे बीभत्साङ्गभूतं कफनिक्षेपवर्णनमत्यन्तमनुचितमिति सविशेषं ग्राम्यतां दर्शयति । एवं अन्यधर्मस्यान्यत्रारोपरूपं समाधिं प्रदर्श्य अन्य-

युगपन्नैकधर्माणामध्यासश्च स्मृतो यथा ॥ ९७ ॥
गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ ९८ ॥
उत्सङ्गशयनं सख्याः स्तननं गौरवं क्लमः ।

धर्मस्ततोन्यत्र इति लक्षणवाक्ये सूत्रे लिङ्गवचनमतन्त्रम् इतिन्यायेन एकवचनं द्विवचनबहुवचनोपलक्षकमिति विशदयति— **युगपदिति**। नैकधर्माणाम् अन्यदीयगुणक्रियादिरूपानेकधर्माणाम्। युगपद् एकस्मिन् समये एव। अध्यासः निगरणेनाध्यवसानम्। स्मृतः समाधिगुणत्वेन प्राचीनैरनुमतः। तथा च बहूनामप्यन्यधर्माणां युगपदन्यत्र समारोपः समाधिरिति निष्कर्षः ॥ ९७ ॥

बहुधर्मारोपरूपसमाधिमुदाहरति—**गुरुगर्भेति**। गुर्व्यः एकत्र जलेनान्यत्र गर्भविस्तारेण स्थूलाः तथा गर्भभरेण गर्भस्य अन्तर्गतजलस्य भ्रूणस्य च भरेण क्लान्ताः मन्दाः इव। विशेषणोभयपदकर्मधारयः। अथवा गुरुरिति गर्भस्य विशेषणम्। स्तनन्त्यः गर्जन्त्यः। अन्यत्र क्लान्तिसूचकं शब्दं कुर्वन्त्यः। एतादृशः इमा मेघपङ्क्तयः मेघावलयः। अचलाधित्यकोत्सङ्गम् अचलस्य पर्वतस्य अधित्यका उर्ध्वप्रदेशः तस्योत्सङ्गम् मध्यम्। अन्यत्र अधित्यकेति स्त्रीलिङ्गसाम्यात् सखी ग्राह्या तस्या उत्सङ्गः क्रोडः तस्मिन्। समधिशेरते तं संश्रयन्ते इत्यर्थ। अत्र मेघपङ्क्तिषु तत्तद्धर्मनिगरणेन बहूनां गुर्वादीनां गर्भिणीधर्माणां युगपदध्यासात् समाधिगुणः ॥ ९८ ॥

पूर्वश्लोकस्थानां बहूनां गर्भिणीधर्माणामध्यवसानं विशदयति—**उत्सङ्गेति**। अत्र पूर्वश्लोके उत्सङ्गशयनं स्तननं गौरवं क्लमः इति इमे बहवः गर्भिणीधर्माः दर्शिताः आरोपेणेति भावः। एतेषां गर्भिणीधर्मत्वमाह वाग्भटः—

क्षामता गरिमा कुक्षौ मूर्च्छा छर्दिररोचकम्।
जृम्भाप्रसेकः। इत्यादि। (शारीरस्थान, १.५०–५१)

---

१ मतो. कपा.

२. भराक्लान्ताः. कपा.

**इतीमे गर्भिणीधर्मा बहवोऽप्यत्र[2] दर्शिताः ॥ ९९ ॥**
**तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः ।**
**कविसार्थः समग्रोपि तमेनं[3]मनुगच्छति ॥ १०० ॥**

६ननु स्तनितं मेघगर्जितम् इति कोशात् स्तनन्तीशब्देन मेघगर्जनमेव लभ्यते । तत् कथं स्तननस्य गर्भिणीधर्मत्वमिति चेत् सत्यम् । स्तनितभणितादि सुरते मेघादिषु गर्जितप्रमुखम् । इति कोशान्तरेणास्य स्तनितशब्दस्य सुरतशब्दत्वाभिधानान्न ९केवलं मेघगर्जिते एव शक्तिः । तथा——आर्तस्तनितसंनादे रुधिराम्बुहृदाकुले । इति हरिवंशस्थप्रयोगेण ( ९९. ४८ ) तस्य सामान्यध्वनिपरत्वमपि ज्ञेयम् । एवं सामान्यध्वनिपरत्वेपि स्तननशब्दस्य गर्भिणीशब्दपरत्वं कथमिति चेत् गर्भिण्याः १२अन्येषामसाधारणधर्माणामन्तःपतितत्वादस्याप्यत्र गर्भिणीशब्दविशेषवाचकत्वं ज्ञेयम्* ॥ ९९ ॥

समाधिं प्रशंसन्नुपसंहरति—**तदेतदिति** । तत् तस्मादुक्तप्रकारेण काव्यस्य चारुत्वातिशयाधानात् । समाधिर्नाम यो गुणः । एतत् काव्यस्य सर्वस्वम् सारभूतं ३हृद्यम् । अवश्यमपेक्षणीयमित्यर्थः । समग्रः गौडवैदर्भः । कविसार्थः कविसंघः । तम् तथाभूतमेनं समाधिगुणम् । अनुगच्छति एतत्परिशीलनेन काव्यं विरचयति । एतेषु दशसु गुणेषु मध्ये केचित् तत्तद्दोषाभावरूपतया केचिदलंकृतिरूपतया नव्यैः ६प्रकाशकारादिभिरनादृताः केवलं माधुर्यौजःप्रसादाख्यास्त्रय एव गुणाः स्वीकृताः । तथैव वामनभोजादिभिः शब्दार्थरूपेण एते एव द्विविधाः स्थापिताः । अन्यैश्च तत्तद्गुणानां लक्षणोदाहरणानि च विभिन्नानि विहितानि । तदेतत् सर्वं तत्तद्-

---

१. इहेमे. कपा.
२. °वो ह्यत्र. अ; वोन्यत्र. कपा. ३ तमेकं. ब.

---

* सामान्यार्थानां शब्दानां कविसंप्रदायतो विशिष्टार्थपरत्वं भवति यथा—आरवः पटहेषु कटत्कारः भङ्गेषु कूजितं विहगादिषु केकारवः कलापिषु क्वणितं वीणादिषु गुञ्जाकारः ३भृङ्गेषु घमघमाकारः घर्घरेषु घूत्कारः घूकेषु घोषः नदीवीचिषु चटत्कारः अग्निस्फुलिङ्गेषु झङ्कारः किङ्किणीषु टङ्कारः मौर्वीषु ढेत्कृतं वृषभेषु ध्वनितं मृदङ्गादिषु नादः सिंहेषु फूत्कारः सर्पेषु बूत्कारः कपिषु बृंहितं वारणेषु भणितं सुरतादिषु भङ्कारः भेरिषु भात्कारः झल्लरीषु रणितं ६वलयादिषु रवः मण्डूकेषु शिञ्जितं नूपुरादिषु सीत्कारः कामिनीषु सूत्कारः सायकेषु स्तनितं मेघसमुद्रादिषु ह्रेषितं हयेषु इत्याद्यूहनीयम् ।

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः ॥ १०१ ॥
इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ १०२ ॥
नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् ।

गुणनिरूपणप्रसङ्गे अस्माभिर्विशदीकृतमेव । आचार्यदण्डिना तु भरतमुनिमतमेव प्रायः स्वीकृतमिति सुधीभिर्विचारणीयम् ॥ १०० ॥

तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ (१.४०) इति पूर्वं प्रतिज्ञातं गौडवैदर्भमार्गवर्णनमुपसंहरति —**इतीति** । इति एतावत्पर्यन्तं कथितेन प्रकारेण । तयोः गौडवैदर्भयोः स्वरूपम् असाधारणधर्मः तस्य निरूपणात् —वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः । एषां विपर्यय प्रायो लक्ष्यते गौडवर्त्मनि । इत्यनेन (१. ४२) विभिन्नधर्मत्वेन प्रतिपादनात् । मार्गद्वयम् गौडवैदर्भमार्गद्वितयम् । भिन्नम् अत्यन्तविसदृशम् । वर्तते इति शेषः । तद्भेदाः गौडवैदर्भभेदाः । आवन्तिकीलाटीया-मागध्यादयः । प्रतिकवि स्थिताः तत्तद्देशीयैः कविभिरादृताः । वक्तुं न शक्यन्ते । एषां मिश्रणप्रकारः प्रागुपवर्णित एवास्माभिः । (४२–४३ पत्रयोः) केचित्तु तद्भेद-शब्देन रीतिभेदं पाञ्चाल्यादिरूपं स्वतन्त्रमेव स्वीकुर्वन्ति । तेपि तत्तद्देशकविभिः कल्पितत्वादनन्ताः । अतस्ते परिगणितुं नैव शक्यन्ते इति भावः ॥ १०१ ॥

समग्रभेदस्य निरूपणाशक्यत्वं दृष्टान्तेन विशदयति— **इक्षुक्षीरेति** । इक्षुः पुण्ड्रकादिः क्षीरं पयः गुडः इक्षुविकारः आदिशब्देन शर्कराखर्जूरादयो ग्राह्याः । तेषां माधुर्यस्य मधुरतायाः । अन्तरं रुचिभेदः । महत् महानास्ति । तथापि विस्पष्टभेदेपि । तत् आख्यातुं तत्तदुचितज्ञापकसंज्ञाविशेषेण कथयितुम् । सरस्वत्यापि वागधिष्ठात्र्या देवतयापि न शक्यते । माधुर्यस्य विविधभेदस्य निर्वचनमशक्यमिति भावः । अतः प्रधानौ एव गौडवैदर्भभेदौ दर्शितौ इत्यभिप्रायः ॥ १०२ ॥

एतावता काव्यस्वरूपमुक्त्वा इदानीं तत्कारणमाह— **नैसर्गिकीति** । नैसर्गिकी स्वाभाविकी पूर्वजन्मसंस्कारसंपन्ना । प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा । यदुक्तम् —

**अमन्दश्चाभियोगोस्याः कारणं काव्यसंपदः ॥ १०३ ॥**

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य ।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः ॥
६ ( रुद्रट १.१५ ) इति ।

तथैव बहु विविधं पदवाक्यप्रमाणसाहित्यच्छन्दोलंकारश्रुतिस्मृतिपुराणेतिहासागम-नाट्याभिधानकोशकामार्थयोगादिरूपम् वाग्भटप्रभृतिभिः परिगणितम् । निर्मलम् ९संशयादिदोषरहितम् । एतादृशं श्रुतम् शास्त्रम् । विविधशास्त्रनैपुण्यमित्यर्थः । एतल्लोकव्यवहारनैपुण्यस्यापि उपलक्षणम् । तदुक्तं प्रकाशकारेण—शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् । (१.३) इति । तथा अमन्दः महान् । अभियोगः १२अभ्यासः । काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरित्यर्थः । यदाहुः—अभ्यासो हि कर्मसु कौशलमावहति । न हि सकृन्निपतितमात्रेणोदबिन्दुरपि ग्रावणि निम्नता-मादधतीति ( हेम० ८ पत्रे ) अभ्यसनप्रकारस्तु हेमचन्द्राचार्यैः महता प्रपञ्चेन १५वर्णितः स तद्ग्रन्थादेव ज्ञातव्यः । अभ्यसनसौकर्याय विशिष्टदेशकालादिसा-चिव्यमप्यपेक्ष्यत इति वामनः । ( १. ३. १८–२० ) एतत् त्रितयं अस्याः उक्तलक्षणायाः काव्यसंपदः कारणम् । काव्यप्रणयनावगमयोः कारणमित्यर्थः । १८उभयोरपि एतत्त्रितयजन्यत्वात् । प्रतिभाशून्येनापि पुरुषेण महता कालेन एक-द्विश्लोककरणेतिव्याप्तिपरिहाराय संपदिति । तदुक्तं काव्यमीमांसायाम् —

मुक्तके कवयोनन्ताः संघाते कवयः शतम् ।
२१ महाप्रबन्धे तु कविरेको द्वौ दुर्लभास्त्रयः ॥ ( ५४ पत्रे ) इति ।

अत्र कारणमित्येकवचनेन कारणता व्यासक्ता न तु प्रत्येकं पर्याप्ता । तदुक्तं प्रकाशकृता —शक्तिर्व्युत्पत्तिः पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिता न तु २४व्यस्ताः तस्य काव्यस्य निर्माणे समुल्लासे च हेतुर्न तु हेतवः इति । ( १६ पत्रे ) अन्ये हेमचन्द्रवाग्भटादयस्तु प्रतिभैव हेतुः शास्त्रव्युत्पत्त्यभ्यासौ तु प्रतिभायाः संस्कारकौ । तथा चोक्तम्— व्युत्पत्त्यभ्याससंस्कृता प्रतिभास्य हेतुः इति । २७( वाग्भट २ पत्रे ) काव्यमीमांसायां तु —

स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता ।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोष्टौ कवित्वस्य ॥ ( ४९ पत्रे )

न विद्यते यद्यपि पूर्ववासना-
गुणानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ १०४ ॥

३०इत्यष्टौ कारणानि समाख्यातानि । अत्र कानिचित् साधारणानि कानिचिदसाधारणानि कारणानीति ज्ञेयम् । आचार्यदण्डिना परिगणितेषु प्रतिभाश्रुताभियोगेषु प्रतिभा द्विविधा सहजा उत्पाद्या च । यदाह रुद्रटः—

३३ प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति ।
पुंसा सह जातत्वादनयोस्तु ज्यायसी सहजा ॥ (१.१६) इति ।

तत्राद्या जन्मसिद्धा द्वितीया शास्त्राद्यभ्यासेन मणिमन्त्रौषधिना च संपद्यते ३६इत्याहुः । उभयरूपा चेयं घटं प्रति चक्रदण्डाविव काव्यं प्रति परस्परसहकार्यतया कारणमिति केचित् । अपरे पुनः अनयोः प्रतिभयोर्मध्ये एकतरा कवित्वसंपादनाय प्रभवति अपरा तदुत्कर्षायैव इति । अस्मिन् व्याख्याने न विद्यते ३९इत्याद्यग्रिमश्लोकस्य अविरोधः संपद्यते इति विमर्शनीयम् ॥ १०३ ॥

यद्यपि सहजा प्रतिभा पुरुषप्रयत्नेन लब्धुमशक्या तथापि तदभावेपि कवित्वं न सर्वथा दुःसंपाद्यमिति प्रतिपादयति-—**न विद्यते इति** । अद्भुतम् ३अलौकिककाव्यसंपादनेनाश्चर्यावहम् । पूर्ववासनागुणानुबन्धि प्राक्तनसंस्कारगुणसंबद्धम् सहजमिति भावः । प्रतिभानम् प्रतिभाशक्तिः । यद्यपि न विद्यते प्राक्तनप्रतिभाया अभावो यद्यप्यस्ति । तथापि यत्नः कर्तव्यः इति अध्याहृत्य वाक्य६मेतत् पूरणीयम् । किमर्थं प्रयतितव्यमिति चेत् कथयति— **श्रुतेनेति** । श्रुतेन काव्याद्यनुशीलनेन । यत्नेन काव्यकरणाभ्यासप्रयत्नेन । उपासिता आराधिता । वाक् । कमपि अनिर्वचनीयम् । अनुग्रहम् काव्यसंपादनसामर्थ्यरूपम् । करोत्येव । ९ध्रुवमित्यनेन व्यभिचारशङ्का निरस्ता । कालिदासादीनां प्राक्तनप्रतिभाया अभावेपि केवलं वाग्देव्याः आराधनेन यथा कवित्वलाभ आसीत् तथा अन्येषामपि पुरुषाणामुद्यमशीलानां भवेत् । पुरुषेण प्रयत्नवता भाव्यम् इत्यर्थः । एतेन—

१२ अयं भस्मनि होमः स्यात् इयं वृष्टिर्मरुस्थले ।
इदमश्रवणे गानं यज्जडे शास्त्रशिक्षणम् ॥ इति ।

तदस्ततन्द्रैरनिशं सरस्वती
श्रमादुपास्या[1] खलु कीर्तिमीप्सुभिः[2] ।
कृशे[3] कवित्वेपि जनाः कृतश्रमा
विदग्धगोष्ठीषु विहर्तुमीशते ॥ १०५ ॥

**इत्यार्याचार्यदण्डिनः कृतौ काव्यादर्शे मार्गविभागो नाम**
**प्रथमः परिच्छेदः ॥**

तथा—न हि यत्नशतेनापि शुकवत् पाठ्यते बकः । इत्यादि क्रियाशून्यानां दैव-
१५वादतन्द्रिलानां यत्ननैष्फल्यप्रतिपादनपरं मतं निरस्तम् ॥ १०४ ॥

पुनरपि सविशेषं प्रयतितव्यं तेन मनोरथाः निश्चयेन फलन्तीति कथ-
यति—**तदिति** । तत् तस्मात् । उपासिता वाक् ध्रुवमनुग्रहं करोति इति हेतोः ।
३अस्ततन्द्रैः परित्यक्तालस्यैः । अनिशम् सततम् । श्रमात् यत्नतः । कीर्तिमीप्सुभिः
कवित्वादिकीर्त्यभिलाषुकैः । सरस्वती वाग्देवी । खलु निश्चयेन । उपास्या । उपास-
नाया अनैष्फल्यं दर्शयति— **कृशे इति** । कदाचित् कवित्वे काव्यनिर्माणे ।
६कृशेपि स्वल्पेपि । विदग्धगोष्ठीषु सहृदयसमाजेषु । कृतश्रमाः काव्यशास्त्रे विहित-
व्यासङ्गाः । जनाः पुरुषाः । विहर्तुम् काव्यरहस्यावगमसामर्थ्येन व्यवहर्तुम् । ईशते
समर्था भवन्ति । एतेन काव्यकरणासमर्था अपि काव्यरहस्यबोद्धारः पुरुषाः कीर्तिं
९विद्वत्समाजेषु संमानं च लभन्ते । अतः सर्वथा सरस्वत्युपासितव्या तदुपासना
निष्फला नैव संपद्यते इति आदिष्टं भवतीत्यवगन्तव्यम् ॥ १०५ ॥

इति श्रीवैराजक्षेत्रवासिभी रङ्गीकुलावतंसैर्बालकृष्णाचार्यतनुजै रङ्गाचार्यसूरिभिः
विरचितायां काव्यादर्शव्याख्यायां प्रभाख्यायां प्रथमः परिच्छेदः ॥

---

१. क्रमात्. कपा. २. इच्छुभि. कपा.
३. श्रुते. कपा. ४. इत्यार्य॰. अ.

# अथ द्वितीयः परिच्छेदः

**काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते ।**

प्रथमपरिच्छेदे वैदर्भगौडमार्गोपलक्षितं धर्मिभूतं काव्यशरीरं प्रदर्श्य इदानीं तद्धर्मानलंकारान् दिदर्शयिषुः अलंकारसामान्यलक्षणमाह—**काव्यशोभाकरा-**
३ **निति** । काव्यस्य इष्टार्थव्यवच्छिन्ना पदावलिः इत्युक्तस्वरूपस्य शोभा मनोहरता तस्याः कर्तारः तत्संपादकाः तान् । धर्मान् अनुप्रासोपमादीन् । अलंकारान् प्रचक्षते अलंकारनाम्ना व्यवहारन्ति । प्राञ्चः साहित्यकोविदा इति शेषः । यथा
६ लावण्यमनोहरस्य शरीरस्य हारादयो अलंकाराः शोभातिशयं जनयन्ति तथा श्लेषप्रसादादिगुणोपस्कृतस्य इष्टार्थव्यवच्छिन्नपदावलिरूपस्य रमणीयार्थप्रतिपादकस्य काव्यस्य अनुप्रासोपमादयोलंकाराः शोभां परिवर्धयन्ति । अनेन एते अलंकाराः
९ शब्दार्थगताः इति आचार्यदण्डिनो मतमवगन्तव्यम् । भरतेनापि —काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः । (१६.४१) इत्यनेन ते काव्यधर्मत्वेनैव स्वीकृताः सन्ति । भामहोपि—इति वाचामलंकाराः पञ्चैवान्यैरुदाहृताः । (३.४) इत्युपक्रमे
१२ —गिरामलंकारविधिः सविस्तरं स्वयं विनिश्चित्य धिया मयोदितः । (३.५७) इति तृतीयपरिच्छेदोपसंहारे कथयन् शब्दार्थगतत्वमेव तेषां दर्शयति । वामनादयोपि इमामेव पद्धतिमनुसरन्ति । तदुक्तं वामनेन —काव्यशोभायाः
१५ कर्तारो धर्मा गुणाः । तदतिशयहेतवस्त्वलंकाराः । (३. १. १–२) इति । अत्र च प्रमाणत्वेन प्राचीनश्लोकावपि अवतारयति—

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
१८ विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥ इति ।

अत्र पूर्वश्लोकेन अलंकाराणां सगुणकाव्यस्य शोभाकरत्वं दर्शितम् । द्वितीयेन तु गुणाभावे अलंकाराणां वैयर्थ्यं प्रोक्तम् । तत्र काव्यशोभासंपादने गुणा

---

१. काव्ये. अ.

**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ १ ॥**

नित्याः अलंकारास्त्वनित्याः इति अग्रिमेण पूर्वे नित्याः ( ३. १. ३ ) इति
२४सूत्रेण अभिहितम् । अयमेव च गुणालंकारयोः प्रभेदः । यद्गुणा नित्याः तैर्विना
काव्यशोभानुपपत्तेः । आचार्यदण्डिना हि गुणा वैदर्भमार्गस्य प्राणत्वेन कथिताः ।
वामनेन ते नित्या इत्यनेन स एवार्थः पर्यायेण अभिहितः । रीतिरात्मा काव्यस्य
२७इति काव्ये रीतेः प्राधान्यस्वीकारेऽपि तस्या गुणसमुदायाभिन्नस्वरूपत्वात् गुणा-
धीनत्वं स्पष्टमेव । एवं च प्राणा दशगुणाः स्मृताः इति आचार्यदण्डिनः सिद्धा-
न्तस्य रीतिरात्मा काव्यस्य इति सूत्रयता वामनेन भङ्ग्यन्तरेण स्वीकारो दर्शितः ।
३०एवं भरतभामहवामनप्रभृतीनां गुणालंकारविषये ऐकमत्यमेव दृश्यते । प्रकाशकारा-
दयस्त्वर्वाचीनाः माधुर्यौजःप्रसादाख्यान् गुणान् रसस्याङ्गभूतान् अलंकारांश्च
शब्दार्थयोरङ्गभूतान् कल्पयन्ति । तदुक्तं प्रकाशे——

३३ ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥
उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
३६ हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥
माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश । (८.६६–६७) इति ।

प्रतिपादितं च माधुर्यौजःप्रसादाख्या रसस्य गुणाः । हारादिवत् वाच्यवाचक-
३९लक्षणाङ्गगताः स्वाश्रयशोभाजननद्वारा अङ्गिनो रसस्य शोभाजनका अलंकारा
इति । आश्रयभेदाच्च गुणालंकारयोर्भेदः इति । ओजस्वी प्रबन्धः मधुरा वर्णाः
इत्यादिव्यवहारस्तु आकारोऽस्य शूरः इतिवत् औपचारिकः ॥ तत्र तावद्विचार्यते ।
४२मधुरो रसः इति सामानाधिकरण्यात् अनुभवसिद्धानां रसस्वरूपविशेषकाणां
माधुर्यादीनां गुणत्वस्वीकारे यदिदं साहित्यग्रन्थकाराणां काव्ये तादृशगुणनिवेशा-
वश्यकत्वकथनं तत् विफलं स्यात् । रसवत् काव्यमित्येतावतैव लक्षणेन रस-
४५निवेशे रसस्वरूपविशेषाणां माधुर्यादीनां निवेशस्यापि नियतत्वात् । यतः तन्मते
माधुर्यौजःप्रसादाख्या गुणा रसव्यभिचारिणः न कुत्रचिदुपलभ्यन्ते । अथ गुणा-
भिव्यञ्जकशब्दार्थप्रयोगाय लक्षणे गुणग्रहणमिति चेत् तादृशव्यञ्जकतायाः एव

---

१. कार्त्स्न्येन इप.

४८गुणत्वमुचितम् । सौन्दर्यादेः आत्मोत्कर्षत्ववत् तस्या एव रसोत्कर्षत्वात् । उत्कर्षकस्यैव गुणत्वात् । सा च व्यञ्जकता श्लेषादिधर्मस्वरूपा एव । अतः सिद्धं श्लेषादीनां गुणत्वं शब्दार्थगतत्वं च । तथैव स्वाश्रयशोभाजननद्वारा रस-
५१शोभाजननत्वमलंकाराणामित्यपि न विचारक्षमं तेषां वचः । यतो नीरसे सकला-लंकारिकैः काव्यतया स्वीकृते संलक्ष्यक्रमव्यङ्ग्यप्रभेदे चित्रे च उपमादीनामनलं-कारतापत्तेः । स्वीकृतं हि तत्र तैरुपमादीनामलंकारत्वम् । तथाहि—

५४ वस्तु वालंकृतिर्वेति षड्भेदोसौ व्यनक्ति यत् ।
वस्त्वलंकारमथवा तेनासौ [व्यञ्जकः] द्वादशात्मकः ॥
(का. प्र. ४. ४०)

५७तथा— शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् । इत्यस्य व्याख्याने चित्रमिति गुणालंकारयुक्तम् इति । (१.५) अष्टमोल्लासेपि यत्र तु नास्ति रसः तत्रोक्ति-वैचित्र्यमात्रपर्यवसायिनः इत्यादिना प्रबन्धेन तेनैव कथितमस्ति । ननु रसो-
६०पकारयोग्यत्वमलंकार इति तल्लक्षणमस्तु । तेन नीरसस्थले नाव्याप्तिः इति चेन्न । योग्यताया निर्वचनस्याशक्यत्वात् तादृशानुगमकधर्मेण लक्षणविधानस्या-युक्तत्वात् । जगन्नाथेनापि गुणानां शब्दार्थरसरचनागतत्वं स्वीकृत्य केवलरसधर्मत्वं
६३खण्डितम् । तद्यथा —येमी माधुर्यौजःप्रसादाः रसमात्रधर्मतया उक्ताः तेषां रसधर्मत्वे किं मानम् । प्रत्यक्षमेवेति चेन्न । दाहादेः कार्यात् अनलगतस्य उष्णस्पर्शस्य यथा भिन्नतयानुभवः तथा द्रुत्यादिचित्तवृत्तिभ्यः रसकार्येभ्यः
६६अन्येषां रसगतगुणानां अननुभवात् । तादृशगुणविशिष्टरसानां द्रुत्यादिकारणत्वात् । कारणतावच्छेदकतया गुणानामनुमानमिति चेत् प्रातिस्विकरूपेणैव रसानां कारण-तोपपत्तौ गुणकल्पने गौरवात् । शृङ्गारकरुणशान्तानां माधुर्यत्वेन द्रुतिकारणत्वं
६९प्रातिस्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूतमिति तु न वाच्यम् । परेण मधुरतरादिगुणानां पृथग्द्रुततरादिकार्यतारतम्यप्रयोजकतयाभ्युपगमेन माधुर्यत्वेन कारणताया गड्डुभूतत्वात् । इत्थं च प्रातिस्विकरूपेणैव कारणत्वे लाघवम् । किं
७२च आत्मनो निर्गुणतया आत्मरूपरसगुणत्वं माधुर्यादीनामनुपपन्नम् । एवं तदुपाधिरत्यादिगुणवत्त्वमपि । मानाभावात् । पररीत्या गुणे गुणान्तरस्यानौचित्याच्च । अथ शृङ्गारो मधुरः इत्यादिव्यवहारः कथमिति चेत् एवं तर्हि द्रुत्यादिचित्तवृत्ति-

**किंतु बीजं विकल्पानां पूर्वाचार्यैः [1]प्रदर्शितम् ।**

७५प्रयोजकत्वं प्रयोजकतासंबन्धेन द्रुत्यादिकमेव वा माधुर्यमस्तु । व्यवहारस्तु वाजिगन्धोष्णेतिव्यवहारवत् अक्षतः । प्रयोजकत्वं च अदृष्टादिविलक्षणं शब्दार्थ-रसरचनागतमेव ग्राह्यम् । अतो न व्यवहारातिप्रसक्तिः । तथा च शब्दार्थयोरपि ७८माधुर्यादेरीदृशस्य सत्त्वादुपचारो नैव कल्प्यः इति तु मादृशाः इति ॥ ( ५४-५५ पत्रयोः) रहस्यं तु एतदेव यद्गुणानां रसधर्मत्वं न विचारक्षमम् । ते शब्दार्थरस-रचनागता एवेति ज्ञेयम् । आचार्यदण्डिप्रभृतयः प्राचीनाः रसानां रसवदलंकारत्वेनैव ८१काव्यशोभाकरत्वं मन्यन्ते । तथा च गुणे गुणान्तरस्यानौचित्यान्न माधुर्यादयो गुणा रसानामिति तेषां राद्धान्तः । अस्त्वेषा सूक्ष्मविचारचर्चा । प्रकृतमनुसरामः । अलंकाराणां एवं काव्यशोभाकरधर्मरूपं सामान्यलक्षणमभिधाय वक्तव्यानां ८४विशिष्टालंकाराणामानन्त्यं विचिन्त्य तद्विवेचने स्वस्यासामर्थ्यं विनयेन प्रकटयति—**ते चेति** । ते अलंकाराः । अद्यापि विकल्प्यन्ते विविधकल्पनाभिः नवनवा उद्भा-व्यन्ते । कविभिरिति शेषः । अतः कः पण्डितः । तान् अलंकारान् । कार्त्स्न्येन ८७साकल्येन । वक्ष्यति निरूपयिष्यति । न कोपि विवेक्तुं प्रभविष्यतीत्यर्थः । वक्ष्य-तीति भविष्यत्प्रयोगेण न पूर्वं केनापि निरूपिताः नाधुनापि कश्चिन्निरूपयति न वाग्रे केपि निरूपयेयुः इति साकल्येन कालत्रयेपि ते निरूपयितुमशक्या इति ९०सूचितम् । मेधाविनां कल्पनायाः अविरामात् कल्पनोपजीविनोलंकारस्याप्यविरामः । अत इयत्तया तेषां निरूपणं दुःशकमिति भावः ॥ १ ॥

अलंकाराणामानन्त्यात् भवता तद्वर्णनं परित्याज्यमिति चेन्न । ते प्राचीनैः बीजरूपेण निरूपिता एव स्फुटतया मया कथ्यन्ते इति निवेदयति—**किंत्विति ।** ३विकल्पानां अर्वाचीनैः कल्पितानां अलंकारविशेषाणाम् । पूर्वाचार्यैः भरतादिभिः । बीजं सामान्यतः सर्वत्र वर्तमानं मूलम् । प्रदर्शितम् कथितम् । यथा नवीनैः उद्भा-वितानां उपमाभेदानां बीजं—उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया । ( १६ ६ ४२ ) इत्येव केवलं उपमालक्षणं विदधता भरतेन कथितम् । अग्रे दर्शितास्तु वाक्यार्थोपमा सातिशयोपमा श्लेषोपमा निन्दोपमा अभूतोपमा विपर्ययोपमा संशयोपमा नियमोपमा मालोपमा विक्रियोपमा इत्यादयः प्रभेदाः अन्यैः कल्पिताः ९सन्ति । अत्र सर्वत्र बीजभूतमौपम्यं वर्तत एव । अयमुपमालंकारप्रपञ्चो दर्शितः ।

१ प्रकल्पितम्. कपा.

**तदेव परिसंस्कर्तुमयमस्मत्परिश्रमः ॥ २ ॥**

एवं रूपकादिष्वपि प्रपञ्चो द्रष्टव्यः। एवमेव औपम्यमूलकोलंकारान्तरविस्तारोपि दृश्यते। तदुक्तं वामनेन —प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः इति। (४.३.१) तेनैव १२च विविधैः सूत्रैः अग्रे प्रभृतिपदोपसंग्राह्या अलंकारा दर्शिताः। तट्टीकाकारेण च ते श्लोकैरेवं निबद्धाः। यथा—

प्रतिवस्तुप्रभृतय उद्दिश्यन्ते यथाक्रमम्।
१५ प्रतिवस्तु समासोक्तिरथाप्रस्तुतशंसनम्॥
अपह्नुती रूपकं च श्लेषो वक्रोक्त्यलंकृतिः।
उत्प्रेक्षातिशयोक्तिश्च संदेहः सविरोधकः॥
१८ विभावनानन्वयः स्यादुपमेयोपमा ततः।
परिवृत्तिः क्रमः पश्चाद्दीपकं च निदर्शना॥
अर्थान्तरस्य न्यसनं व्यतिरेकस्ततः परम्।
२१ विशेषोक्तिरथ व्याजस्तुतिर्व्याजोक्त्यलंकृतिः।
स्यात् तुल्ययोगिताक्षेपः सहोक्तिश्च समासतः।
अथ संसृष्टिभेदौ द्वावुपमारूपकं तथा।
२४ उत्प्रेक्षावयवश्चेति विज्ञेयोलंकृतिक्रमः॥ इति।

भरतमुनिना तु —

उपमा दीपकं चैव रूपकं यमकं तथा।
२७ काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः॥ (१६.४१)

इत्यलंकारचतुष्टयमेवोक्तम्। एतद्विस्तारो भामहादिभिः प्रदर्शितस्तत एव बोद्धव्यः। प्रदर्शितमिति कथनं प्रायिकमिति बोध्यम्। यतो निश्चयोल्लेखादीनां नवीनतरैरु-३०द्भावितानां केषांचिदलंकाराणां सामान्यलक्षणरूपबीजस्य प्राचीनैरकथनात्। तदेव पूर्वाचार्यैः दर्शितमेव विकल्पमूलभूतं बीजम्। परिसंस्कर्तुं सम्यक्तया विशदी-कर्तुम्। अयं प्रक्रान्तग्रन्थरूपः। अस्मत्परिश्रमः मदीयो व्यवसायः। पूर्वाचार्य-३३कथितबीजभूतानि अलंकारतत्त्वानि मया विविधैर्लक्षणैरुदाहरणैश्च विव्रियन्ते। अनया दिशा अन्ये विकल्पाः प्रतिभावद्भिः स्वयमूहनीया इति भावः॥ २॥

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ।
साधारणमलंकारजातमन्यत् प्रदर्श्यते ॥ ३ ॥
स्वभावाख्यानमुपमा रूपकं दीपकावृती ।
आक्षेपोर्थान्तरन्यासो व्यतिरेको विभावना ॥ ४ ॥
समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ।

एवं सामान्यतः अलंकारनिरूपणे प्रतिज्ञाते प्रसङ्गतः पूर्वं निर्णीतानामलंकाराणां पुनर्निरूपणं पिष्टपेषणवद्विफलं स्यादिति तान् परिहृत्यैव निरूपणं क्रियते ३इति कथयति—**काश्चिदिति** । काश्चित् श्रुत्यनुप्रासवृत्त्यनुप्रासयमकादयः । अलंक्रियाः शब्दालंकाराः । मार्गविभागार्थम् गौडवैदर्भमार्गयोर्वैसादृश्यद्योतनार्थम् । प्रागपि प्रथमपरिच्छेदे । उक्ताः । तत्र श्रुत्यनुप्रासः ५२ श्लोकेन वृत्त्यनुप्रासः ५५ ६श्लोकेन यमकं च सामान्यतः ६१ श्लोकेन निर्दिष्टम् । तत्प्रयोजनं तु श्रुत्यनुप्रासो वैदर्भैरङ्गीकृतः न गौडैरित्यादिना मार्गभेदकथनम् । अतः तेलंकाराः न पुनर्निरूप्यन्ते इति भावः । अन्यत् पूर्वोक्तात् अन्यत् । साधारणं ९उभयमार्गसमानम् । गौडवैदर्भानुमतमित्यर्थः । अलंकारजातम् स्वभावाख्यानमुपमेत्यादिना अग्रे निरूप्यमाणोलंकारसमूहः । प्रदर्श्यते विविच्यते । यमकस्य पूर्वं सामान्यतः लक्षणमुक्तं तद्विशेषप्रकारनिरूपणं तु—तत् तु नैकान्तमधुरमतः १२पश्चाद्विधास्यते । ( १. ६१ ) इति पूर्वप्रतिज्ञानुरोधेनैव तृतीयपरिच्छेदे सोदाहरणं प्रपञ्चितमस्तीति ज्ञेयम् ॥ ३ ॥

प्रतिज्ञातालंकारनिरूपणाय प्रथमं तानुद्दिशति—**स्वभावाख्यानमिति** । स्वभावाख्यानं स्वभावोक्तिः अस्यैव जातिरिति संज्ञान्तरम् । दीपकं च आवृतिश्च ३दीपकावृती । आङ्पूर्वकाद् वृतेः इगुपधात् कित् इति औणादिः कित्प्रत्ययः । आवृत्तिरित्यर्थः । सोयं अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ( २. ११६ ) इति त्रिधा अग्रे निरूपितोस्ति । अन्यत् स्पष्टम् ॥ ४ ॥

**समासेति** । समासः समासोक्तिः । अतिशयः अतिशयोक्तिः । लवः लेशः । तथा चाग्रे वक्ष्यति—हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् (२.२३५)

---

१ अद्य. अ. क.

प्रेयो रसवदूर्जस्वि पर्यायोक्तं[1] समाहितम् ॥ ५ ॥
उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता ।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ॥ ६ ॥
सहोक्तिः परिवृत्त्याशीः संकीर्णमथ[2] भाविकम् ।
इति वाचामलंकारा दर्शिताः[3] पूर्वसूरिभिः ॥ ७ ॥
नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥ ८ ॥

इति । क्रमः यथासंख्यम् । अस्यैव संख्यानमिति संज्ञान्तरम् । तदुक्तमग्रे-- यथासंख्यमिति प्रोक्तं संख्यानं क्रम इत्यपि ( २. २७३ ) इति । समाहितं अर्वाचीनैः समाधिनाम्ना व्यवहृतोऽलंकारः ॥ ५ ॥

**उदात्तेति** । उदात्तश्च अपह्नुतिश्च श्लेषश्च विशेषश्चेति द्वन्द्वः । विशेषः विशेषोक्तिः । विरोधः अप्रस्तुतस्तोत्रं च विरोधाप्रस्तुतस्तोत्रे । अप्रस्तुतस्तोत्रं अप्रस्तुतप्रशंसा । व्याजस्तुतिश्च निदर्शनं च व्याजस्तुतिनिदर्शने ॥ ६ ॥

**सहोक्तिरिति** । संकीर्णं संसृष्टिः । तदुक्तमग्रे—नानालंकारसंसृष्टेः संसृष्टिस्तु निगद्यते । (२.३५९) इति । इति एवं नामनिर्देशपूर्वकम् । कथिताः पूर्वोक्ताः पञ्चत्रिंशत्संख्याकाः । वाचां वाक्यानाम् । अलंकाराः । पूर्वसूरिभिः दर्शिताः । यद्यपि एते अर्थालंकाराः तथापि शब्दार्थयोः वैयाकरणानुमतं तादात्म्य-मङ्गीकृत्योक्तं वाचामित्युक्तम् । पूर्वसूरिभिः इत्यनेन संप्रदायागतानेतानेव विवृणोमि न तु निश्चयोल्लेखादीनर्वाचीनकविकल्पितसदृशानन्यान् कानपि विशिनष्मि । तादृश-वैचित्र्यस्वीकारेण अलंकारान्तरकल्पने तेषामानन्त्यापत्तेरिति भावः ॥ ७ ॥

तत्र उद्देशवाक्यानुसारेण अलंकारान् लक्षयति—**नानावस्थमिति** । सा अलंकारेषु प्रथिता । आद्या उद्देशवाक्ये प्रथमा । अलंकृतिः स्वभावोक्तिः जातिः इति च नामद्वयवती । वर्तते इति शेषः । तल्लक्षणं तु नानावस्थमित्यादि । पदार्थानां स्थावरजङ्गमानाम् । नानावस्थं जातिगुणक्रियाद्रव्यवशेन विविधप्रकारम् ।

---

१ पर्यायान्यत्. कपा. २ संसृष्टिरथ. अ.
३ स्मर्यन्ते. अ. क.

**तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः ।**

रूपं स्वरूपविशेषम् असाधारणधर्मम् । साक्षात् अव्याजेन । विवृण्वती दर्शयन्ती ।
६अथवा साक्षात् विवृण्वती सूक्ष्मत्वाद्दुर्लक्षमपि प्रत्यक्षमिव दर्शयन्ती । सा जाति-
रिति संबन्धः । एवं च वस्तुनः यथावत् स्वरूपस्फुटीकरणसमर्थमसाधारणधर्म-
वर्णनं स्वभावोक्तिः इति लक्षणं संपन्नम् । अत्र सर्वत्र अलंकारेषु काव्यशोभा-
९करत्वरूपं साधारणलक्षणप्राप्तं चमत्कृतिहेतुत्वमपेक्ष्यते एव । तेन च—

दीर्घपुच्छश्चतुष्पादः ककुद्मांल्लम्बकम्बलः ।
गोरपत्यं बलीवर्दस्तृणमत्ति मुखेन सः ॥

१२इत्यादौ नायमलंकारः । अत्र केचित् नानावस्थमित्यनेन एकावस्थवस्तुरूपवर्णने
न वैचित्र्यातिशयः इति नालंकारता । यथा—अम्भोदमुदितं दृष्ट्वा मुदा नृत्यन्ति
बर्हिणः । इत्यत्र नर्तनमात्रं वर्णितमिति नात्र स्वभावोक्तिरित्याहुः । प्रकाशकारस्तु
१५स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् । ( १०.१११) इति लक्षणं विधाय
रूपवत् क्रियावर्णनमपि स्वभावोक्तिमाह । भोजस्तु— अर्थव्यक्तिः स्वरूपस्य
साक्षात् कथनमुच्यते । ( १. ८१ ) इति अर्थव्यक्तिम् अर्थगुणमाह । अनया
१८सह स्वभावोक्तेः सांकर्यपरिहाराय सार्वकालिकस्य वस्तुस्वरूपस्य वर्णनम् अर्थ-
व्यक्तिगुणः आगन्तुकस्य वस्तुस्वरूपस्य वर्णनं स्वभावोक्तिरलंकारः इति भेदं
निरदिशत् । यथा—

२१ अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥ ( ३.५) इति ।

अन्यत्रापि—

२४ स्वभाव एव भावानां स्वरूपमभिधीयते
निजमागन्तुकं चेति द्विविधं तदुदाहृतम् ॥

इति प्रपञ्चितमस्ति । आचार्यो दण्डी तु—अर्थव्यक्तिरनेयत्वमर्थस्य इति तां शब्द-
२७गुणत्वेनैव स्वीचकार । अतस्तन्मते उपर्युक्तं सार्वकालिकागन्तुकोभयरूपं पदार्थ-
स्वरूपवर्णनं स्वभावोक्तेरेव विषयः इति ध्येयम् ॥ ८ ॥

जात्यादिचतुष्टयरूपां स्वभावोक्तिं क्रमेण उदाहरति—**तुण्डैरिति** ।

त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥ ९ ॥
कलक्कणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।
पारावतः परिभ्रम्य[1] रिरंसुश्चुम्बति प्रियाम् ॥ १० ॥
बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।
नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥ ११ ॥

आताम्रकुटिलैः आताम्राणि ईषल्लोहितानि कुटिलानि वक्राणि च तैः । तुण्डैः मुखैः । उपलक्षिताः । इत्थंभूतलक्षणे इति तृतीया । एवमग्रेपि । हरितकोमलैः हरिताः पालाशवर्णाः कोमलाः सुकुमाराः तैः। पक्षैः गरुद्भिः । त्रिवर्णराजिभिः त्रयो वर्णाः नीलरक्तधूसराः तेषां राजयः रेखाः यत्र तैः । कण्ठैः ग्रीवाभिः । एते अग्रे वर्तमानाः । शुकाः कीराः । मञ्जुगिरः मधुरप्रलापिनः । वर्तन्ते इति शेषः । अत्र तुण्डादीनां ताम्रत्वादिकः सर्वशुकजातेर्धर्मः तेन जात्युदाहरणमेतत् ॥ ९ ॥

क्रियास्वभावोक्तिमुदाहरति—**कलेति** । कलक्कणितगर्भेण कलम् अव्यक्तमधुरं यत् क्कणितं मञ्जुलध्वनिः स गर्भे अन्तः यस्य तेन । कण्ठेन उपलक्षितः । आघूर्णितेक्षणः आघूर्णिते प्रेम्णा प्रियामुखमभितः संचालिते ईक्षणे नयने येन सः । रिरंसुः रन्तुमिच्छुः । पारावतः । कलरवः सन् । परिभ्रम्य परितश्चङ्क्रमणं कृत्वा । प्रियां कपोतीम् । चुम्बति तस्याः अधरपानं करोति । अत्र कलक्कणितादयः सर्वे धर्माः पारावतचुम्बनक्रियायाः इति क्रियास्वभावोक्तिरियम् ॥ १० ॥

गुणगतां स्वभावोक्तिमुदाहरति—**बध्नन्निति** । एषः अनुभूयमानः । प्रियास्पर्शः दयितास्पर्शः । अङ्गेषु गात्रेषु । रोमाञ्चम् रोमहर्षणम् । बध्नन् संपादयन् । मनसि निर्वृतिं परमानन्दम् । कुर्वन् जनयन् । नेत्रे आमीलयन् सौख्यातिशयेन निमीलयन् । प्रवर्तते जयतीत्यर्थः । अत्र प्रियास्पर्शः इति स्पर्शस्य गुणत्वाद् गुणगतेयं स्वभावोक्तिः । भोजराजेन स्वभावोक्तेः—देशः कालश्च शक्तिश्च साधनानि च हेतवः ( ३. ८ ) इति हेतून् कथयित्वा शक्तेरिदमुदाहरणं दर्शितम् । अत्र रोमाञ्चबन्धादिषु प्रियास्पर्शप्रवृत्तेर्निमित्तस्योक्तत्वादियं शक्तिहेतुर्नाम जातिः इति च तेन लक्षणसंगतिर्दर्शिता ॥ ११ ॥

---

[1] परिक्रम्य. अ, कपा; परावृत्य, बपा.

**कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः ।**
**जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः ॥ १२ ॥**
**जातिक्रियागुणद्रव्य[1]स्वभावाख्यानमीदृशम् ।**
**[2]शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥ १३ ॥**
**यथाकथंचित् सादृश्यं यत्रोद्भूतं प्रतीयते ।**

द्रव्यगतजातिमुदाहरति—**कण्ठेकाल इति** । कण्ठेकालः कण्ठे कण्ठ-प्रदेशे कालः कालकूटं तदुत्पन्नकालिमा वा यस्य स शिवः । अमूर्धमस्तकात् ३स्वाङ्गादकामे इति अलुक्समासः । करस्थेन करस्थितेन । कपालेन शिरोस्थ्ना । तथा स्निग्धताम्राभिः स्निग्धाः कोमलाः ताम्राः अरुणाः ताभिः । जटाभिः जटिल केशपाशैः । उपलक्षितः । एतादृक् वृषध्वजः वृषः वृषभः ध्वजः केतुचिह्नं यस्य रुः । ६आविरासीत् प्रादुरभूत् । अत्र कण्ठेकालत्वादयः सर्वेपि धर्माः शिवरूपद्रव्यगताः इति द्रव्यस्वभावोक्तिरियम् । वृषध्वजशब्दो यादृच्छिकः शिवसंज्ञायां संकेतितः । संज्ञासंज्ञिनोश्चाभेदाद्द्रव्यगतेयं स्वभावोक्तिः ॥ १२ ॥

स्वभावोक्तिमुपसंहरति—**जातीति** । जातिश्च क्रिया च गुणश्च द्रव्यं च जातिक्रियागुणद्रव्याणि तेषां स्वभावः नैसर्गिकस्वरूपं तस्य आख्यानं मनोहर-३तया कथनम् । ईदृशम् अनया रीत्या स्वभावो वर्णितश्चेत् । स्वभावोक्तिरलंकारो भवति इति भावः । अत्र द्रव्यपदं वैयाकरणपरिभाषितैकव्यक्तिवाचकम् न तु नैयायिकपरिभाषितपृथिव्यादिवाचकम् । तेषां जातिपदेन संग्रहात् । अस्यैव स्वभा-६वाख्यानस्यैव । शास्त्रेषु पदार्थस्वरूपनिरूपणप्रधानेषु न्यायव्याकरणवेदान्तादि-शास्त्रेषु । साम्राज्यम् प्राधान्यम् । सर्वाण्यपि शास्त्राणि पदार्थस्वभावनिर्णयायैव प्रवृत्तानि । अतः स्वभावाख्यानं सर्वत्र वरीवर्ति इति भावः । एवकारेण अलंकारा-९न्तराणां न एतादृक् शास्त्रेषु उपयोगः इति सूचितम् । काव्येष्वपि एतत् स्वभावा ख्यानम् । ईप्सितम् कविभिः अलंकारान्तरापेक्षया एतदेव सहृदयतया आदृतम् । सर्वेषु अलंकारेषु एतदेव विराजते इति भावः ॥ १३ ॥

क्रमप्राप्तामुपमां निरूपयति—**यथेति** । यत्र काव्ये । वृत्तित्वं सप्तम्यर्थः ।

---

१ °द्रव्यैः स्व°. बपा. २ शास्त्रे चास्यैव. अ.

**उपमा नाम सा तस्याः प्रपञ्चोयं प्रदर्श्यते ॥ १४ ॥**

तच्च वृत्तित्वं शक्तिलक्षणान्यतरसहकारेण बोधकत्वसंबन्धेन ज्ञेयम् । केचित्तु यत्र
३वैचित्र्ये इति विषयसप्तमी । विषयश्च प्रतिपाद्यरूपः इत्याहुः । यथाकथंचित्
येनकेनचित् प्रकारेण । गुणक्रियाद्रव्यवशेनेति भावः । उद्भूतं प्राधान्येन स्फुटम् ।
सादृश्यम् साम्यम् । प्रतीयते अभिधालक्षणव्यञ्जनान्यतरवृत्त्या प्रतीतिविषयमेति ।
६सा उपमा तत् सादृश्यमुपमालंकारः । विधेयगतलिङ्गत्वेन तच्छब्दस्य स्त्रीत्वम् ।
तथा च काव्यनिष्ठमलौकिकचमत्कारजनकं सादृश्यमुपमेति फलितम् । चमत्कारा-
जनकं सादृश्यं नोपमालंकारः । यथा गौरिव गवयः । घट इव पटः पदार्थः ।
९अथवा—अस्थिवद्दधिवच्चैव पिष्टवत् कुष्टवत् तथा । राजन् तव यशो भाति
इत्यादिषु । एतत् सर्वालंकारसमानम् । तेन गोसदृशो गवयः इति नोपमा ।
गौर्वाहीकः इति न रूपकम् । स्थाणुर्वा पुरुषो वा इति न संदेहः । इदं रजतम्
१२इति न भ्रान्तिमान् । नायं सर्पः इति नापह्नुतिः । पीनो देवदत्तो दिवा न भुङ्क्ते
इति न पर्यायोक्तम् । पर्वतो वह्निमान् इति नानुमानम् । सोयं देवदत्तः इति
न स्मरणम् । तस्थस्थमिपां तातंतामः इति न यथासंख्यम् । पुत्रेण सह
१५आगतः पिता इति न सहोक्तिः । तेन विना गतः इति न विनोक्तिः ।
श्वेतो धावति इति न श्लेषः । इत्याद्युहनीयम् इति चित्रमीमांसायां ( ६
पत्रे ) अप्पयदीक्षिताः । उक्तं हि रसगङ्गाधरे — सादृश्यं सुन्दरं
१८वाक्यार्थोपस्कारकं उपमालंकृतिरिति ।( १५७ पत्रे) व्याख्यातं च सुन्दरमिति
सादृश्यविशेषणम् । सौन्दर्यं च चमत्कृत्याधायकत्वम् । चमत्कृतिश्चानन्द-
विशेषः इति । तस्याः प्रपञ्चो विस्तरः । अयं वक्ष्यमाणप्रकारकः । प्रदर्श्यते
२१निदर्श्यते । अस्योपमालंकारस्य चत्वार्यङ्गानि । उपमानम् उपमेयम् साधारणो
धर्मः उपमावाचकश्चेति । तत्र सादृश्यप्रतियोगि उपमानम् । सादृश्यानुयोगि उपमे-
यम् । उपमाने उपमेये चोभयत्र संगतो धर्मः साधारणो धर्मः । उपमावाचकश्च
२४इवादिशब्दः । परे तु यस्य धर्मस्य संबन्धात् येन सह यदुपमीयते स साधारणो
धर्मः । तदुपमानम् । तच्चोपमेयम् । इति साधारणधर्मोपमानोपमेयपदानि विवृ-
ण्वन्ति । यथा कमलमिव मुखं मनोज्ञम् इत्यादौ मनोज्ञत्वधर्मसंबन्धेन तद्वत्तया
२७प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः

---

१ निदर्श्यते. ब, कपा; ड; प.

कमलमुपमानं मुखमुपमेयम् इवशब्दश्च उपमावाचकः इत्युपमालंकारः। एते च उपमानादयः पदार्थाः क्वचित् सन्तः क्वचिदसन्तः क्वचिदुपात्ताः क्वचि-
३०दनुपात्ता अपि सामर्थ्यावसेया भवन्ति। अत एव त्वयि कोपोयमाभाति सुधांशा-विव पावकः। इत्यत्र सुधांशौ पावकस्यासतोपि उपमानत्वसिद्धिः। तत्र उपात्तानां गुणक्रियाद्रव्याणां सादृश्यात् क्रमेणोपमालंकारः। यथा हंसीव धवला कीर्तिः इत्यत्र
३३धवलत्वगुणेन सलीलमियमायाति वधूर्गजवधूरिव इत्यत्र गमनक्रियया आकाशः काशतेत्यर्थे शिववद्विधुभूषणः इत्यत्र विधुरूपद्रव्येण। अनुपात्तानां यथा—

मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये।
३६ वाचः सुधा इवौष्ठस्ते बिम्बतुल्यो मनोऽश्मवत्॥ इति।

अत्र मुखेन्दुप्रभृतीनां प्रसिद्धसादृश्यानां मनोज्ञत्वादयो धर्मा नोपात्ताः। ते सामर्थ्या-देव ज्ञायन्ते। उद्भूतम् प्राधान्येन स्फुटम्। तेन यत्र वैचित्र्यान्तरनिर्गीर्ण-
३९सादृश्यवैचित्र्यं तत्र नोपमालंकारः। तथा च रूपकादिस्थले ताद्रूप्यादिप्रतीतिजन्यवैचित्र्यस्य चमत्कारातिशयजनकतया तत्कुक्षिनिलीनमिवोपमावैचित्र्यं न तादृशं चमत्कारं दर्शयति इति न तत्रोपमालंकारप्रसक्तिः। एवमेव व्यतिरेका-
४२लंकारेपि। तत्र भेदप्रतीतिवैचित्र्येण सादृश्यप्रतीतिजन्यवैचित्र्यस्य तिरोधानात्। अङ्गाङ्गिभावसंकरे तु सादृश्यजन्यवैचित्र्यं नान्येन तिरोधीयते। परं काव्यार्था-लोचनया प्रधाननिर्वाहकत्वेन तदङ्गत्वेन प्रतीयते। सादृश्यमतिरिक्तः पदार्थः
४५इति वैयाकरणमीमांसकादयः। साधर्म्यमिति नैयायिकादयः। साधर्म्यमुपमाभेदे इति प्रकाशकारः। साधर्म्यं च उपमानोपमेययोरेकधर्मसंबन्धः। समासोत्तरवर्ति-भाववाचितद्धितप्रत्ययस्य संबन्धाभिधायकत्वात्। तदुक्तं भर्तृहरिणा—कृत्तद्धित-
४८समासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति। एकत्वं हि धर्माणां क्वचिद्वस्तुतः अभिन्नत्वं क्वचिदेकजातीयत्वं क्वचिदेकशब्दप्रतिपाद्यत्वं क्वचिदेकधर्मत्वं चेति चतुर्विधम्। तत्र गुणक्रियायदृच्छानां साधर्म्यत्वे प्रथमम्। तेषामभिन्नत्वस्य वैया-
५१करणैरङ्गीकृतत्वात। द्रव्यसामान्यादीनां साधर्म्यत्वे द्वितीयम्। एकजातीयत्वं च एकजातित्वम्। एकशब्दप्रतिपाद्यत्वं श्लिष्टपदोपस्थाप्ये धर्मे ज्ञेयम्। तत्र शब्द-श्लेषे सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव इत्यादि। अत्र सकल-
५४कलम् इत्यस्य कलकलसहितं संपूर्णकलायुतं चेत्यर्थः। बिम्बानुबिम्बितायामेक-धर्मवत्त्वम्। यथा—

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
५७ तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ।। इति ।

अत्र श्मश्रुलत्वसरघाव्याप्तत्वयोः धर्मयोः एककृष्णत्वादिगुणयोगादेकत्वम् । आचार्य-दण्डिनो मते एतत् सादृश्यं द्वयोरेवेति नाग्रहः । एकस्यैव उपमानोपमेयस्वरूपस्य ६० अनन्वयस्याध्यनेन उपमात्वस्वीकारात् । तथैव वाक्यद्वयगता उपमेयोपमा अपि एतन्मते उपमैव । अतस्तदर्थं सादृश्यस्य एकवाक्यगतत्वमिति विशेषणं नापेक्ष्यते । तत्र इवादिपदप्रयोगे वाच्यं तदप्रयोगे क्वचिल्लक्ष्यं क्वचिद्वाक्येन ६३ व्यङ्ग्यम् इति ज्ञेयम् । अत्र तावदुपमायाः वाक्यार्थबोधं संक्षेपतः दर्शयामः । चन्द्र इव मुखं आह्लादकम् इत्यत्र आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकमुपमेयं मुखमिति बोधः । अत एव इवादिसमभिव्याहारे उपमानोपमेययोः समानविभक्ति-६६ कत्वनियमः । साधारणधर्मसंबन्धश्च क्वचिद्विशेषणतया यथा चन्द्र इव मुखमाह्लादकम् इत्यादौ क्वचिद्विशेष्यतया यथा चन्द्र इव मुखमाह्लादयति । अत्र उपमानचन्द्रकर्तृकाह्लादाभिन्नः उपमेयमुखकर्तृकाह्लादः इति बोधः । अतोत्रापि ६९ तयोः समानविभक्तिकतैव । हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम् । इत्यादि तु असाध्वेव । समानविभक्तिकत्वाभावात् । ये त्वत्र चन्द्रसादृश्यप्रयोजको मुखकर्तृक आह्लादः इति बोधं वदन्ति तेषां मते उपमानोपमेययोः समानविभक्ति-७२ कत्वनियमे मानं चिन्त्यम् । यत्तु वाचनिकी समानविभक्तिकतेति तन्न व्याकरणशास्त्रे तादृशवचनानुपलम्भात् । एवं गजराज इव गच्छति देवदत्तः इत्यादौ बोध्यम् । वनं गज इव शूरः समरभूमिं गच्छति इत्यादौ उपमानगजकर्तृकवन-७५ कर्मकगमनाभिन्नमुपमेयशूरकर्तृकसमरकर्मकं गमनमिति बोधः । साधारणधर्मरूपगमनस्य विधेयतया उपमाविधेयिकात्र धीः । व्याघ्र इव यः शूरः पुरुषः स गच्छति इत्यादौ उपमानशूरव्याघ्राभिन्नपुरुषकर्तृकगमनमिति धीः । शूरत्वादि-७८ साधारणधर्मस्योद्देश्यतया उपमोद्देश्यिकात्र धीः । अत एव भेदाभेदप्रधाना उपमेति वृद्धाः । यद्यपि चन्द्रमुखयोस्तत्त्वेन भेदः तथापि साधारणधर्मवत्त्वेनाभेदान्वययोग्यता बोध्या इति मञ्जूषायां नागेशः । विस्तरस्तु रसगङ्गाधरे द्रष्टव्यः । ८१ उपमायाः विविधालंकारमूलत्वमाह उपमाप्रस्तावे अप्पयदीक्षितः चित्रमीमांसायाम् । यथा—

**अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।**

उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ।
८४ रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥

चन्द्र इव मुखमिति सादृश्यवर्णनं तावदुपमा सैव उक्तिभङ्गभेदेनानेकालंकारकत्वं भजते । तथाहि चन्द्र इव मुखं मुखमिव चन्द्रः इत्युपमेयोपमा । मुखं मुखमिव ८७इत्यनन्वयः । मुखमिव चन्द्रः इति प्रतीपम् । चन्द्रं दृष्ट्वा मुखं स्मरामि इति स्मरणम् । मुखमेव चन्द्रः इति रूपकम् । मुखचन्द्रेण तापः शाम्यति इति परिणामः । किमिदं मुखमुताहो चन्द्रः इति संदेहः । चन्द्र इति चकोरास्त्वन्मुख-९०मनुधावन्ति इति भ्रान्तिमान् । चन्द्र इति चकोराः कमलमिति चञ्चरीकास्त्वन्मुखे रज्यन्ति इत्युल्लेखः । चन्द्रोयं न मुखम् इत्यपह्नवः । नूनं चन्द्रः इत्युत्प्रेक्षा । चन्द्रोयम् इत्यतिशयोक्तिः । मुखेन चन्द्रकमले निर्जिते इति तुल्ययोगिता । ९३निशि चन्द्रस्त्वन्मुखं च हृष्यति इति दीपकम् । त्वन्मुखे एवाहं रज्यामि चन्द्र एव चकोरा रज्यन्ते इति प्रतिवस्तूपमा । दिवि चन्द्रो भुवि त्वन्मुखम् इति दृष्टान्तः । मुखं चन्द्रश्रियम् बिभर्ति इति निदर्शना । निष्कलङ्कं मुखं चन्द्रादति-९६रिच्यते इति व्यतिरेकः । त्वन्मुखेन समं चन्द्रो निशासु हृष्यति इति सहोक्तिः । मुखं नेत्राङ्करुचिरं स्मितज्योत्स्नोपशोभितम् इति समासोक्तिः । अब्जेन सदृशं वक्त्रं हरिणाहितसक्तिना इति श्लेषः । मुखस्य पुरतश्चन्द्रो निष्प्रभः इत्यप्रस्तुतप्रशंसा । ९९एवमुक्तानेकालंकारविवर्तवतीयमुपमा ।

तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात् ।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा ॥ इति । (५ पत्रे).

१०२राजशेखरोपि—

अलंकारशिरोरत्नं सर्वस्वं काव्यसंपदाम् ।
उपमा कविवंशस्य मातेवेति मतिर्मम ॥

१०५इति तां प्रशंसति ॥ १४ ॥

प्रतिज्ञातमुपमाप्रपञ्चं दर्शयति—**अम्भोरुहमिति** । हे मुग्धे सुन्दरि । तव करतलं पाणितलम् । अम्भोरुहमिव कोकनदमिव । आताम्रं आलोहितम् । ३अम्भोरुहमिवेति समस्तम् । इवेन नित्यसमासो विभक्त्यलोपश्चेति शासनात् ।

**इति धर्मोपमा साक्षात् तुल्यधर्मप्रदर्शनात्[1] ॥ १५ ॥**

अम्भोरुहपदं च अम्भोरुहसदृशे लाक्षणिकम् । इवशब्दः सादृश्यद्योतकः । तथा च आताम्रोपमानभूताम्भोरुहाभिन्नमाताम्रमुपमेयं करतलमिति बोधः । यत्तु—
६इवार्थः सादृश्यम् । तत्र प्रतियोग्यनुयोगिभावेनैव अम्भोरुहकरतलयोरन्वयोपपत्तौ किं लक्षणया । तथा च अम्भोरुहप्रतियोगिकसादृश्यानुयोगि करतलमिति बोधः इति तन्न । इवशब्दस्य सादृश्यार्थवाचकत्वे तदर्थे सादृश्ये उपमानस्य भेदेनान्वये
९अम्भोरुहमिव मुखं पश्यामि अम्भोरुहमिव मुखं दृश्यते इत्यादौ अम्भोरुहपदस्य सामानाधिकरण्याभावात् उक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः षष्ठ्यापत्तेश्च । तथा अम्भोरुहेणेव करतलेन शोभसे इत्यादौ समानविभाक्तित्वं
१२न स्यात् । अभेदान्वयस्थले एव विशेषणविशेष्ययोः समानविभक्तित्वनियमात् । ननु अभेदान्वयस्थलवदुपमानोपमेयभावस्थलेपि समानविभक्तित्वस्यानुशासनमस्ति । तथा हि—विभक्तिः पुनरेका स्यादुपमानोपमेययोः । इति । इति चेन्नैतद्रुचिरम् ।
१५एतच्छासनस्य मुनित्रयानुपदिष्टत्वात् । अत्र केचित् साधारणधर्मस्य आताम्रत्वस्य प्रथममुपमेयभूतकरतलेनैवान्वयः न तु उपमानभूतेनाम्भोरुहेण । तस्य समस्तैकपददेशपदबोध्यत्वात् । तद्गतत्वेन प्रतीतिस्तु पर्यालोचनया अन्वयबोधोत्तरमेव ।
१८अत एव धर्मसाधारण्यप्रतीतिः तयैव च वैचित्र्यमिति साधारणधर्मसंबन्धे विषये आहुः । परं नैतद्रुचिरम् । पूर्वोक्तदोषपरिहाराय इवशब्दस्य द्योतकत्वात् । तेनोपमानोपमेयगतं सादृश्यं सममेव स द्योतयति इति ज्ञेयम् । अपरं च
२१यथेवादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येवेत्यादिप्रकाशकारोक्तिविरुद्धमेतत् इति सुधीभिः विचार्यमेतत् । प्रकृतमनुसरामः । इति एवं साधारणधर्मप्रयोगस्थले धर्मोपमा । धर्मस्य उपादानेन धर्मोपमा इत्यर्थः । अत्र
२४हेतुमाह —**साक्षादिति** । साक्षाच्छब्देन प्रतिपादितस्य तुल्यधर्मस्य आताम्रत्वस्य । प्रदर्शनात् कीर्तनात् । अत्र इवशब्दश्रवणमात्रेण सादृश्यरूपसंबन्धस्य प्रतीतेरियं श्रौती । उपमानोपमेयसाधारणधर्मसादृश्यवाचकानां चतुर्णामपि प्रयोगाच्च पूर्णेय-
२७मुपमा । चतुर्षु अङ्गेषु कस्यचिदनुपादाने लुप्तोपमेति ज्ञेयम् । एतद्भेदकरणमर्वाचीनानामेव । प्राचीनग्रन्थेष्वनुपलम्भात् । आचार्यदण्डी तु प्राचीनमतमेवानुसरति । धर्मवस्तूपमाविषये प्रमाणमाग्नेये यथा —

---

१ प्रदर्शनम्. कपा.

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥ १६ ॥
त्वदाननमिवोन्निद्रमरविन्दमभूदिति ।
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १७ ॥

१० यत्र साधारणो धर्मः कथ्यते गम्यतेथवा ।
ते धर्मवस्तुप्राधान्याद्धर्मवस्तूपमे उभे ॥ ( ३४४.१० ) इति ।

इत्यलं पल्लवितेन ॥ १५ ॥

वस्तूपमां दर्शयति—**राजीवमिति** । ते तव । वक्त्रं वदनं । राजीवमिव कमलसदृशम् । नेत्रे नयने । नीलोत्पले नीलकमले इव । इयं निर्दिष्टस्वरूपा ३उपमा । प्रतीयमानः शब्देनानुपादानाद् गम्यमानः । एव केवलः । अन्येषामुपमानोपमेयोपमावाचकानां शब्दोपात्तत्वात् इति भावः । धर्मः साधारणो धर्मः मनोज्ञत्वसौरभत्वादिः । यत्र सा वस्तूपमा । वस्तुनोः उपमानोपमेययोरुपादानादियं वस्तू६पमा । प्रसिद्धतया अत्र साधारणधर्मस्य शब्दप्रयोगमन्तरेणापि औपम्यप्रतीतिर्भवतीति भावः । केचित्तु प्रतीयमानैकधर्मेतिपदस्थैकशब्दस्य सामान्यः साधारणः इति अर्थं दर्शयन्ति । इदमेकधर्मत्वं यत्राप्रसिद्धं तत्र नेयं वस्तूपमा भवति । ९तथा च सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव । इत्यादौ न वस्तूपमा । अत्र सकलकलमिति समानधर्मस्यानुपादाने न हि पुरसुधांशुबिम्बयोः सादृश्यं प्रसिद्ध्या बुद्ध्यारूढं भवति । इयं च धर्मलुप्तोपमेति अप्पय्यदीक्षितैर्मन्यते ॥ १६ ॥

विपर्यासोपमामाह—**त्वदाननेति** । त्वदाननमिव । उन्निद्रं प्रबुद्धम् । अरविन्दं कमलम् । अभूत् आसीत् । इति प्रसिद्धेः विपर्यासात् वैपरीत्यात् । सा ३प्रसिद्धा । विपर्यासोपमा अत्रास्तीति शेषः । अयं भावः । प्रस्तुतत्वेन वर्णनीयानां मुखादीनामेवोपमेयत्वं तदुत्कर्षप्रतिपादनाय न्यस्तानां चन्द्रारविन्दानामुपमानत्वम् इति कविसंप्रदायासिद्धः पन्थाः । तस्य मार्गस्य उपमेयस्य उत्कर्षप्रतिपादनाय ६विपर्यासः उपमेयोपमानभावविपर्ययः तस्माद्विपर्यासोपमा । प्रस्तुते उदाहरणे आननमुपमेयभूतमपि उपमानतया वर्णितम् । इवान्तस्य उपमानत्वनियमात् । तदनुरोधेन च यच्च उपमानभूतमरविन्दं तत् उपमेयतया वर्णितम् । अतः

---

१ इति. अ. २ तवाननम्. च, कपा, ड, प.

**तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।**
**इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी[1] ॥ १८ ॥**

९विपर्यासोपमालंकारः । नव्यास्तु अमुं प्रतीपं कथयन्ति । तदुक्तं कुवलयानन्दे—

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥ (१४ पत्रे ) इति ।

१२उदाहरति च जगन्नाथः —

किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णमिति ।
तद्यदि पतति हुताशे तदा हताशे तवाङ्गवर्णं स्यात् ॥ (४९६ पत्रे )

१५इति ॥ १७ ॥

अन्योन्योपमामाह **तवाननमिति** । अन्योन्यस्य आननेन उपमानेन अम्भोजस्य अम्भोजेन उपमानेन आननस्य इति परस्परस्य उत्कर्षः गुणमाहात्म्यं ३तत् शंसिनी कथयित्री सेयमन्योन्योपमा । इति इत्यनेन उदाहरणस्वरूपं निर्दि-श्यते । तेन च यत्र पर्यायेण उपमानोपमेयभावस्तत्रैवेयमिति सिद्धम् । तेन च मुखमम्भोजं च तुल्यमित्यत्र तथा प्रतीतावपि नेयं भवति उपरिदर्शितवैचित्र्या-६भावात् । अत्र पर्यायेणोपमानोपमेयकत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थम् । तेन न्यूनगुणेनोपमेयेनोपमीयमानस्य गुणाधिकस्योपमानस्य कथमुत्कर्षः इति शङ्का परास्ता । अत्र द्वयोरेव मुखाम्भोजयोः प्रस्तुतत्वं बोध्यम् । अम्भोजस्य अप्रस्तुतत्वे ९तदुत्कर्षप्रतिपादनवैयर्थ्यात् । प्रस्तुतोत्कर्षप्रतिपादनायैव गुणालंकाराणां समुत्पत्तेः । अत एव हेमचन्द्रः इमामुपमेयोपमाभिधानेन इत्थमुदाजहार —

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
१२ निलीनां नलिनीखण्डे कथ नु त्वां लभेमहि ॥( २४७पत्रे) इति ।

निलीनां गूढाम् । अप्पय्यदीक्षितोपि—धर्मोर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि । इत्युभयप्रस्तुतमेवोदाहरत् । अर्वाचीनैस्तु इयमुपमेयोपमाशब्देन व्यवह्रियते । जग-१५न्नाथादयस्तु केवलं तृतीयसदृशव्यवच्छेदमेवास्याः फलं मन्वते । तथा प्रस्तुता-प्रस्तुतेपि इयं भवतीति—

१ त्वदाननम्, अ. २ °शालिनी. बपा.

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित् ।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥
पद्मं तावत् तवान्वेति मुखमन्यच्च तादृशम् ।
अस्ति चेदस्तु तत्कारीत्यसावानियमोपमा ॥ २० ॥
समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चान्वेति [1]कर्मणेन्दुमितीदृशी ॥ २१ ॥

कौमुदीव भवती विभाति मे कातराक्षि भवतीव कौमुदी ।
१८ अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥
इत्येतदुदाहरणतः स्पष्टं भवति । अत्र आननं मुखमिति प्रक्रमभङ्गः प्राचां निरङ्कुशत्वात् सोढव्यः इति प्रेमचन्द्रशर्माणः । परे तु कविना एतदुदाहरणं केवल- २१मुपमाभेदप्रदर्शनायोल्लिखितं न तु काव्यत्वेनोपन्यस्तम् । अतस्तत्र प्रस्तुतमपहाय केवलक्षुद्रदोषैकदृष्टिभिर्विपश्चिद्भिर्न भवितव्यमित्याहुः ॥ १८ ॥

नियमोपमामाह––**त्वन्मुखमिति** । कमलेनैवेति एवकारः अन्ययोगव्यवच्छेदकः । तदेव शब्दतः कथयति नान्येनेति । अन्यसाम्यव्यावृत्तेरिति ३उपमानबाहुल्यमुपमेयस्यापकर्षं गमयति । तद्व्यावृत्त्या प्रकृष्टेनैकेन साम्यकथनम् उत्कर्षातिशयवैचित्र्यमावहतीति अस्याः अलंकारकत्वं ज्ञेयम् ॥१९॥

अनियमोपमां दर्शयति—**पद्ममिति** । पद्मम् कमलम् । तावत् इति वाक्यालंकारे । तव मुखमन्वेति अनुकरोति । अन्यत् कमलादितरत् । तादृशं सुन्दरं वस्तु ३चन्द्रादि । तत्कारि तव मुखानुकारि । अस्ति चेदस्तु । इति एवं नियमाभावरूपा अनियमोपमा । नास्ति नियमः उपमानविषये यत्र सा अनियमोपमेत्यर्थः ॥ २० ॥

समुच्चयोपमां दर्शयति––**समुच्चयेति** । तव मुखं कान्त्यैव केवलकान्त्या एव । इन्दुं नान्वेति । ह्लादनाख्येन संतोषजननाख्येन । कर्मणा क्रियया । च ३चशब्दः समुच्चयद्योतकः । तेनापि इत्यर्थः । अन्वेति अनुकरोति । इतीदृशी एतादृशवैचित्र्यविशिष्टा । समुच्चयोपमा अपि अस्ति । अत्र गुणक्रिययोः समुच्चयः । ईदृशीत्यनेन केवलगुणकेवलक्रियासमुच्चये साधारणधर्मसमुच्चयेपि इयं ज्ञेया ॥२१॥

---

१ धर्मेण; अ.

त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥
मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
पद्मेपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥
[1]यदि किंचिद्भवेत् पद्मं सुभ्रु विभ्रान्तलोचनम् ।

अतिशयोपमां दर्शयति— **त्वय्येवेति** । त्वन्मुखं त्वयि एव दृष्टम् । दिवि आकाशे । चन्द्रमा दृश्यते । एवं मुखचन्द्रमसोर्भिन्नाश्रयत्वं प्रतिपादितम् । इयती ३एव भिदा एतावानेव भेदः । नान्या अन्यो भेदो न । गुणाक्रियादिकं सकलं समम् इति भावः । इति एवं वैचित्र्यशालिनी अतिशयोपमा भवतीति शेषः । उपमानोपमेययोः गुणक्रियादिभिः महत्यपि भेदे किंचिद्भेदप्रदर्शनपुरःसरं नान्यो भेदः ६इति अभिन्नाध्यवसानेन उपमेयस्य गुणक्रियातिशयो वर्णितो भवति । अतः अतिशयोपमा । अत्र इवादिसाधर्म्यवाचकशब्दाप्रयोगात् साम्यं व्यञ्जनगम्यमेव । व्यञ्जना च वक्तृवैशिष्ट्यसचिवया भेदाभेदप्रतीत्या प्राप्तप्रसरा वर्तते । नात्र रूपक-९ध्वनिः । आश्रयभेदस्य स्पष्टप्रतिपादनेन अभेदप्रतीतेः अभावात् । नापि व्यतिरेकः। उपमानादुपमेयगताधिक्यस्य अनुद्भवात् । तस्मादुपमा एव इयम् ॥ २२ ॥

उत्प्रेक्षितोपमां दर्शयति—**मय्येवेति** । अस्याः प्रकृतनायिकायाः । मुखश्रीः मुखलक्ष्मीः । मुखशोभासदृशशोभेति निदर्शनागर्भेयुमक्तिः । मय्येव इति एवंप्रकारैः । ३इन्दोः । विकत्थनैः श्लाघावचनैः । अलम् । यत् यस्मात् । सा श्रीः । पद्मेपि । अस्त्येव वर्तते एव । इति एतादृशी वर्णना उत्प्रेक्षितोपमा ज्ञेया । अत्र चन्द्रमसा आत्मश्लाघायाः अतात्त्विकत्वेन नायकस्य चाटूक्त्या संभावनयोत्प्रेक्षितत्वेन इयम् ६उत्प्रेक्षितोपमा । अत्र साम्यं व्यञ्जनागम्यम् । एवमेवाग्रेपि तत्र तत्र बोद्धव्यम् ॥२३॥

अद्भुतोपमामाह—**यदीति** । सुभ्रु हे सुन्दरि । यदि । पद्मं । किंचित् मनाक् । विभ्रान्तलोचनं घूर्णितनयनम् । भवेत् । तत् तर्हि । ते तव । मुखश्रियं धत्ताम् ३प्राप्नोतु । इति असौ अद्भुतोपमा । विभ्रान्तलोचनादयो धर्मा मुखस्यैव तेषां संभावनया पद्मस्थितिकल्पनेन मुखसादृश्यवर्णनं चमत्कारातिशयाय भवति इतीय-

---

१ अयं श्लोकः अ पुस्तके नास्ति ।

तत् ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥
शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥ २५ ॥

मद्भुतोपमा । यदुक्तम्—

६ यत्रोपमेयधर्माः स्युरुपमानेधिरोपिताः ।
चमत्कारविधानार्थं तामाहुरद्भुतोपमाम् ॥ इति ।

प्रकाशकारादयस्तु एनामतिशयोक्तिमाहुः । तदुक्तं प्रकाशे —
९प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् । उदाहृतं च—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ (७६२ पत्रे) इति ।

१२इदमत्रावधेयम् । यत्र संभावनयापि पर्यन्ते औपम्यस्य अनिष्पत्तिः कवेरभिप्रेता तत्र नोपमा किंतु अतिशयोक्तिः । यथा प्रस्तुतोदाहरणे सुधांशुवपुषो अकलङ्क-भवनमशक्यमतस्तेन मुखसाम्यप्रापणमपि अशक्यमेवेत्यत्र कवितात्पर्यमस्ति । अतो १५नेयमुपमा किंतु अतिशयोक्तिः । यथा वा—

उभौ यदि व्योम्नि पृथक् प्रवाहौ आकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

१८इत्यादावपि अनयैव दिशा अतिशयोक्तिः ।

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोनुकुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

२१इत्यादौ तु नातिशयोक्तिः । पुष्पस्य प्रवालोपहितत्वस्य संभवात् । नात्र कवेरौपम्या-भावप्रदर्शने यत्नः । केवलं चारुतातिप्रदर्शनायैव चेयं संभावना । अत इयं कविकल्पितोपमानतया उत्पाद्योपमेति प्राचीनैर्व्यवहृतास्ति । आचार्य-२४दण्डिमते तु उभयत्रापि अद्भुतोपमैवेति सुधीभिर्विचार्यम् ॥ २४ ॥

मोहोपमां दर्शयति—**शशीति** । हे तन्वङ्गि कृशाङ्गि । तव मुखं शशी इत्युत्प्रेक्ष्य सादृश्यादभिन्नं परिकल्प्य भ्रान्तिविषयीकृत्येत्यर्थः । अनन्तरं त्वद्विरहे ३शशिनं दृष्ट्वा । त्वन्मुखाशया तव वदनस्पृहया । त्वन्मुखमिदमेवेति बुद्ध्या । इन्दुमपि

अनुधावामि तद्दर्शनबद्धरतिर्भवामि । इत्येषा इयं मोहोपमा स्मृता । कविभिरिति शेषः । मोहो भ्रान्तिः सादृश्येन इन्दौ मुखभ्रान्तिः तेन उपमा मोहोपमेति । ६तदुक्तमाग्नेये—

प्रतियोगिनमारोप्य तदभेदेन कीर्तनम् ।
उपमेयस्य यन्मोहोपमासौ भ्रान्तिमद्वचः ॥ इति ।

९अत्र साम्यं व्यङ्ग्यम् । शशी इन्दुरिति प्रक्रमभङ्गोपि पूर्ववन्न दोषायेति बोद्धव्यम् । अर्वाचीनानां मते अत्र भ्रान्तिमानलंकारः । तदुक्तं अप्पय्यदीक्षितेन—

कविसंमतसादृश्याद्विषये पिहितात्मनि ।
१२ आरोप्यमाणानुभवो यत्र स भ्रान्तिमान् मतः ॥

( चि. मी. ६४—६५ पत्रयोः) इति ।

अत्राप्पय्यदीक्षितोक्तानि उदाहरणानि मनोहराणीति प्रदर्श्यन्ते—

१५ कपाले मार्जारः पय इति करांल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
१८ प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥

क्वचित् भ्रान्तेरुत्तरोत्तरं पल्लवेन चमत्कारः—

बल्लालक्षोणिपाल त्वदहितनगरे संचरन्ती किराती
२१ कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी ।
कृत्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुधावन्मधुकरनिकरैर्धूमशङ्कां तनोति ॥

२४क्वचित् भिन्नकर्तृकोत्तरोत्तरभ्रान्तिनिबन्धनेन चमत्कारः । यथा—

शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
२७ तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥

इति ॥ २५ ॥

**किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।**
**मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥**
**न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।**
**अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥**

संशयोपमामाह--**किमिति** । अन्तः भ्रान्तौ अली यस्य एतादृशम् । किमेतत् पद्मम् । अथवेदं ते तव । लोले चञ्चले ईक्षणे नयने यस्मिन् एतादृशं ३ किं मुखम् । इत्येवं विरुद्धनानार्थावगाहि मम चेतः । दोलायते संशयं प्राप्नोति । इयं संशयोपमा । एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः । अस्य च सादृश्यपर्यवसायित्वादुपमाभेदे संग्रहः । अत्र भ्रान्तालित्वविलोलेक्षणत्वयोः बिम्बा- ६ नुबिम्बिता । तथा च सादृश्यविकासः । अर्वाचीनास्तु इमां संदेहालंकारकारणमिति स्वीकुर्वन्ति । तदुक्तं कविराजेन-- सादृश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनी धी रमणीया संदेहालंकृतिः इति । उदाहरति च--

९ अधिरोप्य हरस्य हन्त चापं परितापं प्रशमय्य बान्धवानाम् ।
परिणेष्यति वा न वा युवायं निरपायं मिथिलाधिनाथपुत्रीम् ॥ (२५६ पत्रे)

इति ॥ २६ ॥

निर्णयोपमां वक्ति--**न पद्मस्येति** । इन्दुनिग्राह्यस्य चन्द्रनिगृहीतस्य । चन्द्राभिभाव्यस्य । पद्मस्य । इन्दुलज्जाकरी अपकर्षत्वेन संकोचमापादयित्री । द्युतिः ३ कान्तिः । न । निगृहीतस्य निग्राहकत्वाभावादिति भावः । अतः इदम् इन्दु- निग्रहाकत्वेन पुरोभासमानं वस्तु त्वन्मुखमेव । तस्यैव तत्सामर्थ्यात् । एवशब्देन न पद्ममिति पद्मस्य व्युदासः । इत्यसौ निर्णयोपमा भवति । उपमेयस्य ६ निर्णयभङ्ग्या सादृश्यप्रकाशनादिति भावः । संशयानन्तरमेव निर्णयस्योद्भवात् । अत्रेदं पद्मं वा मुखं वा इति प्रथमं संशयः परिकल्पनीयः । संशयोत्तरस्यैव निर्णयस्य निर्णयालंकारत्वमुक्तमग्निपुराणे यथा --उपमेयस्य संशय्य निश्चयान् ९ निश्चयोपमा । ( ३४४. १८ ) इति । निश्चयोपमा निर्णयोपमा इति पर्यायौ । उदाहरणान्तरं यथा--

किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः ।

**शिशिरांशुप्रतिस्पर्धि श्रीमत् सुरभिगन्धि च ।**
**अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥ २८ ॥**
**सरूपशब्दवाच्यत्वात् सा समानोपमा यथा ।**

संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विब्वोकैर्बकसहवासिनां परोक्षैः ॥ इति ।

१५विश्वनाथादय एनां निश्चयालंकृतिमाहुः ॥ २७ ॥

श्लेषोपमां दर्शयति---**शिशिरांश्विति** । ते वक्त्रम् अम्भोजमिव शिशि-रांशुप्रतिस्पर्धि शिशिरांशुश्चन्द्रः तस्य प्रतिस्पर्धि प्रतिद्वन्द्वि । अम्भोजपक्षे ३शिशिरांशुः प्रतिस्पर्धी यस्येति बहुव्रीहिः । श्रीमत् सुश्रीकम् । प्रशंसायां मतुप् । सुरभिगन्धि सुरभिः घ्राणतर्पकः गन्धः यस्य तत् । इति विशेषणत्रयं श्लेषेणो-भयत्र संबन्धं लभते । अतः इयं श्लेषोपमा स्मृता । केचित्तु वक्त्रपक्षे शिशिरांशु-६प्रतिद्वन्द्विश्रीमत् इत्येकं पदं परिकल्प्य शिशुरांशुप्रतिद्वन्द्विनी या श्रीः तद्विशिष्टम् इत्यर्थं प्रकाशयन्ति । पूर्वपद्धत्या अभङ्गश्लेषो भवति । अनया तु सभङ्गश्लेषो भवति इति ज्ञेयम् । श्लेषेण उपमा उपमानोपमेयगतसाधर्म्यं द्योत्यते यत्र सा ९श्लेषोपमेति निरुक्तिः । श्लेषश्चात्र अर्थश्लेषः । शब्दश्लेषस्य वक्ष्यमाणसमानोपमा-विषयत्वादिति अनुपदमेव स्फुटीभविष्यति । श्लेषस्य शब्दार्थवृत्तित्वं शब्द-परिवृत्त्यसहत्वसहत्वाभ्यां ज्ञेयम् । अत्र श्लेषस्य विद्यमानत्वेपि न श्लेषालंकारः । १२सादृश्यवैचित्र्ये श्लेषवैचित्र्यस्य निलीनत्वात् । यत्र यद्वैचित्र्यं प्रधानतयाविर्भवति तत्रैव तदलंकारव्यवहारः । एतेनात्र अलंकारान्तरस्य श्लेषस्य सद्भावेपि न तत्त्वेन व्यपदेशः । श्लेषवैचित्र्यस्य प्रधाने सादृश्यवैचित्र्ये निलीनतया व्यपदेशकत्वा-१५भावात् । प्राधान्येन व्यपदेशा भवन्ति इत्युक्तेः । इति केषांचिदुक्तिरपि एतद-भिप्रायिकैवेति बोद्धव्यम् । अत्र श्लेषानुप्राणिता उपमा ज्ञेया ॥ २८ ॥

समानोपमां निरूपयति---**सरूपेति** । सरूपं समानं भिन्नार्थमपि एक-वर्णत्वेन अभिन्नं रूपं यस्य तादृशशब्देन वाच्यत्वात् प्रतिपाद्यत्वात् । समान-३धर्मस्येति शेषः । सा प्रसिद्धा । समानोपमा मता शिष्टानामिति शेषः । तथा च

---

१ प्रतिद्वन्द्वि. क.

२ सन्दानोपमा. अ; सरूपोपमा. बपा.

**बालेवोद्यानमालेयं सालकाननशोभिनी ॥ २९ ॥**
**पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।**
**समानमपि सोत्सेकमिति निन्दोपमा स्मृता[1] ॥ ३० ॥**
**ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः[2] शंभुशिरोधृतः ।**

यत्र श्लिष्टशब्देन साधारणधर्मोपस्थितिः सा समानोपमा । उदाहरति—**बालेति** । इयमुद्यानमाला वनपङ्क्तिः । बालेव वधूरिव । सालकाननशोभिनी सालानां वृक्षाणां ६कानननं वनं तेन शोभिनी । वधूपक्षे अलकैः चूर्णकुन्तलैः सहितं सालकम् एवं यदाननं मुखं तेन शोभिनी । अत्र भिन्नयोरपि उपमानोपमेयधर्मयोः समान-शब्दवाच्यत्वात् साधारण्यम् । अत्र वृक्षकाननेति परिवृत्तौ न श्लेषः अतः ९शब्दश्लेषेयमुपमा ॥ २९ ॥

निन्दोपमां लक्षयति— **पद्ममिति** । पद्मं बहुरजः परागधूलिधूसरम् । चन्द्रश्च क्षयी क्षयिष्णुः । अर्थात् कृष्णपक्षे । तवाननं तु निर्मलत्वात् परागशून्यं ३सदा शोभापरिपूर्णत्वाच्च न क्षयिष्णु । अतः ताभ्यां पद्मचन्द्राभ्याम् । समानमपि तवाननं सोत्सेकं दोषशून्यत्वेन उत्कर्षशालि इति निन्दोपमा । उपमानस्य निन्दया साम्यस्य कीर्तनात् निन्दोपमा । अत्र केचित् रजःक्षयशब्दाभ्यां रजोगुणक्षयरोग-६रूपार्थान्तरं श्लेषेणाङ्गीकृत्य तदेव दोषत्वेन कल्पयन्ति । तथा ताभ्यामिति पञ्चम्यन्तं स्वीकृत्य तत् सोत्सेकमित्यनेन संबध्य सोत्सेकशब्दस्य अधिकम् इत्यर्थं दर्शयन्ति । अत्र साम्यमात्रपर्यवसायित्वात् तत्रैव कवेरभिनिवेशात् प्रतीय-९मानेपि भेदे तस्य प्राधान्याभावान्न व्यतिरेकः । प्राधान्येन भेदचमत्कृतौ एव तस्य निश्चितत्वात् ॥ ३० ॥

प्रशंसोपमां दर्शयति— **ब्रह्मण इति** । पद्मः कमलम् । वा पुंसि पद्मं नलिनम् । इत्यमरकोशात् पद्मशब्दस्य पुंस्त्वम् । पद्ममिति पाठे अप्रयुक्तत्वदोषोपि ३न । ब्रह्मणोपि जगत्स्रष्टुरपि । उद्भवः उत्पत्तिस्थानम् । तस्य अरविन्दनाभनाभ्य-रविन्दजातत्वादिति भावः । तथा चन्द्रः । शंभुशिरोधृतः शंकरस्य शशिखंड-

---

१ मता. अ.

२ पद्मं. ब.

तौ तुल्यौ त्वन्मुखेनेति[1] सा प्रशंसोपमोच्यते[2] ॥ ३१ ॥

चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।

स गुणो वास्तु दोषो वेत्याचिख्यासोपमां विदुः ॥ ३२ ॥

शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।

परस्परविरोधीति सा विरोधोपमा[3] मता ॥ ३३ ॥

मौलित्वादिति भावः । एतादृशौ महामहिमशालिनौ तौ । त्वन्मुखेन तुल्यौ इति ६विपर्यासोपमया मुखस्य गुणातिशयवर्णनात् इयं प्रशंसोपमा इत्युच्यते । अयमाशयः । पद्मचन्द्रौ तावन्महामहिमगुणशालिभ्यां कमलासनशशिशेखराभ्याम् आश्रितौ इति अनुपमगुणशालिनौ । तौ त्वन्मुखेनापि तुल्यौ इति अहो ९तेषां गुणराशिसंपत्तिः इति तौ अधिकगुणेनोपमानभूतेन मुखेन प्रशंसितौ । तेन च मुखस्य गुणातिशयः व्यक्तो भवति । इयं विपर्यासोपमानुप्राणिता प्रशंसोपमा ज्ञेया । अत्र प्रशंसायाः प्राधान्यात् तद्वैचित्र्यकुक्षिलीनं विपर्यासोपमा- १२वैचित्र्यम् । तेन न विपर्यासोपमेति ज्ञेयम् ॥ ३१ ॥

आचिख्यासोपमां व्याख्याति— **चन्द्रेणेति** । मे मनः चन्द्रेण त्वन्मुखं तुल्यम् इति आचिख्यासु विवक्षु वर्तते । स आख्यानाभिलाषः । गुणो वा दोषो वा अस्तु । ३इत्याचिख्यासोपमां विदुः । पण्डिताः इति शेषः । अत्र गुणो वा दोषो वास्तु इत्यनेन आख्यनाभिलाषस्य समुद्रेकः दर्शितो भवति । तेन च मुखस्य उपमेयस्य चारुतातिशयो व्यञ्जितो भवति । अत आचिख्यासया उपमेयचारुत्वपोषणादियमा- ६चिख्यासोपमेति भावः । केचित्तु गुणो वा दोषो वास्तु इत्यनेन हृद्गतभावप्रकटनया सारल्यद्योतनाच्चारुत्वातिशयः इति मन्यन्ते ॥ ३२ ॥

विरोधोपमां दर्शयति-- **शतपत्रमिति** । शतपत्रं कुशेशयम् । शरच्चन्द्रः शारदीयशर्वरीशः । त्वदाननं भवदीयाननम् । च एतत् त्रयम् । परस्परविरोधि ९अन्योन्यस्पर्धि । शतपत्रस्य विकासे दिवा चन्द्रस्य मालिन्यम् चन्द्रोदये रात्रौ शतपत्रस्य संकोचः इति ते परस्परविरुद्धे । तयोरुभयोः तवाननेन सह विरुद्धत्वं

---

१ ते मुखेनेति. अ. २ ° पमेष्यते. आ.

३ विरोधोपमोदिता. अ.

**न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।**
**कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥**
**मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।**
**तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥ ३५ ॥**

त्वन्मुखसौरभ्याह्लादकत्वादिगुणमत्सरित्वादिति ज्ञेयम् । अस्य विरोधस्य साम्य-
६पर्यवसायित्वादियं विरोधोपमा ॥ ३३ ॥

प्रतिषेधोपमां निर्दिशति— **न जात्विति** । इन्दोः ते मुखेन सह । न जातु न कदाचिदपि । प्रतिगर्जितुं प्रतिस्पर्धितुम् । शक्तिः अस्तीति भावः । उक्तमर्थं ३विशेषणाभ्यां संपादयति । कलङ्किनः कलङ्कदूषितस्य । तथा जडस्य शीतलस्य मूर्खस्येति च ध्वनिः । तथा च एतादृशस्य चन्द्रस्य निष्कलङ्किना अजडेन च ते मुखेन स्पर्धितुं का शक्तिरस्ति । अत्र सादृश्यप्रतिषेधेन उपमेयगुणस्योत्कर्षो ६वर्णितो भवति इति प्रतिषेधोपमा । पूर्वोक्तनिन्दोपमायां प्रतिषेधो नास्ति इति तस्या भेदः । नात्र परिकरशङ्का कर्तव्या । कविनानेन अगणितत्वात् । विशे-षणद्वयानुपादाने इदं— मही महावराहेण लोहितादुद्धृतोदधेः । इतिवन्नेयार्थदोष-९ग्रस्तं भवेत् । अतस्तद्दोषपरिहाराय विशेषणस्यावश्यकत्वं ज्ञेयम् । नवीनमते तु अपुष्टतादोषपरिहारार्थं तयोरावश्यकत्वं ज्ञेयम् । अपि चात्र औपम्यवर्णनस्यैव प्राधान्यात् प्रतिषेधोपमैव स्वीकार्या इत्यलम् ॥ ३४ ॥

चटूपमां वर्णयति —**मृगेक्षणाङ्कमिति** । मृगस्य ईक्षणेन सदृशम् ईक्ष-णम् मृगेक्षणं तदेव अङ्कं चिह्नं यस्य तन्मृगेक्षणाङ्कम् । अथवा मृगस्य ईक्षणे ३नयने मृगेक्षणे ते अङ्कं चिह्नं यस्य तन्मृगेक्षणाङ्कम् । मृगनयनसदृशनयन-शोभितमित्यर्थः । शशी चन्द्रः । मृगेणैव अङ्कितः भूषितः । तथापि वक्त्रं मृगस्य कयाचिदपि एकावयवक्रियया अथवा एकेनावयवेन युक्तम् । शशी तादृशावयव ६समुदायविशिष्टशरीरेण मृगेण युक्तः । अतस्तत्साधनसंपत्तिरधिका । एवं स्थितेपि । असौ शशी । सम एव वदनेन समान एव । एवशब्देनाधिक्यव्यवच्छेदः । नोत्कर्षीति एवकारव्यवच्छेद्यमेव स्फुटतयाभिहितम् । अयमाशयः । अधिकसाधनवता अधिको-९त्कर्षेण भाव्यम् । परं तादृशविशेषसाधनसंपत्तिमानपि शशी न मुखतो विशेष-

**न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।**
**इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा ॥ ३६ ॥**
**चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।**
**आत्मनैवाभवत् तुल्यमित्यसाधारणोपमा ॥ ३७ ॥**

शोभाशाली इति शशिनः समीकरणेन मुखस्य सौन्दर्यपरिपोषो दर्शितः । एतादृश-वर्णनशैली सुमधुरा इति चटूपमा । चटुः प्रियोक्तिः तत्परा उपमा औपम्यवर्णनम् । १२अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्या विकल्पनम् । इति कोशः । अत्रोत्कर्षकारणे सत्यपि नोत्कर्षः इति विशेषोक्तिः । तस्या लक्षणमग्रेः—

गुणजातिक्रियादीनां यत् तु वैकल्यदर्शनम् ।
१५ विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ( २· ३२३ )

इति ग्रन्थकृतैव दर्शितम् । विशेषोक्तिमूला एवेयं चटूपमा । अन्यथा सर्वत्रोपमायां चटूक्तिसंभवात् सर्वत्रेयमेव स्यात् इति प्रेमचन्द्रशर्माणः ॥ ३५ ॥

तत्त्वाख्यानोपमां दर्शयति—न **पद्ममिति** । इदं पद्मं न किंतु मुखमेव । इमौ भृङ्गौ न किंतु चक्षुषी एव । इत्येवं विधिनिषेधप्रकारेण । विस्पष्टसादृश्यात् ३सादृश्यस्य स्पष्टीकरणात् । सदृशे भ्रान्तिर्भवति । अत्र च भ्रान्तेरपनयनात् सा पूर्वमासीत् इति निष्पन्नम् । सा च सादृश्यमूला इति सादृश्यस्य प्रकटीकरणात् तत्त्वाख्यानोपमा इयं ज्ञेया । भ्रमनिरासाय भ्रमविषयस्य तत्त्वस्य यथार्थस्वरूपा-६विष्करणं तत्त्वाख्यानम् । तन्मूलमस्याः अतस्तत्त्वाख्यानोपमा । निर्णयोपमायां संशयपूर्वकं तत्त्वाख्यानम् । अत्र तु भ्रान्तिपूर्वकमित्युभयोर्भेदः ॥ ३६ ॥

असाधारणोपमामाह—**चन्द्रेति** । तव मुखं चन्द्रारविन्दयोः कान्तिं शोभाम् । अतिक्रम्य स्वकान्त्या विजित्य । आत्मनैव स्वेनैव तुल्यमभवत् । इति असाधारणो-३पमा । चन्द्रपद्मे एव मुखस्योपमानतया प्रसिद्धे । तयोरतिक्रमे तु अन्योपमानस्य विरहात् स्वस्मिन्नेव उपमानोपमेयभावः विश्रान्तः । तेन च औपम्यस्य असाधारणत्वं निष्पन्नम् । अत इयम् असाधारणोपमा । न च एकस्यैवो[1]पमानोपमेयत्वं कथमिति ६वाच्यम् । आहार्यभेदेन भिन्नत्वात् । आहार्यत्वं नाम बाधकालिकेच्छाजन्यं ज्ञानम् । अत्र बाधशब्देन बाधकं ज्ञानमपेक्ष्यते । तच्च मुखं चन्द्रः इत्यत्र मुखं चन्द्रो न

---

१ कस्यां. क.

**सर्वपद्मप्रभासारः[1] समाहृत[2] इव क्वचित् ।**
**त्वदाननं[3] विभातीति तामभूतोपमां विदुः ॥ ३८ ॥**
**चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।**
**परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥ ३९ ॥**

इति बाधज्ञानं तात्कालिकी या मुखे चन्द्रत्वज्ञानं मे जायतामिति इच्छा तज्जन्यं ९यत् ज्ञानं मुखं चन्द्रः इति तदाहार्यम् ॥ ३७ ॥

अभूतोपमामाह—**सर्वेति** । क्वचिदेकत्रस्थाने । विधात्रा समाहृतः संगृहीतः । सर्वपद्मप्रभासारः सर्वेषां पद्मानां प्रभायाः सारः कान्तिपुञ्जः । इव त्वदाननं ३विभाति । इति एवंप्रकारां तां प्रसिद्धाम् । अभूतोपमाम् उपमेयस्य वर्णनाय संभावनया कल्पितस्य उपमानस्य वस्तुतः अभूतत्वात् तादृशेन अभूतेन उपमानेन औपम्यस्य वर्णनमभूतोपमा इति समाख्यानिरूपणम् । नात्र इवशब्दः संभावनार्थकः । ६अपि तु साधर्म्यवाचकः । तेन समाहृत इत्यस्य संभावनया समाहरणेपि उत्प्रेक्षावाचकाभावात् केवलसंभावनाचमत्कृत्यपेक्षया तादृशसंभावनानिष्पन्नोपमानसादृश्यवर्णनचमत्कृतेः प्राधान्यादत्र उपमैव ज्ञेया । केचित्तु इवशब्दं समाहृतशब्देन ९संयुज्य संभावनायाः प्राधान्यादत्रोत्प्रेक्षां वदन्ति । प्रस्तुते अप्रस्तुतस्य धर्मिणः यत्र संभावना तत्रोत्प्रेक्षा । अत्र तु प्रस्तुते अप्रस्तुतधर्मस्य संभावना । तथा च प्रस्तुताप्रस्तुतयोः प्रतीतिः न तत्रोपमा इति प्राचामाशयं विवृण्वन्ति । परं १२पूर्वोक्तप्रक्रियया संभावनाया उत्थितिरेव नात्रेति सुधीभिर्विचारणीयम् । वस्तुतः अविद्यमानस्य केवलं कविप्रतिभया निष्पाद्यमानस्य धर्मिणः यत्र वर्णनं तत्राभूतोपमा । स्वयं विद्यमानस्य धर्मिणः यत्रान्यधर्मिणां संमेलनकल्पनया साम्यवैचित्र्य- १५वर्णनं तत्राद्भुतोपमा इत्युभयोर्भेदः ॥ ३८ ॥

असंभावितोपमामाह— **चन्द्रबिम्बादिति** । इतः एतस्मात् । वक्त्रात् वदनात् । परुषा कठोरा । वाक् । चन्द्रबिम्बात् विषमिव । चन्दनात् पावक इव । ३निःसरेदिति शेषः । अत्र उपमानभूताभ्यां चन्द्रचन्दनाभ्यां विषपावकनिःसरणस्येव वदनात् परुषवाङ्निःसरणस्य असंभावितत्वादसंभावितोपमा ॥ ३९ ॥

---

१ °सारं. अ. २ °हृतमिव. अ.

३ त्वधाननं. अ.

चन्दनोदकचन्द्रांशु[1]चन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥
चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥
पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।

बहूपमां दर्शयति—**चन्दनेति** । चन्दनोदकं मलयाङ्गरागः चन्द्रांशुः इन्दुकिरणं चन्द्रकान्तः मणिविशेषः एतदादयः मृणालकदलीपत्रमुक्ताहारादयः ३ते इव शीतलः सुखकरः । उपमानानि सामान्यवचनैः इति कर्मधारयः । तव प्रकृतनायिकायाः । स्पर्शः । अस्ति इति शेषः । इति अतिशयम् उपमानान्तरेषु प्रसिद्धशैत्यादिगुणेभ्यः प्रस्तुते विशेषम् । बोधयन्ती प्रकटीकुर्वती । बहूपमा ६एतन्नाम्ना व्यवहृता भवति । एकस्योपमेयस्य बहूपमाननिबन्धनेन साम्योत्कर्ष-विधायित्री इति बहूपमेत्यर्थः । यथा बहूनां मधुररसानां संमेलने चारुत्वातिशयः तथा बहूपमानदर्शनेन उपमेयधर्मस्य चारुत्वातिशयः इति केवलोपमाया अस्या ९भेदः । अर्वाचीनास्तु एनां मालोपमामाहुः ॥ ४० ॥

विक्रियोपमामाह—**चन्द्रबिम्बादिति** । हे तन्वङ्गि । तव वदनम् । चन्द्र-बिम्बादुत्कीर्णमिव उट्टङ्कितमिव । पद्मगर्भात् पद्ममध्यात् । उद्धृतमिव । इत्यसौ ३विक्रियोपमा । अत्रोपमानभूतौ इन्दुबिम्बपद्मगर्भौ प्रकृती वदनं विकृतिः । प्रकृति-विकृत्योः साम्यमस्ति इति विक्रियया उपमानविकारभूतोपमेयवर्णनेन उपमा । अतो विक्रियोपमा । तथा चोक्तम् अग्निपुराणे— उपमानाविकारेण तुलना विक्रियोपमा । ६(३४४.१५) इति । अन्यत्रापि—

उपमेयस्य यत्र स्यादुपमानविकारता ।
प्रकृतेर्विकृतेः साम्यात् तामाहुर्विक्रियोपमाम् ॥ इति ।

९अत्रापि पूर्ववदुपमानवैचित्र्यविलीनमुत्प्रेक्षासाम्यमतो नोत्प्रेक्षा इति ज्ञेयम् ॥ ४१ ॥

मालोपमामाह—**पूष्ण्यातप इति** । आतप इव प्रकाशो यथा पूष्णि सूर्ये । पूषा यथा अह्नि दिवसे । वासरः दिवसः यथा व्योम्नि आकाशे । तथा विक्रमः

---

१ °शीतांशु°. अ.

**विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥ ४२ ॥**
**वाक्यार्थेनैव वाक्यार्थः कोपि यद्युपमीयते ।**
**एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥**

३पराक्रमः । त्वयि लक्ष्मीम् । अधात् निहितवान् । इति एवंप्रकारा । मालोपमा मालायां यथा ग्रथितस्य एकस्य कुसुमस्य अपरेण तस्यापि अपरेण इति परस्थितस्य कुसुमस्य संश्लेषो भवति तथा पूर्वपूर्ववाक्यस्थिताधिकरणपदार्थस्योत्तरोत्तरवाक्यस्थोपमानत्व-६निवेशनेन संबन्धात् इयं मालोपमा । मता आलंकारिकसंमता । अयमेव रचना-वैचित्र्यविशेषः बहूपमातः अस्या भेदकः । बहूपमायां केवलमुपमाबाहुल्यम् । अस्यां तु पूर्ववाक्यस्थपदस्य उत्तरत्र संबन्धः एवमुपमाबाहुल्यम् । नव्यास्तु प्रकारद्वयेपि ९मालोपमामेव मन्यन्ते । तत् रचनावैचित्र्यविशेषाज्ञानविजृम्भितमिति प्रेमचन्द्र-शर्माणः ॥ ४२ ॥

वाक्यार्थोपमां लक्षयति—**वाक्यार्थेनेति** । वाक्यार्थेनैव वाक्यार्थो विशे-षणविशेष्यतामापन्न उद्देश्यविधेयभावप्रधान एकतिङ्घटितः पदसमूहः तेन । एव-३कारेण पदार्थोपमानिवृत्तिः । कोपि वाक्यार्थः तादृश एव कश्चित् प्रस्तुतवाक्यार्थः । यदि उपमीयते तर्हि सा वाक्यार्थोपमा भवति । वाक्यार्थयोः उपमानोपमेयभावेन साम्यस्य वर्णनात् सा वाक्यार्थोपमा इति व्यवह्रियते । सा च एकानेकेवशब्दत्वात् ६एकानेकेवशब्दोपादानात् । द्विधा द्विप्रकारा । अयमाशयः । यदा वाक्यस्थितप्रति-पदार्थसाम्यावबोधनेच्छा तदा प्रत्युपमानं पुरतः इवशब्दप्रयोगस्य आवश्यकत्वात् अनेकेवशब्दप्रयोगः । यदा तु प्रधानपदार्थान्वयबोधोत्तरं पश्चात् पर्यालोचनया ९अवान्तरपदार्थानां साम्यं प्रतीतिपदवीमारोहति तदा प्रधानोपमानपुरतः एव इवशब्दप्रयोगेण एकेनैव सकलार्थसिद्धिरिति एकेवशब्दप्रयोगः । एतादृशसाङ्गो-पमायां प्रायः कवय इवशब्दं प्रयुञ्जते इति लक्षणे इवशब्दोपादानम् । अत्र १२अप्रस्तुतेन अवयवविशिष्टावयविना प्रस्तुतस्य अवयवविशिष्टावयविनः साम्यवर्णन-मपेक्षितं भवति । अयमेव वाक्यार्थोपमायां वैचित्र्यातिशयः । अन्यथा—यथा व्योम्नि विधुर्भाति तथा भूम्यां मुखं तव । इत्यत्रापि वाक्यार्थोपमा स्यात् । भवतु १५नाम सा किं नश्छिन्नमिति चेन्न । पदार्थोपमाया अस्या वैचित्र्यविशेषाभावात् । वैचित्र्यविशेषस्यैव अलंकारान्तरविधायकत्वात् ॥ ४३ ॥

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥
नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायं पायमरम्यत ॥ ४५ ॥
वस्तु किंचिदुपन्यस्य न्यसनात्तत्सधर्मणः ।

एकेवशब्दघटितां वाक्यार्थोपमामुदाहरति—**त्वदाननमिति** । अधीरे चकितचञ्चले अक्षिणी नयने यस्मिन् तत् अधीराक्षम् । आविः आविर्भवन्त्यः ३दशनानां रदानां दीधितयः किरणानि यस्मिन् तत् आविर्दशनदीधिति । एतादृशं तवाननम् । भ्रमन्तौ संचरन्तौ भृङ्गौ यत्र तत् भ्रमद्भृङ्गम् । आ ईषत् लक्ष्याः केसराः किञ्जल्काः यत्र तादृशम् । पङ्कजमिव । भाति । अत्र सावयवस्य आननस्य ६सावयवेन पद्मेन साम्यम् उपमानोपमेयात्मकवाक्यद्वयेन वर्णितम् । एवं वाक्यार्थगतत्वात् वाक्योपमेयम् । अत्र विशिष्टयोरेवोपमानोपमेयत्वप्रतीतिरिष्टा इति एकेवशब्दप्रयोगः । विशिष्टयोः पद्ममुखयोः साम्यबोधानन्तरं पर्यालोचनया अवयवानां ९विशेषणानां साम्यप्रतीतिः बुद्ध्यारूढा भवति । अत्र उपमानोत्तरतः इव शब्दप्रयोगविरहात् उपमानोत्तरत एव इवशब्दः प्रयोक्तव्य इति नियमं प्राचीना न मन्वते इति भाति ॥ ४४ ॥

अनेकेवशब्दप्रयोगघटितां वाक्योपमां दर्शयति—**नलिन्या इति** । नलिन्याः नलिनानि कमलानि सन्ति अस्याः इति नलिनी पद्मलता तस्या इव । तन्वङ्ग्याः ३पद्ममिव आननम् । मधुव्रतेन भ्रमरेण इव । मया । पायं पायं पीत्वा पीत्वा । अरम्यत । भावे लङ् । मधुव्रतेनेव मया इति प्रधानोपमानोपमेयौ । नलिनीतन्वङ्गीपद्ममुखादयः अङ्गभूताः । तत्र प्रत्युपमानम् इवशब्दप्रयोगः । तेन च अङ्गाङ्गिनोः ६साम्यं शाब्दबोधविषयीभवत् चमत्कारातिशयं जनयति । अत्र साम्यबोधः अङ्गवाक्यानां शाब्दः । पूर्वोदाहरणे तु अङ्गिनः शाब्दः इतरेषां तु उन्नयनोद्भवः इति भेदः ॥ ४५ ॥

प्रतिवस्तूपमालक्षणं विधत्ते —**वस्तु किंचिदिति** । किंचिदपि किमपि । प्रकृतं वस्तु । उपन्यस्य प्रथमं प्रतिपाद्य । तत्सधर्मणः तस्य प्रकृतस्य सधर्मणः

**साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥ ४६ ॥**

**नैकोपि त्वादृशोद्यापि जायमानेषु राजसु ।**

**ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ ४७ ॥**

३समानधर्मस्य अप्रस्तुतस्य । न्यसनात् प्रस्तुतवस्तुसमर्थनाय वाक्यान्तरेण प्रतिपादनात् । साम्यप्रतीतिः इवादिशब्दप्रयोगाभावेपि व्यञ्जनया सादृश्यावबोधः । भवतीति प्रतिवस्तु प्रतिवाक्यार्थम् उपमा समानधर्मो यस्यां सा प्रतिवस्तूपमा ६भवति । सधर्मणः इतिपदेन अप्रस्तुतवाक्येपि धर्मोपादनमवश्यमिति सूचितम् । तदुक्तं काव्यप्रकाशे–– प्रतिवस्तूपमा तु सा। सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः । (७६९ पत्रे) इति । वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता । इत्यप्पय्य-९दीक्षितः । व्याख्याति च यत्रोपमानोपमेयवाक्ययोरेकः समानो धर्मः पृथक् निर्दिश्यते सा प्रतिवस्तूपमा इति । पृथङ्निर्देशनं कथितपदस्य दुष्टत्वाभिधानात् भिन्नवाचकेन ज्ञेयम् । साम्यप्रतीतिरस्तीतीत्यनेन उपमाजीवातुसाम्यस्यात्र प्राधान्येन १२भानात् उपमाविशेषे एव अस्या अन्तर्भाव उचितः । वैचित्र्यान्तराभावात् नालंकारान्तरं युक्तम् इति ध्वन्यते । अनेन प्रतिवस्तूपमायां अलंकारान्तरविधानम् न क्षोदक्षममिति बोद्धव्यम् । यथा इत्युदाहरणोपन्यासाय ॥ ४६ ॥

प्रतिवस्तूपमामुदाहरति—**नैकोपीति** । जायमानेषु उत्पाद्यमानेषु । इदमुपलक्षणं जातेष्वपि । तेन अद्यापीतिवचनं सुसंगतं भवति । तथा च जातेषु ३जायमानेषु राजसु अद्यापि अद्ययावत्कालपर्यन्तम् । एकोपि त्वादृशो नास्ति । ननु इति निश्चये । पारिजातस्य राहोः शिर इतिवत् भेदविवक्षया षष्ठी । पारिजातवृक्षस्य द्वितीयो नास्त्येव । एक एव समुल्लसतीत्यर्थः । पारिजातस्य द्वितीयो ६पादपो नास्ति इति वान्वयः । अत्र सदृशो नास्ति द्वितीयो नास्ति इति एक एव समानो धर्मः शब्दान्तरेण वाक्यद्वये निर्दिष्ट इति प्रतिवस्तूपमा । साम्यं चात्र गम्यम् । इयं वैधर्म्येणापि भवति यथा––

९ विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।

न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥

इति । यथा वा––

१२ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।

**अधिकेन समीकृत्य[1] हीनमेकक्रियाविधौ ।**
**यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥ ४८ ॥**
**दिवो जागर्ति रक्षायै पुलोमारिर्भुवो[2] भवान् ।**

न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥

इति ॥ ४७ ॥

इदानीं तुल्ययोगोपमां लक्षयति—**अधिकेनेति** । एकक्रियाविधौ एक-जातीयक्रियाया अनुष्ठाने । हीनं न्यूनगुणं वस्तु । अधिकेन गुणाधिकवस्तुना । ३समीकृत्य समानं विधाय । यत् सप्तम्यर्थकमव्ययमेतत् । यत्र चमत्कृतौ । ब्रुवन्ति वैचित्र्येण कथयन्ति । सेयं तुल्ययोगोपमा । हीनाधिकयोः तुल्यत्वेन यो योगः संबन्धः तेन संबन्धेन औपम्यं यत्र सा तुल्ययोगोपमा इति स्मृता । तथा च एकजातीय-६क्रियया प्रस्तुताप्रस्तुतयोः हीनाधिकयोः साम्यकीर्तनं तुल्ययोगोपमा इति फलितम् । प्रकृतानामप्रकृतानां वा एकधर्मसंबन्धरूपा अर्वाचीनैरुक्ता तुल्य-योगिता तु भिन्नैव स्वरूपभेदात् । तथा अग्रे वक्ष्यमाणा—

९ विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।
कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ( २. २३० )

इयमपि भिन्नैव । अस्यां तुल्ययोगितायां सर्वस्य समकक्षतया वर्णनस्यापेक्षित-१२तया न तत्रोपमानोपमेयभावस्यापेक्षा । तेन च न साम्यं वाच्यं व्यङ्ग्यं वात्र समुद्भवति । पर्यालोचनया पर्यवसाने तत् यथाकथंचित् प्रतीतिपदवीमारोहति । तुल्ययोगोपमायां तु प्रकृताप्रकृतत्वेनोपमानोपमेयभावस्य विवक्षितत्वादत्रसाम्यं १५वाच्यमर्यादया व्यङ्ग्यमर्यादया वा शब्दादेव प्रतीतं भवति इत्युभयोर्भेदः । तथैव च स्तुतिनिन्दार्थं तुल्ययोगिताप्रवृत्तिः केवलसमत्वापादनाय च तुल्ययोगोपमा-प्रवृत्तिः इति प्रवृत्तिनिमित्तभेदेनापि उभयोर्भेदः इति बोद्धव्यम् । यथेत्युदाहरणो-१८पन्यासाय ॥ ४८ ॥

तुल्ययोगोपमामुदाहरति—**दिवो जागर्तीति** । पुलोमारिः इन्द्रः ।

---

१ समाहृत्य. अ.

२ भवान् भुवः. कप.

**असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥ ४९ ॥**
**कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।**
**राजन्ननुकरोषीति सैषा हेतूपमा मता ॥ ५० ॥**
**न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।**

इन्द्रेण श्वशुरः पुलोमा निहतः । तदुक्तं हरिवंशे—

३ कृत्वा संबन्धकं चापि विश्वसेच्छत्रुणा न हि ।
पुलोमानं जघानाजौ जामाता सन् शतक्रतुः ॥ इति ॥

दिवः स्वर्गस्य । रक्षायै जागर्ति अवहितो भवति । भवान् भुवः रक्षायै जागर्ति । ६तेन पुलोमारिणा । असुरा हन्यन्ते । त्वया सावलेपाः उद्धताः । नृपाः हन्यन्ते । अत्र हीनस्य प्रस्तुतस्य राज्ञः गुणाधिकेन महेन्द्रेण सह एकजातीयक्रियाविधानेन तुल्यताप्रतिपादनात् तुल्ययोगोपमा । अत्र साधर्म्यं व्यङ्ग्यम् ॥ ४९ ॥

हेतूपमां उदाहरणेन दर्शयति—**कान्त्येति** । निगदेनैवार्थो भवति । अत्र चन्द्रादिभिः समं नृपगतसादृश्यस्य कान्त्यादयो हेतवो निर्दिष्टाः । अतो ३हेतूपमा ॥ ५० ॥

एवं विविधभेदसहितामुपमां विस्तरतो निरूप्य प्रसङ्गतस्तद्गतान् दोषान् विवक्षुरादौ प्राचीनोक्तं निरपवादं दोषस्वरूपं खण्डयति—**नेति** । भामहो हि ३उपमाया इत्थं दोषानाह ।

हीनतासंभवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ॥
६ त एते उपमादोषाः सप्त मेधाविनोदिताः । (२. ३९–४०) इति ।

अत्र विपर्ययः असादृश्यम् असंभवश्चेति त्रयो दोषाः यथाकथंचित् सादृश्यं यत्रोद्भूतं प्रतीयते इत्युपमालक्षणे सादृश्यस्य उद्भूतविशेषणत्वेनैव निरस्ता भवन्तीति न ९विचारणीयाः । उर्वरितदोषचतुष्टयस्य उद्वेगतानुद्वेगते विमृश्येते । यत्र धीमतां सहृदयानाम् । उद्वेगः प्रतीतिविघातजन्यसंत्रासः । न भवति । तादृशस्थले भिन्ने उपमानो-

---

१ नृपास्त्वया. अ. २ स्मृता. अ.

उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥
स्त्रीव गच्छति षण्ढोयं[1] वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोयं[2] मे विद्या धनमिवार्जिता ॥ ५२ ॥
भवानिव महीपाल देवराजो विराजते ।

पमेयपदयोः पृथग्भूते । लिङ्गवचने । तथा हीनाधिकता उपमानस्य न्यूनत्वम् अधि-
१२कत्वं च । उपमादूषणाय नालम् समर्थानि न भवन्ति । एवं च धीमतामुद्वेग
एव दोषस्य कारणम् । तदुक्तमाग्नेये—विभक्तिसंख्यालिङ्गानां यत्रोद्वेगो हि
धीमताम् । (३४७.२९) इति । सचोद्वेगः विशेषणविशेष्यादिपदानां परस्परसंबन्ध-
१५क्लेशरूपो विगीतवर्णने समुद्भवति । यदि केनापि विशेषकारणेन स न प्रादुर्भवेत्
तर्हि तत्र नास्ति उपमादीनां दुष्टत्वम् । प्रायः भिन्नलिङ्गवचनयोरुपमानोपमेययोः
एकतरलिङ्गवचनानुगतेन समानधर्मेण तदन्येन भिन्नलिङ्गवचनविशिष्टेन संबन्धो
१८दुष्करो भवति । अत एतादृशी उपमा उद्वेगकरी । तथा उपमानस्य हीनतायां
उपमेयस्यानुत्कर्षात् अधिकतायां च तत्सापेक्षतया उपमेयस्यात्यन्तनिकृष्टत्वेन
वैरस्येनोद्वेगो भवति । एतच्चाग्रे उदाहरणे स्फुटीभविष्यति ॥ ५१ ॥

तत्र लिङ्गवचनभेदस्य निर्दोषत्वं दर्शयति—**स्त्रीवेति** । अत्र षण्ढः स्त्रीव
गच्छति । एषा स्त्री पुमानिव वक्ति । इति वाक्यद्वये गमनवचनक्रियाया एव साधारण-
३धर्मत्वात् तस्य च भिन्नलिङ्गयोरुपमानोपमेययोरक्लेशेनैवान्वयान्न भिन्नलिङ्गदोषः ।
अयं जनः । मे प्राणा इव प्रियः । तथा मया विद्या धनमिव अर्जिता संपादिता ।
इत्यत्र च प्राणशब्दः नित्यबहुवचनान्तः धनशब्दश्च नित्यनपुंसकः । नानयोः
६पर्यायशब्दाः प्रकृतोचितलिङ्गवचनाः । अतोगतिकगत्या यथा प्राणाः प्रियास्तथायं
मे प्रियः यथा च धनमर्जितं तथा विद्या अर्जिता इति लिङ्गविपरिणामेन अन्वयः
संपाद्य एव । अत्र च नोद्वेगः सहृदयानाम् अन्यगतेरभावात् । अतोत्र नोपमादोषः ।
९अनयैव दिशा चन्द्र इव मुखम् सुधावदधरः इत्यादिस्थले प्रतीतिमान्थर्याभावान्नो-
पमा दुष्टा इति ज्ञेयम् ॥ ५२ ॥

उपमानस्य हीनाधिकत्वयोर्निर्दोषतां दर्शयति—**भवानिति** । हे महीपाल

१ षण्डोयं. डप. २ प्रियेयं. अ.

**अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥ ५३ ॥**
**इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् ।**
**अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥ ५४ ॥**

राजन् । भवान् इव । देवराजः महेन्द्रः । विराजते । अत्र नृपतेर्मर्त्यधर्मत्वात् प्रकृत-
३देवतास्वरूपाद्देवराजादपकृष्टत्वं स्पष्टमेव । तथापि राज्ञां लोकपालांशसंभवत्वेन केषां-
चिद्देवराजसदृशपराक्रमशालित्वेन च नेदं वैरस्यमावहति । राज्ञां लोकपालांशत्वमाह
मनुः—अष्टानां लोकपालानां वपुर्धारयते नृपः । ( ५.९६ ) इति । अन्यत्रापि—

६ इन्द्रात् प्रभुत्वं तपनात् प्रतापं क्रोधं यमाद्वैश्रवणाच्च वित्तम् ।
आह्लादकत्वं च निशाधिनाथादादाय राज्ञः क्रियते शरीरम् ॥ इति ।

इयं च विपर्यासोपमा । अस्यां च पर्यायेणोपमेयस्यैव वर्णनं भवति । तेन चात्र न
९पर्यवसाने हीनतादोषः समुद्भवतीति अरुचिं प्रदर्श्य केचित्—

उत्सङ्गितकुरङ्गोयमृक्षमण्डलमध्यगः ।
विधुर्व्याघ्र इवाभाति हन्तुं विरहदुर्बलान् ॥

१२इति पद्यमुदाहरन्ति । अत्र श्लिष्टविशेषणाभ्यां प्रतीयमानं निकृष्टस्यापि व्याघ्र-
स्योपमानत्वं न दोषाय भवति । प्रत्युत विरहिनिषूदनक्रौर्यसूचनाय तदतीवोप-
युक्तमिति कथयन्ति । तेजसा नृपः अंशुमतः सूर्यस्य । कक्षां साम्यम् ।—

१५ पापे कक्षा त्विभरज्ज्वां काञ्च्यां हेमप्रकोष्ठके ।
भित्तौ साम्ये रथभागेन्तरीये पश्चिमाचले ॥

इति हेमचन्द्रः । आरोढुं आक्रमितुम् । अलं पर्याप्तः । अत्र जात्याधिकोंशुमान्
१८उपमानीकृतः । परं पूर्वोक्तदिशा नृपस्य तदंशत्वान्नोद्वेगकरं तत् इति ज्ञेयम् ॥५३॥

दोषस्य दोषाभावप्रस्तावमुपसंहरति—**इतीति** । इत्येवमादौ एतत्प्रभृतौ ।
वर्णनं जातुचित् कदाचिदपि । सौभाग्यं अनुद्वेगेन वैचित्र्यसौन्दर्यम् । न जहाति
३न त्यजति । तर्हि किं सर्वथा दोषा न सन्त्येव इति चेन्न । क्वचित् प्रयोगे वाग्विदां
सहृदयानाम् । उद्वेगः प्रतीतिमान्थर्येण वैचित्र्यव्याघातेन वा संत्रासः । अस्त्येव ।
यथा इति उदाहरणप्रस्तावाय ॥ ५४ ॥

---

१ कक्ष्याम्. क. २ अस्ति च. क. ३ तद्विदां क

हंसीव धवलश्चन्द्रः सरांसीवामलं नभः।
भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥
ईदृशं[1] वर्ज्यते सद्भिः कारणं तत्र[2] चिन्त्यताम्।
गुणदोष[3]विचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥

दुष्टोपमामुदाहरति—**हंसीवेति**। चन्द्रः हंसीव धवलः। नभः सरांसीव अमलम्। भटः वीरः। श्वा इव सारमेय इव। स्वामिभक्तः भर्तृभक्तः। खद्योतः ३भानुवत् भाति इति। अत्र प्रथमोपमायां हंसीव चन्द्र इति लिङ्गभेदः। तेन धवलशब्दस्योभयत्र संबन्धे लिङ्गविपरिणामादिक्लेशः। द्वितीयोपमायाम् सरांसीव नभ इत्यत्र वचनभेदः। तेन अमलशब्दस्यान्वयानुपपत्तौ पूर्ववदेव वचनविप-६रिणामः विधेयः। तृतीयोपमायां भटः श्वेव इत्यत्र शुनः अत्यन्तापकृष्टजाति-त्वात् सहृदयानां तत्सादृश्येनोद्वेगो भवति इति जातिन्यूनता। चतुर्थोपमायां खद्योतो भानुवदित्यत्र खद्योतसूर्ययोर्महदन्तरेण तत्सादृश्यवर्णनं वैरस्याय भवति। ९इति अधिकतादोषः ॥ ५५ ॥

दोषविवेचनमुपसंहरति—**ईदृशमिति**। सद्भिः काव्यशास्त्रनिष्णातैः। ईदृशम् वर्ज्यते। तत्र कारणं प्रतीतिमान्थर्यवैरस्योत्पादनादिकं चिन्त्यताम् स्वयमेवोह्यताम्। ३स्पष्टत्वात् ग्रन्थविस्तारभिया मया न सर्वं तन्निरूप्यते। एतेन मया दोषनिरीक्षणस्य पद्धतिर्दर्शिता। अनयान्येपि दोषा विपश्चिद्भिर्ज्ञेया इति सूचयन् स्वग्रन्थस्य न्यूनतां परिहरतीति ज्ञेयम्। अत्र मुद्रितपुस्तकेषु गुणदोषविचाराय स्वयमेव मनीषिभिः। ६इत्यर्धमधिकं दृश्यते। अर्थस्तु स्पष्ट एव। प्राचीनपुस्तकेषु तददर्शनात् पुनरुक्त-प्रायत्वाच्च वयं तत् प्रक्षिप्तमिति शङ्कामहे। अस्मिन् दोषविचारे भामहवामन-भोजराजानां लक्षणोदाहरणानि व्युत्पादकानीति दर्शयामः। तत्र वामनः—९हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासंभवास्तद्दोषाः। तत्र जातिप्रमाणधर्मन्यून-तोपमानस्य हीनत्वम्। तत्र जातिन्यूनत्वरूपं हीनत्वं यथा—चाण्डालैरिव युष्माभिः साहसं परमं कृतम्। प्रमाणन्यूनत्वं यथा— वह्निस्फुलिङ्ग इव भानुरयं १२चकास्ति। उपमेयादुपमानस्य धर्मन्यूनत्वं यथा—

---

१ ईदृशो. अ. २ त्वत्र. अ.

३ इदं श्लोकार्धं नास्ति अ पुस्तके.

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥

१५ अत्र मौञ्जीप्रतिवस्तु तडिन्नास्ति इत्युपमानहीनत्वम् । तत्र जात्याधिक्यं यथा—विशन्तु विष्टयः शीघ्रं रुद्रा इव महोजसः इति । विष्टयः कर्मकराः । प्रमाणाधिक्यं यथा—

१८ पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ इति ।

धर्माधिक्यं यथा—

२१ सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत ।
सवाडवाग्निः सावर्तः स्रोतसामिव नायकः ॥

( ४.२.८ इत्यादि ) इति ।

२४ अत्र सवाडवाग्निरित्यस्य प्रतिवस्तुनः उपमेये अभावाद्धर्माधिक्यमिति ज्ञेयम् इति । उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः । यथा—सैन्यानि नद्य इव जग्मुरनर्गलानि इति । अत्र अरुचिबीजं तु अस्माभिः पूर्वं दर्शितमनुसंधेयम् । वचनभेदो यथा—
२७ पश्यामि लोचने तस्याः पुष्पं मधुलिहो यथा । इति । अप्रतीतगुणसादृश्यमसादृश्यम् । यथा—ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् । इति । काव्यस्य शशिना सह यत् सादृश्यं तदप्रतीतैरेव गुणैः प्रतीतैर्गुणैर्नास्ति तदिति भावः । अनुपपत्तिरसंभवः
३० यथा—

चकास्ति वदनस्यान्तः स्मितच्छायाविकासिनः ।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥ इति ।

३३ अत्र चन्द्रिकायामरविन्दस्योन्निद्रत्वं सृष्टिक्रमविरुद्धमित्यनुपपत्तिः । भोजराजस्तु उपमायाः भिन्नलिङ्गन्यूनाधिकत्वरूपदोषम् वाक्यदोषेषु परिगणयति । लक्षणपूर्वकमेवमुदाहरति च । यथा—

३६ यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गं तदुच्यते ।
भवेत् तद्भिन्नवचनं यद्भिन्नवचनोपमम् ॥ (१ २५ इत्यादि) इति ।

तत्र भिन्नलिङ्गस्योदाहरणं यथा—

३९ वापीव विमलं व्योम हंसीव धवलः शशी ।
शशिलेखेव हंसोयं हंसालिरिव ते यशः ॥ इति ।

भिन्नवचनस्य यथा—

४२ सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसा हंसीव धवला दिशः ॥ इति ।

न्यूनोपममिह न्यूनमुपमानविशेषणैः । यथा—

४५ संहतचक्रवाकयुगा विकसितकमला मृणालसंछन्ना ।
वापी वधूरिव रोचनाविलिप्तस्तनी सुखयति ॥ इति ।

अत्र नेत्रबाहूपमापदानां वधूविशेषणत्वेनानुक्तत्वादिदं न्यूनोपमम् । अधिकं यत्
४८ पुनस्तैः स्यात् तमाहुराधिकोपमम् । यथा—

अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूः ।
कुन्दलतेव समुत्फुल्लगुच्छपरिणीयमानभ्रमरगणः ॥ इति ।

५१ अत्र भ्रमरगणस्योपमानविशेषणस्याधिक्यादाधिकोपमम् । वाक्यार्थदोषेपि पुनः—

हीनोपमं भवेच्चान्यदाधिकोपममेव च ।
असदृक्षोपमं चान्यदप्रसिद्धोपमं तथा ॥ ( १. ५१ इत्यादि )

५४ इति चतुर उपमादोषान् परिगणयति । उदाहरति च लक्षणपूर्वकम् । यथा—हीनं
यत्रोपमानं स्यात् तत्तु हीनोपमं स्मृतम् । यथा—

क्वचिदग्रे प्रसरता क्वचिदाप्लुत्य निघ्नता ।
५७ शुनेव सारङ्गकुलं त्वया भिन्नं द्विषत्कुलम् ॥ इति ।

तदेव यस्मिन्नधिकं तद्भवेदधिकोपमम् । यथा—

अयं पद्मासनासीनश्चक्रवाको विराजते ।
६० युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥ इति ।

यत्त्वतुल्योपमानं तद्वदन्त्यसदृशोपमम् । यथा—

नमत हरं रोषानलनिर्दग्धमुग्धमन्मथशरीरम् ।
६३ विस्तृतनितम्बनिर्गतगङ्गास्रोतसमिव हिमवन्तम् ॥ इति ।

अत्र कोपानलनिर्दग्धमुग्धमन्मथशरीरस्य हरस्य नितम्बनिर्गतस्रोतसा हिमवता सह असादृश्यादिदमसदृशोपमम् । अप्रसिद्धोपमानं यत् अप्रसिद्धोपमं हि तत् ।
६६यथा--

कुमुदमिव मुखं तस्या गौरिव महिषः शशीव काव्यमिदम् ।
शरदिव विभाति तरुणी विकसितपुलकोत्करा सेयम् । इति ।

६९अत्र कुमुदमुखयोर्गोमहिषयोः काव्यशशिनोः प्रतीयमाने शरत्तरुण्योश्च विधीयमाने सादृश्ये उपमानोपमेयस्याप्रसिद्धत्वादप्रसिद्धोपमामिदम् । तत्र वाक्यगतोपमादोषस्यापवादमाह---

७२ यद्भिन्नलिङ्गमित्युक्तं विभिन्नवचनं च यत् ।
उपमादूषणं तन्न यत्रोद्वेगो न धीमताम् ॥ (१. १२० इत्यादि)

यथा---

७५ अन्यदा भूषणं पुंसः शमो लज्जेव योषिताम् ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

अत्र पुंसो योषित इव शमो लज्जेव पराक्रमो वैयात्यमिव इति लिङ्गभेदः । ७८परिभवे सुरतेष्विव इत्यत्र लिङ्गवचनभेदः । स चैषामेव परस्परमुपमानोपमेयभावविवक्षायां पर्यायान्तराभावादन्यथाकर्तुं न शक्यते इति सहृदयानुद्वेजकत्वान्न दुष्यति इति दोषस्यापि गुणत्वम् । तदिदं द्वयोरप्येकमुदाहरणम् । भिन्नलिङ्ग-८१स्यैव यथा---

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

८४अत्र पूर्ववदेव पर्यायान्तराभावात् स लोहकारभस्त्रेव इति लिङ्गभेदस्य न दोषः । भिन्नवचनस्यैव यथा---

प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
८७ मुक्तात्मानः शिवं नेमिरन्येपि ददतां जिनाः ॥

अत्र नेमिरन्येपि इति वचनभेददोषेपि ददताम् इति क्रियापदादेर्वचनश्लेषमाहात्म्याद्गुणत्वम् ।

९०

यत्रोपमानधर्माः स्युर्नोपमेयेन संमिताः ।
तद्धीनोपममित्याहुस्तत् प्रसिद्धौ न दुष्यति ॥

यथा—

९३

स मारुताकम्पितपीतवासा बिभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवाबभासे ॥

अत्र सेन्द्रायुध इति कार्मुकस्योपादानं वासःशङ्खयोस्त्वनुपादानादूनोपमत्वम् । तत्रे-
९६न्दुविद्युतोरतिप्रसिद्धत्वाददोषत्वम् । यदाह—

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्तिकृतिभिरुपमानं प्रयुज्यते ॥

९९

अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमद्युति ।
यत् किंचित् कान्तिसाम्यात् तु शशिनैवोपमीयते ॥
क्रमेणानेन कृतिभिरेष्टव्यमधिकोपमम् ।
विशेषस्तूपमेयाङ्गमनुमानात् प्रतीयते ॥ इति ।

१०२

यथा—

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान् निशायां संसृज्यमानः शशिनेव मेघः ॥

१०५

अत्र शशिनो ग्रहणादधिकोपमत्वेपि शङ्खचक्रगदाधरो विष्णुः इति प्रसिद्ध्या उपमेये शङ्खोनुमेयो भवति । अतोत्र न दोषः । एवं वाक्यदोषापवादं उक्त्वा
१०८वाक्यार्थदोषापवादमाह—

यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते ।
ज्ञेयं तदधिकौपम्यमस्यापि क्वाप्यदोषता ।

१११यथा—

कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।
राजन्ननुकरोषि त्वं सौभाग्येनापि मन्मथम् ॥

११४अत्र अधिकौपम्येपि राज्ञो लोकपालांशत्वेन शिष्टैरादृतत्वाद्गुणत्वम् ।

उपमानस्य वैषम्याद्भवेदसदृशोपमम् ।
तस्याभ्यनुज्ञामिच्छन्ति व्यतिरेकोपमादिषु ।

११७यथा—

प्रहितः प्रधनाय माधवानहमाकारयितुं महीभृता ।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥

१२०मलिम्लुचा इति उपमानस्य असदृशत्वेपि व्यतिरेकोपपादकत्वाद्गुणत्वम् ।

यस्योपमानं लोकेषु न प्रसिद्धं तदिष्यते ।
अप्रसिद्धोपमं नाम तत् क्वचिन्नैव दुष्यति ॥

१२३यथा —

उद्गर्भहूणरमणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ।

१२६अस्यामप्रसिद्धोपमत्वेन दूषणत्वेपि द्वयोरपि प्रसिद्धाप्रसिद्धयोः शृङ्गाररसोद्दीपकत्व-साम्याद्गुणत्वम् । केचित्तु कालपुरुषलोडर्थादिभेदमपि दोषमाहुः । यथा—

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
१२९ त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव ॥

अत्र समुद्रनेमिमत्यजमित्यन्वेति न तु त्यक्ष्यामिति । पुरुषभेदो यथा—

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
१३२ आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥

अत्र नीवार आभाति इत्यन्वेति न तु आभासीति । विध्यादिभेदो यथा—

आशास्यमन्यत् पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
१३५ पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥

अत्र भवन्तमलभत इत्यन्वेति न तु लभस्वेति । इति चित्रमीमांसादिप्रबन्धेषु द्रष्टव्यम्* ॥ ५६ ॥

---

*अत्र प्रसङ्गादलंकारशेखरे त्रयोदशमरीचौ साधर्म्यस्य प्रतियोग्यनुयोगिनावुक्तौ । तदुपयुक्तमिति संगृह्णीमः—चन्द्रकलाम्बुजदामशिरीषं विद्युत्तारा कनकलता च । दमनककाञ्चनयष्टी दीपः 3सौवैरेभिर्योषिद्वर्ण्या ॥ रोचना स्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः । चम्पकैर्हेमकेतक्या वर्ण्यते तत्तनोर्द्युतिः ॥ ( वराटकः पद्मबीजम् ) तमः शैवालजीमूतबर्हभ्रमरचामरैः । यमुनावीचिनलिाश्मनीला-

**इववद्वायथाशब्दाः समाननिभसंनिभाः ।**

अभिधालक्षणाव्यञ्जनाभिरुपमाप्रतीतिर्भवति इति तस्या वाचकादीन् निर्दिशति—**इवेति** । इवादयः शब्दाः सादृश्यवाचकाः सन्ति । तत्र इवोदाहरणम्-

३ हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ।

वत् तत्र तस्येव इति सप्तम्यन्ताद्विहितः । तेन तुल्यं क्रिया चेद्वतिः इति तृतीयान्ताद्विहितश्च तद्धितप्रत्ययो ग्राह्यः । उभयोः उदाहरणे यथा—

६ गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥

वा यथा—

९ आशीविषो वा संक्रुद्धः सूर्यो वाभ्रविनिर्गतः ।
भीमोन्तको वा समरे गदापाणिरदृश्यत ॥

यथा यथा—

१२ धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।

---

ब्जाभ्रैः समः कचः ॥ ललाटमर्धचन्द्रेण हेमपट्टिकया तथा । वल्लीस्मरधनुर्वीचिभृङ्गालीपल्लवैर्भ्रुवौ ॥
6 चन्द्रादर्शौ कपोलस्य मुखस्येन्द्वब्जदर्पणाः । तिलप्रसूनं नासायाः कण्ठः कम्बोः समः स्मृतः ॥ मृगतन्नेत्रपाथोजतत्पत्रझषखञ्जनैः । नेत्रं चकोरतन्नेत्रकेतकालिस्मराशुगैः ॥ प्रवालबिम्बबन्धूकपल्लवैरधरोष्ठकौ । वर्ण्यौ माधुर्यमाश्रित्य यावन्मधुरवस्तुभिः । मुक्तामाणिक्यनारङ्गदाडिमी-
9 कुन्दकोरकैः । ताराभिश्च रदा वाणी हंसालिशुकाकिंनरैः ॥ वेणुकोकिलवीणाभिर्माधुर्यं मधुरैः सह ॥ बाहुर्बिसेन विद्युद्वल्लिमृणालैः करस्तु पद्मेन । पल्लवविद्रुमकाभ्यां चन्द्रकलाकुन्दकोरकैश्च नखाः ॥ पूगाब्जतत्कोरकबिल्वतालगुच्छेभकुम्भाद्रिघटेशचक्रैः । सौवीरजम्बीरकबीजपूरसमुद्रछो-
12 लङ्गफलैरुरोजः ॥ नाभीरसातलावर्तह्रदकूपनदादिभिः । वली तटिन्या तद्रूपैः पृष्ठं काञ्चनपट्टकैः ॥ शून्ययग्रतलशून्याणुवेदीसिंहादिभिः समः । मुष्टिग्राह्यो भवेन्मध्यो जघनं पुलिनोपमम् ॥ पीठप्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते । करास्तु करिहस्तेन कदल्या करभेण च ॥ चरणः पल्लवाम्भोजस्थल-
15 पद्मप्रवालकैः । पूर्णेन्दुनाङ्गुष्ठनखौ गमनं हंसहस्तिवत् ॥ कटाक्षो यमुनावीचिभृङ्गावलिविषामृतैः । ज्योत्स्नेन्दुपुष्पपीयुषफेनकैरववद्धसः ॥ दर्शनं वमदब्जादिः श्वासस्तु सुरभिः शनैः । हंससारसशब्दाभ्यां वर्ण्यते नूपुरध्वनिः ॥ राज्ञामत्यन्तपीनत्वमुच्चता दीर्घबाहुता । युगार्गलभुजङ्गेन्द्रदण्ड-
18 स्तम्भेभहस्तकैः ॥ बाहुर्वक्षः कपाटेन शिलापट्टेन वर्ण्यते । अंसे विपुलता मध्ये कार्श्यमुन्नतता पदे ॥ स्तनयोरिव नारीणामत्यन्तस्वच्छता हृदि । कान्तिप्रयोजकं यावत् तावत् तद्वत् प्रवर्ण्यते ॥ प्रतापोर्काग्निवज्राद्यैः कीर्तिश्चन्द्रादिशुभ्रकैः । करे पद्मोर्ध्वरेखादि पदे छत्रध्वजादिकम् । गमनं
21 हस्तिसिंहाभ्यां कार्कश्यं च भुजादिषु ॥ इति । विस्तरस्तु कविकल्पलतादिषु द्रष्टव्यः ।

**तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥**
**प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।**

करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥

समानं यथा—

१५ व्रणमुखच्युतशोणितशीकरस्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ जलधरेण समानमुमापतिः ॥

समासे यथा—

१८ भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ।

निभः यथा—

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
२१ दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥

संनिभः यथा—

भगवान् यज्ञपुरुषः जगर्जागेन्द्रसंनिभः ।

२४ तुल्यं यथा—

अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भतुल्यम् ।

संकाशः यथा—

२७ विमाने सूर्यसंकाशे रघुराजो व्यराजत ।

नीकाशः यथा—

आकाशनीकाशतटां तीरवानीरसंकुलाम् ।
३० बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥

प्रकाशः यथा—

चन्द्रप्रकाशं वदनं कान्ताया भाति सुन्दरम् ।

३३ प्रतिरूपकः यथा—

वाग्भिः सुधायाः प्रतिरूपकाभिस्तनोति मोदं हृदि मेनिशं या ॥५७॥

**प्रतिपक्षेति** । प्रतिपक्षप्रतिद्वन्द्विनौ यथा—

**सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ ५८ ॥**

**प्रतिबिम्बप्रतिच्छन्दसरूपसमसंमिताः ।**[1][2]

**सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ५९ ॥**

पङ्केरुहश्रीप्रतिपक्षभूतनेत्रप्रभाभिः स्पृहणीयशोभम् ।

३ चन्द्रप्रतिद्वन्द्वि विभाति बालामुखं निशायां ललितोत्सवेषु ॥

प्रत्यनीकविरोधिनौ यथा—

कामस्य प्रत्यनीकोयं त्वं रतेश्च विरोधिनी ।

६ इति तौ विरहे नूनं भृशं पीडयतो युवाम् ॥

सदृक् यथा—

न त्वया सदृगन्योस्ति त्रैलोक्येपि मनोरमः ।

९ सदृशः यथा—

सुधेव वाणी वसुधेव मूर्तिः सुधाकरश्रीसदृशी च कीर्तिः ।

पयोधिकल्पा मतिरासफेन्दोर्महीतलेन्यस्य न हीति मन्ये ॥

१२ संवादी यथा—

विभाति बालावदने स्मितश्रीः संवादिनी शारदचन्द्रिकायाः ।

सजातीयानुवादिप्रतिबिम्बाः यथा—

कृष्णागुरुसजातीयं पीयूषस्यानुवादिनम् ।

१५ चन्द्रस्य प्रतिबिम्बं सत्सङ्गं संतापहं श्रये ॥ ५८ ॥

**प्रतिबिम्बेति** । प्रतिबिम्बोदाहरणं तु पूर्वश्लोकटीकायां दर्शितमेव ।

प्रतिच्छन्दसरूपसंमिताः यथा—

३ जामदग्नप्रतिच्छन्दः सरूपो यः किरीटिनः ।

संमितो रघुनाथस्य शिवराजो विराजते ॥

समं यथा—

६ यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समासि ।

तथा लतापल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि ॥

---

१ °च्छन्न°. अ. २ °सप्रभाः. अ.

कल्पदेशीयदेश्याद्[1]िः प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः[2] ॥ ६० ॥

सलक्षणसदृक्षाभाः यथा—

९ इन्दुसलक्षणवदनं सुधासदृक्षश्च मुखरसस्तस्याः ।
ज्योत्स्नाभाः स्मितमधुराः नर्मालापास्तु कस्य सदृशास्ते ॥

सपक्षः यथा—

१२ दलद्द्राक्षानिर्यद्रसभरसपक्षा भणितयः ।

उपमितोपमे यथा—

राक्षसोपमिता वाग्भिः खला दीनांस्तुदन्त्यलम् ।
१५ साधवस्तोषयन्त्येनांस्ताभिरेव सुरोपमाः ॥

उदाहरणान्तरं यथा—

उभौ यदि व्योम्नि पृथक् प्रवाहौ आकाशगङ्गापयसः पतेताम् ।
१८ तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ५९ ॥

**कल्पेति** । कल्पदेशीयदेश्याः यथा—

पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।
३ चक्रदेशीयजघना सा स्वप्नेपि न दृश्यते ॥

प्रख्यः यथा—

द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ।
६ गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥

प्रतिनिधिः यथा—

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
९ अलकेषु चमूरेणुश्चूर्णप्रतिनिधिः कृतः ॥

सवर्णः यथा—

ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।

---

१ देश्यादि कप. २ च तुल्यार्थ°. अ. क

**समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।**
**स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥**

१२ तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥

तुलितः यथा--

मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।

१५ अन्यूनार्थवादिनः अहीनः अनूनः इत्यादयः । यथा—

सुधान्यूनानि गङ्गाया जलानि श्रयतां जनाः ॥ ६० ॥

**समासेति** । समासश्च बहुव्रीहिः कर्मधारयोपि । तत्र बहुव्रीहिर्यथा—

कमलकरा रम्भोरू कुवलयनयना मृगाङ्कवदना सा ।
३ कथमिव चम्पकगात्री मृणालबाहुः प्रिया तपति ॥

कर्मधारयो यथा —

शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे ।
६ केसरा इव काशन्ते कान्तदन्तालिकान्तयः ॥

स्पर्धते यथा —

स्पर्धते रुद्धमद्धैर्यो वररामामुखानिलैः ।
९ चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ॥

जयतिर्यथा —

स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत ।
१२ जिगाय जम्बूजनितश्रियः श्रियं सुमेरुश्रृङ्गस्य तदा तदासनम् ॥

द्वेष्टिर्द्रुह्यतिश्च यथा —

राधामुखं द्वेष्टि सुधाकरस्तत्पापेन लोके दधते कलङ्कम् ।
१५ द्रुह्यन्ति तल्लोचनमम्बुजानि ततो निमीलन्ति निशासु तानि ॥

प्रतिगर्जतिर्यथा—

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
१८ कलङ्किनो जडस्यास्ति निर्दोषेणाजडेन च ॥ ६१ ॥

आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संधत्ते[1] हसतीर्ष्यत्यसूयति ॥ ६२ ॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥

**आक्रोशतीति** । आक्रोशत्यवजानाति कदर्थयति निन्दति यथा ––

आक्रोशत्यवजानाति कदर्थयति निन्दति ।
३ अम्बुजं त्वन्मुखं बाले अहो जडसमागमः ॥

विडम्बयतिर्यथा —

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरः शरासनम् ।
६ अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥

संधत्ते यथा––

चन्दनः शीततां धत्ते सौरभ्यं कमलं शशी ।
९ लावण्यं त्वन्मुखं बाले संधत्ते तत्त्रयं कथम् ॥

हसतिर्यथा ––

श्रिया हसद्भिः कमलानि सस्मितैरलंकृताम्बुप्रतिमागतैर्मुखैः ।
१२ कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप लक्ष्मीः ॥

ईर्ष्यत्यसूयती यथा––

ईर्ष्यति कपिचेष्टायै चपलमतिर्यो यदीयदुश्चरितम् ।
१५ नित्यमसूयति वानरवदनाय नमः खलाय शतशस्ते ॥ ६२ ॥

**तस्येति** । मुष्णात्यादीनां तस्य मुष्णाति सौभाग्यमित्यादीनि वाक्यान्येव मूले उदाहृतानि । अतो नात्रोदाहरणापेक्षा । मुष्णात्यादीनां सादृश्यादयोर्थाः वाक्य-
३मर्यादया यदा अभिप्रेतास्तदैव तेषां सादृश्यमर्थः नान्यथा। अत एव धनं मुष्णाति तस्करः इत्यादौ न सादृश्यार्थता । तुलां तेनाधिरोहति । तुलां मानयन्त्रम् । स्वसमीकरणाय अधिरोहति । नात्रोपमार्थः । तथा सति तुल्यार्थैरतुलोपमाभ्यां तृतीया-
६न्यतरस्याम् । इत्यतुलोपमाभ्यामिति पर्युदासात् षष्ठी स्यात् । अधिरोहतीति पदस्वारस्यं च लोपमियात् ॥ ६३ ॥

---

१ संबन्धे. अ. बपा. क.

तत्पदव्यां पदं धत्ते तस्य कक्षां[1] विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः[2] ।
[3]उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥

॥ [4]इत्युपमाचक्रम् ॥

उपमैव तिरोभूतभेदा रूपकमुच्यते[5] ।

**तत्पदव्यामिति** । कक्षां सादृश्यम् । तच्छीलमनुबध्नाति इत्येकम् । तच्छीलमिति षष्ठीतत्पुरुषः । न तु तस्येव शीलं यस्येति बहुव्रीहिः । तथात्वे समासश्च बहुव्रीहिः इत्यनेनैव सिद्धे पुनरुपादानं व्यर्थं स्यात् । तन्निषेधति अपकृष्टत्वेन निन्दति । अथवा उत्कर्षान्निवारयति ॥ ६४ ॥

**तस्येति** । सादृश्यसूचकाः अभिधालक्षणाव्यञ्जनामर्यादया सादृश्यबोधकाः । तत्र इवादयो वाचकाः । तत्रापि यथेवादिशब्दप्रयोगे साधर्म्यं वाच्यम् । तत्रैव तेषां शक्तेः । तुल्यसदृशादिपदानां प्रयोगे साधर्म्यमार्थम् । तेषां सादृश्यवति शक्तेरिति बोध्यम् । स्पर्धते इत्यादयो लक्षकाः । तेषां सादृश्ये शक्त्यभावात् । तस्य मुष्णाति सौभाग्यम् इत्यादीनि वाक्यानि तु व्यञ्जकानि । आदित्सति श्रियं तस्य मैत्रीं तस्यानुरुध्यति । इति क्वचिद् दृश्यते । उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः । इति मुद्रितपुस्तकेषु अर्धमधिकमस्ति । परं प्राचीनग्रन्थेषु अनुपलम्भात् तथा प्राचीनटीकासु चानुल्लेखात् तत्प्रक्षिप्तमिति भाति । न च कोपि विशेषार्थस्तस्मात् प्रतीतो भवति ॥ ६५ ॥

अथ रूपकं लक्षयति—**उपमैवेति** । तिरोभूतभेदा तिरोहितः निगूहितः विद्यमानोपि सादृश्यातिशयप्रदर्शनाय कविना निह्नुतः भेदः प्रस्तुताप्रस्तुतयोर्वैधर्म्यं यत्र तादृशी । उपमैव साधर्म्यमेव । रूपकम् रूपयति उपमानोपमेययोरेकतां नयति इति रूपकम् तन्नामालंकारः । तथा च परस्परविरुद्धधर्मवत्त्वेन उपस्थित्या प्रकाशितभिन्नस्वरूपयोरपि उपमानोपमेययोः विशेषसाम्यप्रदर्शनाय भेदनिगूहनेन

---

१ कक्ष्यां. क. २ सूचिनः, अ. ३ अ पुस्तके इदं श्लोकार्धं नास्ति ।
४ नास्ति अब पुस्तकयोः । ५ इष्यते. अ.

**यथा बाहुलता पाणिपद्मं चरणपल्लवः[1] ॥ ६६ ॥**

६अभेदप्रतिपत्तिः रूपकालंकारः । मुखं चन्द्रः इत्यादौ मुखत्वचन्द्रत्वरूपपरस्पर-
विरुद्धधर्मवत्त्वेनोपस्थितयोर्मुखचन्द्रयोः भेदनिगूहनेन अभेदप्रतिपत्तिः । इयं
चाभेदप्रतिपत्तिः आहार्यरूपा । आहार्यत्वं च बाधकालिकेच्छाजन्यज्ञानत्वम् ।
९अत्र बाधशब्देन बाधकज्ञानं विवक्षितम् । तथा च मुखं चन्द्र इत्यादौ बाधः
मुखं चन्द्रो न इति ज्ञानम् । तत्काले एव या इच्छा मुखे चन्द्रज्ञानं मे जायताम्
इत्यादिका तज्जन्यं यत् ज्ञानं मुखं चन्द्र इति तत् आहार्यम् । तथा च आहार्यत्वं
१२नाम सत्यपि बाधे प्रमातुरिच्छाजन्यप्रयोज्यत्वम् इति निष्कर्षः । निगीर्याध्यवसान-
रूपायामतिशयोक्तौ उपमेयस्य नोपमेयगतधर्मत्वेनोपस्थितिरिति न तत्रातिव्याप्तिः ।
अपह्नुतौ उपमेयगोपनेन भेदस्यापह्नवः । अत्र तथा न इति ततो भेदः । मुख-
१५पद्मम् इत्यादिसमासस्थले तु विशेषणस्य प्राधान्येनोपमानगतत्वे रूमकम् । यथा
विकसितं मुखपद्ममिति । अत्र विकासस्य पद्मधर्मत्वेन तस्य प्राधान्येनोपमाने
गतत्वेन मुखमेव पद्ममिति रूपकम् । तस्योपमेयगतत्वे उपमा । यथा सहास्यं मुख-
१८पद्मम् । अत्र हासस्य मुखधर्मत्वेन तद्विशेषणं मुखमिति उपमेयसंबद्धम् । अतः अत्र
मुखं पद्ममिव इति उपमा । उपमानोपमेययोर्विशेषणस्य तुल्यत्वे संदेहसंकरः ।
यथा रमणीयं मुखपद्मम् इति । अत्र रमणीयविशेषणस्य उभयत्र समानमेव संबन्धः ।
२१इति रूपकोपमयोः संकर इति बोध्यम् । रूपकस्य लक्षणानि प्राचीनपण्डितरैवा-
व्याप्त्यतिव्याप्तिदोषपरिहारपुरःसरं विविधानि प्रदर्शितानि । परं तेषु जगन्नाथस्य
लक्षणं ( २२४–५ पत्रयोः ) प्रायः सर्वसंग्राहकमिति तत् सप्रपञ्चं संगृह्णीमः ।
२४स च उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्
इति लक्षणं विधाय उपमेयतावच्छेदकपुरस्कारेणेतिविशेषणादपह्नुतिभ्रान्तिमदति-
शयोक्तिनिदर्शनानिरासः । अपह्नुतौ स्वेच्छया निषिध्यमानत्वात् भ्रान्तिमति च
२७तज्जनकदोषेणैव प्रतिबध्यमानत्वात् अतिशयोक्तिनिदर्शनयोश्च साध्यवसानलक्षणा-
मूलत्वादुपमेयतावच्छेदकस्य नास्ति पुरस्कारः । शब्दादितिविशेषणात् मुखमयं
चन्द्रः इति प्रात्यक्षिकाहार्यनिश्चयगोचरचन्द्रतादात्म्यावच्छेदः । निश्चीयमानमिति-
३०विशेषणात् संभावनात्मनो नूनं मुखं चन्द्रः इत्याद्युत्प्रेक्षाया व्यावृत्तिः । उपमानो-
पमेयविशेषणाभ्यां सादृश्यलाभात् मुखं मनोरमा रामा इत्यादिशुद्धारोपतादात्म्य-

---

१ °पल्लवम्. अक.

निरासः। सादृश्यमूलकमेव च तादात्म्यं रूपकमामनन्ति। इति व्याचख्यौ।
३३मुखं चन्द्रः इत्यत्र प्रथमं लक्षणया चन्द्रपदात् चन्द्रसादृश्योपास्थितिः। ततश्चन्द्र-
सदृशमुखमिति अन्वयबोधः। पश्चात् लक्षणाफलावगमायोद्भूतया व्यञ्जनया चन्द्रो
मुखमित्यभिन्नतया चन्द्रमुखयोः प्रतीतिः। इदमेव लक्षणायाः फलम्। सा
३६चाभेदप्रतीतिः प्राधान्येन वैचित्र्यमीदृशस्थले प्राप्नोति। तेन सादृश्यप्रतीतिजन्य-
मुपमावैचित्र्यं तत्कुक्षिनिलीनमिव भवति। अतोत्र नोपमा। प्रधानचमत्कृतेरेव
अलंकारप्रयोजकत्वात्। तद्वैचित्र्योपस्थितस्यैवालंकारत्वम्। नान्तर्विलीनभूतवैचित्र्यो-
३९पस्थितानामिति पूर्वोक्तमत्रानुसंधेयम्। उपमैव इति एवकारेण संबन्धान्तरनिरासः।
सादृश्यसंबन्धमूलकलक्षणायामेव रूपकं न जन्यजनकभावादिसंबन्धमूलकलक्षणाया-
मिति भावः। तेनायुर्घृतम् इत्यादौ न रूपकम्। अत्र प्रेमचन्द्राः—नवीनतरास्तु
४२रूपकस्य सादृश्यप्रतीतिपूर्वकत्वमेव। तच्च सादृश्यं प्रत्यक्षादिप्रमाणान्तरगम्यं न
तु गौणसारोपलक्षणया शब्दप्रमाणगम्यम्। तत्र सादृश्यस्य शब्दवेद्यत्वादुपमैव।
अत एवाग्नेये —

४५ उपमानस्य तत्त्वं यदुपमेये तु रूप्यते।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः॥ (३४४. २२)

इत्यत्र दृष्ट्वेत्युक्तम्। तस्मात् सादृश्यस्य प्रमाणान्तरवेद्यत्वे एव रूपकम्। लक्षणा-
४८स्थले तु लक्षणाफलत्वेनाभ्युपगतापि अभेदबुद्धिरुदीच्यबोधतया शाब्दबोधविषयतां
गतस्य सादृश्यस्य तत्काल एव प्रवृत्तमुपमाव्यपदेशं न व्याहन्तुमीष्टे। प्रवृत्तत्वात्
तस्य। न हि निर्बाधं लब्धसत्ताकं वस्तु कालान्तरीयेण प्रतिद्वन्द्विनान्यथाकर्तुं
५१शक्यते इति वदन्ति इत्याहुः। आस्तामेतत् प्रकृतमनुसरामः। एवं रूपकस्य
सामान्यलक्षणमभिधाय उदाहरति। **यथेति**। बाहुरेव लता। पाणिरेव पद्मम्। चरण
एव पल्लव। इति उपमानप्रधानः मयूरव्यंसकादित्वात् समासः। अत्र समासेपि
५४प्रथमं गौणलक्षणया लतादिपदात् तत्सादृश्यप्रतीतिः। तदनन्तरं तदनुरोधेन
समुन्मिषन्त्या व्यञ्जनया तादृूप्यप्रतीतिर्ज्ञेया। अत्र केचित् बाहुर्लतेव इति उपमितं
व्याघ्रादिभिः सामान्याप्रयोगे इति कर्मधारयं अङ्गीकुर्वन्ति। परं तन्न रुचिरम्। इवा-
५७दिशब्दवत् कर्मधारयस्यापि साम्यवाचकत्वेन उपमानोपमेययोः भेदप्रदर्शनेन
उपमायाः संभवात्। अत एव एवंविधस्थले साधकबाधकप्रमाणाभावे उपमा-
रूपकयोः सांकर्यमिच्छन्ति। तन्निरूपितमेव प्रागस्माभिः। प्रकृतोदाहरणेपि साधक-

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः[1]।**
**बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ६७ ॥**
**इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।**
**स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥**

बाधकप्रमाणाभावाद्रूपकोपमयोः सांकर्यमेव स्यात् । शुद्धोदाहरणं तु—तव बाहुलता बाले कोमला भाति भूतले । इति ऊह्यम् । अत्र कोमलेति सामान्यधर्मप्रयोगात् सामान्याप्रयोगे एव उपमितिसमासस्य विहितत्वात् बाहुरेव लता इति समासः । अत्र कोमलेति विशेषणमुपमाया बाधकम् । एवमेव तव बाहुलता बाले पुष्पिता नखरश्रिया । इति उदाहरणं ज्ञेयम् । अत्र पुष्पितत्वमुपमानलताया एव धर्म इति रूपकस्य साधकम् ॥ ६६ ॥

पूर्वं समस्तरूपकोदाहरणं प्रदर्शितम् । इदानीमसमस्तं दर्शयति—**अङ्गुल्य इति** । त्वं नः अस्माकम् । प्रत्यक्षचारिणी प्रत्यक्षं चरितुं शीलमस्याः सा प्रत्यक्षचारिणी । दर्शनविषयीभूतेत्यर्थः । वसन्तश्रीः वसन्तलक्ष्मीः । वसन्तश्रियः सादृश्यदर्शनाय तदुभयवृत्तिवस्तूनां बिम्बप्रतिबिम्बतया विषयविषयिभावं दर्शयति **अङ्गुल्य इति** । अङ्गुल्यः अङ्गुष्ठादयः करशाखाः । पल्लवानि किसलयानि । उपमायामिव रूपके उपमानोपमेययोर्भिन्नलिङ्गत्वे न दोषः । अतोत्र वाक्यत्रये भिन्नलिङ्गयोर्निर्देशः । वचनभेदोपि रूपके क्वचिन्न दोषाय । यथा शास्त्राणि चक्षुर्नवम् इत्यादि । अत्र शास्त्राणि इत्यनेन सकलशास्त्रप्रवीणत्वसूचनेन चमत्कारातिशयः । एवंविधस्थले न वचनभेदो दोषाय ॥ ६७ ॥

निर्दिष्टस्य द्विप्रकारस्य रूपकस्य संज्ञां निर्दिशति—**इत्येतदिति** । इत्येतत् अङ्गुल्य पल्लवानीत्येतत् । असमस्ताख्यम् असमस्तसंज्ञकम् । पूर्वरूपकम् बाहुलता पाणिपद्मं चरणपल्लवः इत्यादिकम् । समस्तं समस्तसंज्ञकं रूपकम् । तत्रोपमानोपमेययोः समस्तत्वादिति भावः । समस्तव्यस्तरूपकं दर्शयति **स्मितमिति** । मुखेन्दोः मुखमेव इन्दुः तस्य । स्मितं हास्यम् । ज्योत्स्ना । अत्र मुखेन्दोरिति समस्तं स्मितं ज्योत्स्नेति व्यस्तम् । इति समस्तव्यस्तरूपकम् ॥ ६८ ॥

---

१ नखत्विषः. अ, कपा.

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥
अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥ ७० ॥
अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।

सकलरूपकं दर्शयति—**ताम्राङ्गुलिरिति** । ताम्राङ्गुल्य एव दल-
श्रेणिः पत्रपङ्क्तिर्यत्र तत् । नखानां दीधितयः किरणानि एव केसराणि किञ्ज-
३ल्कानि यस्मिन् । एतादृशं भवच्चरणपङ्कजं त्वत्पदकमलम् । भूपालैः मूर्ध्नि ध्रियते
उह्यते ॥ ६९ ॥

उदाहरणस्थसकलरूपकत्वं विशदयति—**अङ्गुल्यादौ इति** । अङ्गु-
ल्यादौ आदिशब्देन नखग्रहणम् । दलादित्वम् । अत्रादिशब्देन केसरग्रहणम् ।
३पादे च पद्मताम् आरोप्य तद्योग्यस्थानविन्यासात् तस्य पङ्कजस्य योग्यस्थानं
मूर्धा तत्र विन्यासात् ध्रियते इति प्रतिपादनात् । एतत् सकलरूपकम् संपूर्ण-
रूपकम् । दलकेसररूपसर्वावयवनिरूपणात् । अयं भावः । चरणपङ्कजमित्यत्र
६उपमारूपकयोः संशयः । तत्र भूपालैर्मूर्ध्नि ध्रियते इति वर्णनेन मूर्ध्नि धारणस्य
पङ्कजस्यैव युक्तत्वात् तदुपमानप्राधान्ये सुसंगतं भवति । अतः मूर्ध्नि धारणं
रूपकसाधकम् । उपमेये चरणे तस्यासंभवादुपमाया बाधकम् । अतोत्र रूपकमेव
९नोपमा न वा संदेहसंकरः । इदमेव साङ्गं सावयवमिति अर्वाचीना व्यवहरन्ति ।
उक्तं च जगन्नाथेन—
परस्परसापेक्षनिष्पत्तिकानां रूपकाणां संघातः सावयवम् । यथा—
१२ सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः ॥ (२३१ पत्रे) इति ।
विस्तरस्तु तत्रैव द्रष्टव्यः । अङ्गुल्यः पल्लवान्यासन् इति असमस्तरूपकोदाहरण-
१५मपि सकलरूपकस्य भवतीति ज्ञेयम् ॥ ७० ॥

अवयवरूपकोदाहरणं दर्शयति—**अकस्मादिति** । हे चण्डि कोपने ।

**मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥ ७१ ॥**

**मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।**

**नान्यथा कृतमत्रास्यमतोवयवरूपकम् ॥ ७२ ॥**

**[1]वल्गितभ्रु गलद्घर्मजलमालोहितेक्षणम् ।**

अकस्मात् सहसैव । स्फुरिताधरपल्लवं स्फुरितः कोपेन कम्पितः अधरः एव पल्लवः ३यत्र तत् । ते मुखम् । मुक्ताः मौक्तिकाः तद्वत् रुक् यासां ता मुक्ताकारा इत्यर्थः । घर्माम्भःकणमञ्जरीः घर्माम्भसां स्वेदोदकानां ये कणाः बिन्दवः त एव मञ्जर्यः । अथवा घर्माम्भः एव कणमञ्जरीः कणवल्लरीः तुषारस्तबका इत्यर्थः । धत्ते ६दधते ॥ ७१ ॥

उदाहरणं विशदयति—**मञ्जरीति** । अत्र प्रस्तुतोदाहरणे । घर्माम्भः उपरिदर्शितप्रथमसमासे घर्माम्भःशब्देन घर्माम्भःकणाः ग्राह्याः । द्वितीयसमास-३स्वीकारे मञ्जरीशब्देन कर्णमञ्जरीः ग्राह्याः । अयमेव समासो युक्त इति भाति । अन्यथा कमले मञ्जरीवर्णनस्यानुपयुक्ततया मञ्जरीपदं व्यर्थमिव भवति । मञ्जरी-कृत्य मञ्जरीत्वेनारोप्य । अधरं अधरोष्ठम् । पल्लवीकृत्य पल्लवत्वेन आरोप्य । आस्यं ६मुखम् । अवयवि । नान्यथाकृतम् पद्माभिन्नत्वेन न वर्णितम् । अतोवयवमात्ररूपणात् अवयवरूपकमिदम् । मुखे पद्मत्वारोपस्तु अर्थवशादवसेयः । अर्वाचीनास्तु एत-देव एकदेशविवर्ति रूपकं मन्यन्ते । परं तत्र स्वल्पो विशेषः । अवयवरूपके ९अवयविनः आरोपविषयत्वं नास्तीति निश्चयः । एकदेशविवर्तिरूपके तु अवय-वानां अवयविनो वा यस्य कस्यापि रूपकैकदेशस्य रूपणाभावोभिप्रेतोस्ति । अतो जगन्नाथोदाहृतैकदेशिविवर्तिरूपकोदाहरणे—

१२ रूपजला चलनयना नाभ्यावर्ता कचावलिभुजङ्गा ।
मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिणी विषमा ॥

इत्यत्र नावयवरूपकम् । तत्र अवयविन्यास्तरुण्यास्तरङ्गिणीत्वेनारोपात् । एक-१५देशविवर्ति तु भवति । रूपकस्यावयवभूतस्य चलनयनस्य विषयभूतस्य विषयिणा मीनेनानारोपणात् । अत एव प्रकाशकारेण— श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् । (७२३पत्रे) इति सामान्यं लक्षणं विहितम् ॥ ७२ ॥

अवयविरूपकमाह—**वल्गितभ्रु इति** । वल्गिते चलिते भ्रुवौ यस्मिंस्तत्

---

[1] वलित°. क.

**विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७३ ॥**

**अविक्रृत्य[1] मुखाङ्गानि मुखमेवारविन्दताम् ।**
**आसीद्गमितमत्रेदमतोऽवयविरूपकम्[2] ॥ ७४ ॥**

**मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।**
**मुखेन मुग्धः सोऽप्येष जनो रागमयः कृतः ॥ ७५ ॥**

चलितभ्रुकुटि । गलन्ति घर्मजलानि स्वेदजलानि यस्मात् तत् । आलोहिते ३आरक्ते ईक्षणे नयने यस्मिन् तत् । इदं पुरो दृश्यमानम् । वदनपङ्कजं वदनमेव पङ्कजं कमलम् । मदावस्थां मद्यसेवनजनितमदावस्थाम् । विवृणोति प्रकाशयति । यथाश्रुतपाठेऽत्र उपमैव साधीयसी न रूपकम् । उपमानपङ्कजमात्रान्वयिधर्माणामनु- ६पादानात् उपमेयवदनस्यैवान्वयिनो भ्रूत्वादीनां चोपादनात् । सत्यम् । वदन- मम्बुजमिति पाठं स्वीकृत्य व्यस्तरूपकेण समाधेयम् ॥ ७३ ॥

उदाहरणं विवृणोति—**अविकृत्येति** । अस्मिन्नुदादरणे मुखाङ्गानि भ्रुकुटि- घर्मजलनयनादीनि । अविकृत्य पङ्कजाङ्गभूतैः अविकृत्य उपमानाङ्गभूतदलत्व- ३मकरन्दत्वपरागपिञ्जरभ्रमरत्वादिभिः अनारोप्य । अवयवि मुखमेव अरविन्दतां गमितमासीत् पङ्कजत्वेन आरोपितमासीत् । अतः अवयविनो मुखस्यैव पङ्कज त्वेनारोपणात् अवयविरूपकमिदम् । नव्यानां तु इदमेकदेशविवर्ति स्यात् इति ६भाति । नवीनमते इदं निरङ्गरूपकमिति केषांचिदुक्तिस्तु न क्षोदक्षमा । यतोऽत्रा- वयविनो मुखस्य अवयवा निर्दिष्टाः न तु आरोपावयविनो कमलस्य अवयवा निर्दिष्टाः । निरङ्गविषये तु अवयविनः आरोप्या अपि न निर्दिश्यन्ते । अत एव ९एकदेशवर्तिनो निरङ्गस्य भेदः इति सुधीभिर्विचारणीयम् ॥ ७४ ॥

अवयवरूपकभेदान् दिदर्शयिषुरेकाङ्गरूपकभेदमाह—**मदेति** । मदेन वारुणीमदेन पाटलौ श्वेतरक्तौ गण्डौ कपोलौ यत्र तेन । तथा रक्तं ताम्रं नेत्रमेव ३उत्पलं यत्र तेन । एतादृशेन ते मुखेन । एषः मल्लक्षणः । मुग्धः त्वत्सौन्दर्य- मोहितः । जनः रागमयः अनुरागपरिपूर्णः लोहितमयश्च कृतः ॥ ७५ ॥

---

१ अविवृत्य. कपा २ अवयव°. अ.

**एकाङ्गरूपकं चैतदेवं द्विप्रभृतीन्यपि ।**

**अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥ ७६ ॥**

**स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।**[1]

**इति पुष्पद्विरेफाणां संगत्या युक्तरूपकम् ॥ ७७ ॥**

**इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।**

नाम निर्दिशति---**एकाङ्गेति** । अत्र उदाहरणे रक्तनेत्रोत्पलेन इति एकाङ्गमात्ररूपणात् मदपाटलगण्डेन इत्यस्य अरूपणाच्च एकाङ्गरूपकमिदम् । ३एवम् अनयैव दिशा । द्विप्रभृतीनि अपि द्वित्रिचतुःप्रभृतीनि । अङ्गानि न तु अङ्गी । रूपयन्ति उपमानेन आरोपविषयीकुर्वन्ति । कवय इति शेषः । ततश्च द्व्यङ्गरूपकं त्र्यङ्गरूपकं चतुरङ्गरूपकमित्यादीनि बहूनि रूपकाणि भवन्ति । अङ्गस्य अङ्गयोः ६अङ्गानां वा योगः आरोपणयोगः अयोगस्तदभावः तौ । भिदाकरौ भेदनिष्पादकौ । प्राचीनटीकाकारास्तु योगायौगौ भिदाकरौ एतावन्तं वाक्यांशमन्यथा विवृण्वन्ति । तथा हि तेषु एकाङ्गद्व्यङ्गादिरूपकेषु योगायोगौ भिदाकरौ भेदकौ । तानि रूप- ९काणि योगायोगाभ्यां पुनः द्विप्रकाराणि भवन्ति इत्यर्थः । योगः आरोप्यमाणानां परस्परं युज्यमानः संबन्धः । अयोगस्तदभावः । एतच्च उदाहरणे स्पष्टी- भविष्यति ॥ ७६ ॥

तत्रादौ युक्तरूपकमुदाहरति---**स्मितेति** । स्मितम्---

ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।

३ अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥

इत्युक्तलक्षणं तदेव पुष्पं तेन उज्ज्वलं कान्तिमत् । लोले चञ्चले नेत्रे एव भृङ्गौ यत्र तत् । इदं मुखं शोभते इति शेषः । इति एवम् । पुष्पद्विरेफाणां मुखावयवभूतयोः ६स्मितनेत्रयोः आरोपविषयीभूतानां तेषाम् । संगत्या परस्परसंबन्धसुसंगत्या । इदं युक्तरूपकम् । अत्र अवयवत्वं नाम आधेयत्वम् । तन्मुखनिरूपितं स्मिते वर्तते इति स्मितस्य मुखावयवत्वं बोध्यम् ॥ ७७ ॥

अयुक्तरूपकमुदाहरति---**इदमिति** । आर्द्रं प्रेमार्द्रं स्मितमेव ज्योत्स्ना

---

1 लोलभृङ्गनेत्रम्. अ.

इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥

चन्द्रिका यस्मिन् तत् । स्निग्धे स्नेहपूर्णे नेत्रे एव उत्पले कमले यस्मिन् । ३ज्योत्स्नोत्पलायोगात् आरोपविषयभूतयोः चन्द्रिकाकमलयोः अयोगात् परस्पर-विरोधितया असंबन्धात् । इदम् अयुक्तरूपकम् ॥ ७८ ॥

विषमरूपकं लक्षयति—**रूपणादिति** । अङ्गिनः प्रधानस्य रूपणात् । तथा अङ्गानां अप्रधानानाम् । रूपणारूपणाश्रयात् । भावे घञ् । आश्रयणादित्यर्थः । ३तथा च कस्यचिदङ्गस्य रूपणं कस्यचिदरूपणं तस्मात् । ललितं वैचित्र्येण मनोहरम् । विषमं रूपणारूपणवैषम्यात् विषमसंज्ञकम् । जायते । यथेति उदाहरण-प्रस्तावाय ॥ ७९ ॥

उदाहरति— **मदरक्तेति** । मदरक्तकपोलेन मदपाटलगण्डेन । नर्तितभ्रूलतेन नर्तिते भ्रुवौ एव लते यत्र तादृशेन । मुखमेव इन्दुः तेन । भुवनत्रयं मर्दितुं जेतुम् । ३मन्मथः मदनः । अलं समर्थः । अत्र अङ्गिनि मुखे इन्दुत्वारोपः तथा तदङ्गभूतयोः भ्रुवोर्लतात्वारोपः कपोलयोस्तु न कस्यापि आरोपः इति वैषम्यम् ॥ ८० ॥

सविशेषणरूपकमाह—**हरिपाद इति** । शिरोलग्नजह्नुकन्याजलांशुकः शिरः चरणाग्रप्रदेशः ध्वजाग्रप्रदेशश्च तत्र लग्ना आसक्ता या जह्नुकन्या भागीरथी ३तस्याः जलम् उदकमेव अंशुकं श्वेतपताका यस्य सः । असुरनिःशङ्कासुरानन्दो-त्सवध्वजः असुरेभ्यः निःशङ्का निर्भीकाः । बलिविजयादित्यर्थः । ये सुराः तेषा-मानन्दोत्सवस्य ध्वजः केतुरिव । हरेः वामनस्य । पादः । जयति सर्वोत्कर्षेण ६वर्तते ॥ ८१ ॥

**विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।**
**पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥**
**न मीलयति[1] पद्मानि न नभोप्यवगाहते ।**
**त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते[2] ॥ ८३ ॥**
**अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।**
**अत्र संदर्श्यते[3] यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥**
**गाम्भीर्येण समुद्रोसि गौरवेणासि पर्वतः ॥**

उदाहृतालंकारं निर्देशपूर्वकं विशदयति--**विशेषणेति** । विशेषणेन शिरोलग्नेतिविशेषणेन समग्रस्य युक्तस्य । केतोः असुरनिःशङ्कसुरानन्दोत्सवध्वजस्य । यत् ईदृशं रूपं विशेषणविशिष्टस्वरूपं सपताकध्वजरूपमित्यर्थः । पादे । तस्य सपताकध्वजस्य । समर्पणात् विशेषणविशिष्टस्य पदार्थस्यारोपात् । सविशेषण-रूपकमेतत् ॥ ८२ ॥

विरूद्धरूपकमाह--**न मीलयतीति** । त्वन्मुखेन्दुः तव वदनचन्द्रमाः । पद्मानि न मीलयति न संकोचयति । नभोपि न अवगाहते नाक्रमति । केवलं मम असूनां प्राणानाम् । हरणाय कल्पते प्रभवति । विप्रलम्भोद्दीपकत्वादिति भावः ॥ ८३ ॥

उदाहरणं विशदयति--**अक्रियेति** । चन्द्रकार्याणां पद्मनिमीलननभोवगाहित्वादीनां चन्द्रव्यापाराणाम् । अक्रिया अविधानम् । अन्यस्य चन्द्रभिन्न-मृत्योः कार्यं प्राणहरणरूपं तस्य क्रिया अनुष्ठानम् । अत्र अस्मिन्नुदाहरणे । यस्मात् संदर्श्यते अतः विरुद्धं विरुद्धसंज्ञकं रूपकम् । रूपके उपमानाभिन्नतया रूपितस्योपमेयस्य तत्कार्यकरणमेवोचितम् । परमत्र तत् तेन न क्रियते प्रत्युत तद्विरुद्धशीलस्य कार्यकरणादिदं विरुद्धम् । विरोधश्चात्र अनौचित्यरूप इति बोध्यम् ॥ ८४ ॥

हेतुरूपकमुदाहरति--**गाम्भीर्येणेति** । गाम्भीर्येण दुरवगाहाशयत्वेन ।

---

१ निमीलयति क. २ यस्यति बपा.

३ संदृश्यते अ, संदिश्यते. क.

**कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥**
**गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः**
**कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥**
**राजहंसोपभोगार्हं[1] भ्रमरप्रार्थ्यसौरभम् ।**
**सखि वक्त्राम्बुजमिदं तवेति[2] श्लिष्टरूपकम् ॥ ८७ ॥**
**इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।**
**उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥**

समुद्रोसि । गौरवेण सारवत्तया । पर्वतः असि । लोकानां कामदत्वात् वाञ्छित-
३प्रदत्वात् । कल्पपादपः कल्पवृक्षः । त्वमसि । सर्वत्र हेतौ तृतीया ॥ ८५ ॥

उदाहरणं विवृणोति—**गाम्भीर्येति** । गाम्भीर्यप्रमुखैः गाम्भीर्यगौरव
कामदत्वैः । प्रस्तुतनृपः सागरः गिरिः कल्पद्रुमश्च क्रियते एतेषां आरोपविषयी-
३क्रियते । गिरित्वादिभिः आरोप्यते इति भावः । अत्र गाम्भीर्यादिसाधारणधर्माणां
हेतुत्वेन विन्यसनात् हेतुरूपकमिदम् । साहित्यदर्पणकारास्तु —एकस्यानेकधोल्लेखः
यः स उल्लेख उच्यते । ( १०. ३७ ) इति उल्लेखलक्षणं विधाय अत्र
६एकस्य प्रस्तुतस्य नृपस्य गाम्भीर्यादिविषयभेदेनानेकधोल्लेखादिममुल्लेखालंकारमाहुः ।
परं हेतुशून्यस्थले विविधारोपे उल्लेखः हेतुपुरःसरे तु हेतुरूपकमिति उभयोर्भेदे
सति यत् तैरुल्लेख एव सामान्यतया सर्वत्र स्वीकृतः तच्चिन्त्यमिति भाति ॥ ८६ ॥

श्लिष्टरूपकं दर्शयति—**राजेति** । राजहंसोपभोगार्हम् राजहंसो नृपश्रेष्ठः
हंसविशेषश्च तेन उपभोगार्हं संभोगोचितम् । भ्रमरप्रार्थ्यसौरभम् भ्रमरैः कामुकैः
३भृङ्गैश्च प्रार्थ्यं स्पृहणीयं सौरभं यस्य । सखि दयिते । तव वक्त्राम्बुजं वक्त्रमेव
अम्बुजं भातीति शेषः । श्लिष्टरूपकम् साधारणधर्मस्य श्लेषनिष्पाद्यत्वादिति भावः ।
साधारणधर्मप्रयोगाच्च नोपमितिसमासः ॥ ८७ ॥

उपमारूपकं व्यतिरेकिरूपकं चेति रूपकद्वयं लक्षयति—**इष्टमिति** ।
गौणः गुणसंबन्धादारोप्यमाणः चन्द्रादिर्विषयो गौणः । मुख्यः वर्ण्यत्वेन प्रस्तुत-
३त्वात् प्रधानः मुखादिविषयः । तयोः गौणमुख्ययोः । साधर्म्यदर्शनादुपमारूपकं
वैधर्म्यदर्शनात् व्यतिरेकरूपकम् । इष्टम् आलंकारिकैरिति शेषः ॥ ८८ ॥

---

१ °भोगार्थ. ब.   २ नदेतत्. कपा.

अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
संनद्धोदयरागस्य चन्द्रस्य[1] प्रतिगर्जति ॥ ८९ ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रोऽप्यसौ[1] शश्वदयमापूर्णमण्डलः ॥ ९० ॥
मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।

उपमारूपकमुदाहरति—**अयमिति** । मदेन वारुणीमदेन । आलोहितच्छायः आरक्तकान्तिः । अयं मुखमेव चन्द्रमाः । संनद्धोदयरागस्य संनद्धः सर्वबिम्बव्यापनेन ३प्रस्फुरन्नुदयरागः उदयकालीनलौहित्यं यस्य । तथाविधस्य । चन्द्रस्य । प्रतिगर्जति समानकान्तिमत्त्वात् स्पर्धते । चन्द्रस्येति कर्मणि षष्ठी । चन्द्रं स्पर्धते न तु तमनुकरोतीत्यर्थः । अन्यथा उपमाया एव प्रधानवाक्यस्थिततया प्राधान्यात् ६तत्कुक्षिनिलीनस्य मुखचन्द्रमा इतिरूपकस्य अलंकारव्यपदेशकत्वाभावेन इदं रूपकभेदोदाहरणमसंगतं स्यात् । तथैव रूपकेण चन्द्राभिन्नं मुखमिति अवगतस्य मुखस्य चन्द्रसदृशं मुखमिति प्रतीतेरसंगतत्वमपि स्यात् । एवं चात्र चन्द्राभिन्न-९तया आरोपविषयीभूतस्य मुखस्य औपम्यसूचकप्रतिगर्जनारूपसाधर्म्यसंबन्धादु-पमारूपकमिदम् । अत्रासंतुष्टाः प्रेमचन्द्रशर्माणस्तु रक्तं तव मुखं चण्डि साक्षात् संध्येन्दुमण्डलम् । इत्येतदुदाहरणं पर्यवर्तयन्त ॥ ८९॥

व्यतिरेकरूपकं दर्शयति—**चन्द्रमा इति** । देवैः असमग्रोपि असंपूर्णोऽपि । असौ चन्द्रमाः । शश्वत् पीयते । अयं मत्पुरोवर्ती । आपूर्णमण्डलः संपूर्णबिम्बः । ३त्वन्मुखचन्द्रमाः त्वन्मुखमेव चन्द्रमाः । मया पीयते । अत्र मुख्यगौणचन्द्रमसोः असंपूर्णत्वसंपूर्णत्वरूपवैधर्म्ययोगात् व्यतिरेकरूपकमेतत् । अयं च व्यतिरेकः उपमानादुपमेयस्योत्कर्षं द्योतयति । नायं वक्ष्यमाणो व्यतिरेकालंकारः । तस्य सादृश्य-६प्रतीतिपूर्वकभेदपर्यवसानविषयत्वात् । अत्र रूपकत्वेनाभेदप्रतीतिः । तदुक्तं—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकः स उच्यते ॥ इति ॥ ९० ॥

आक्षेपरूपकं दर्शयति—**मुखेति** । हे सुन्दरि । इत्थं मया प्रत्यक्षीकृतम् ।

---

१ मुखस्य. ड. प्रमादादयमपपाठः इति भाति ।

१ असमग्रो ह्यसौ. अ.

न ते सुन्दरि संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥
मुखेन्दुरपि ते चण्डि मां निर्दहति निर्दयम् ।
भाग्यदोषान्ममैवेति तत् समाधानरूपकम् ॥ ९२ ॥
मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्तकी तव ।

अतिप्रखरम् । अन्योपतापिनः अन्याः प्रतिनायिकाः तासां उपतापिनः संतापकस्य। ३सौन्दर्यातिशयेन तासां मात्सर्योदयात् । ते मुखचन्द्रस्य चन्द्रत्वं न संवादि नानुगुणम् । यतः प्रसिद्धचन्द्रः सर्वेषामाह्लादकः तव मुखं तु प्रतिनायिकानां संतापकरम् अतो न संवादि । अथवा अन्योपतापिनः अन्यः त्वत्तो भिन्नः नायकोऽहं ६तस्य उपतापिनः प्रणयकलहे मधुरोक्तिशून्यतया । अन्यत् सर्वं पूर्ववत् । अत्र अन्ये टीकाकारास्तु—इत्थमितिपदं वाक्यस्यास्य कमलसंकोचनकृतचन्द्रनिन्दाबोधकवाक्यानन्तर्यं सूचयति। इत्थं कमलसंकोचनेन अन्योपतापिनः परपीडयितुः । ९यद्वा इत्थम् एवम् अतिनिर्दयमित्यर्थः । अन्योपतापिनः मादृशविरहिजनसंतापकस्य चन्द्रस्य प्रसिद्धस्य चन्द्रत्वं तव मुखचन्द्रस्य न संवादि न युज्यते । सर्वेषामाह्लादकत्वेन परपीडकधर्माध्यासायोगादिति भावः । इति विवृण्वन्ति । तत्र १२अन्योपतापिनः इति विशेषणामात्राद्विशेष्यस्य चन्द्रस्य प्रतीतिः स्वीकर्तव्या । तदुक्तं वामनेन—विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ इति । इत्येतत् आक्षेपरूपकम् आक्षेपः प्रतिषेधोक्तिः तदुपादाननियतत्वात् आक्षेपरूपकम् । अथवा १५आक्षेपः निन्दा तन्निवेशनादिदमाक्षेपरूपकम् । नायं व्यतिरेकः सादृश्यप्रतीतेरभावात् । न वापह्नुतिः प्रस्तुतस्य निषेधायोगात् । अत्र निषेधश्चन्द्रत्वस्य स तु न प्रस्तुतः आरोपविषयत्वात् । प्रथमार्थस्वीकारेऽपि प्रस्तुतमुखचन्द्रस्य निषेधेऽपि १८अन्यार्थस्य अनारोपान्न सा भवति । तत्र अन्यार्थारोपणस्य विहितत्वात् । तथा च वक्ष्यति—अपह्नुतिरपह्नुत्य किंचिदन्यार्थदर्शनमिति ॥ ९१ ॥

समाधानरूपकं कथयति—**मुखेन्दुरिति** । हे चण्डि ते मुखेन्दुरपि मां निर्दयं दहति । अपिना दहनस्यान्त्यतायोग्यता सूचिता । तत्र स्वयं समाधत्ते ३**ममैवेति** । भाग्यदोषात् दैवदुर्विपाकात् । इति एवं स्वयं समाधानात् इदं समाधानरूपकम् ॥ ९२ ॥

रूपकरूपकमाह—**मुखेति** । मुखमेव पङ्कजं तदेव रङ्गं नृत्यस्थानं तस्मिन् ।

**लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥ ९३ ॥**

**नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ[1]**

**एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ॥**

**मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।**

भ्रुवौ एव लता सा एव नर्तकी नटी । लीलानृत्यं विलासनर्तनम् । करोति इति एतत् ३रम्यं मनोहरम् । रूपकरूपकम् । एकेन रूपितस्यान्येनरूपणात् तत्संज्ञकोलंकारः । तथा च मुखपङ्कजरङ्गे इत्यत्र प्रथमं मुखस्य पङ्कजेन रूपणं पश्चाच्च मुखपङ्कजस्य रङ्गेण रूपणम् । तथैव भ्रूलतानर्तकी इत्यत्र प्रथमं भ्रुवः लतात्वेन पश्चाद्भ्रूलतायाः ६नर्तकीत्वेन रूपणम् । इदं च समासे एव संभवति । वाक्ये तु एकस्मिन् बहूनामारोपे हेतूपादाने हेतुरूपकम् । यथा गाम्भीर्येण समुद्रोसि इत्यादि पूर्वं निर्दिष्टम् । हेतोरनिर्देशे तु मालारूपकम् यथा प्रकाशे——

९ सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः

कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।

विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया

१२ बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥

(७२६ पत्रे) इति ।

अत्र रम्यमिति लक्षणघटकतयाङ्गीकृत्य यत्र रूपकरूपणे रम्यत्वं नास्ति १५तत्र नायमलंकारः । यथा——नारीबाहुलताव्यालीपरिरब्धः कुतः सुखी । इति । अत्र बाहौ लतात्वारोपे न कापि रम्यता । अपकर्षप्रतिपादनस्यैव प्रस्तावात् इति प्रेमचन्द्रशर्माणः कथयन्ति । अस्मिन्नुदाहरणे चमत्कृतिरस्ति परं बाहौ लतात्वा-१८रोपे रम्यता नास्तीति तदभिप्रायः इति ध्येयम् ॥ ९३ ॥

तत्त्वापह्नवरूपकं दर्शयति——**नैतदिति** । एतन्मुखं न इदं पद्मम् । इमे नेत्रे न अपि तु भ्रमरौ । एता दन्तार्चिषः दन्तकान्तयः न किंतु केसराणि ३किञ्जल्का एव । तवेति सर्वत्र उपमेयेन संबध्यते ॥ ९४ ॥

उक्तोदाहरणं व्याख्याति——**मुखादित्वमिति** । मुखादित्वम् मुखत्वादिकं

१ इमे. क.

## उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥
## न पर्यन्तो विकल्पानां रूपकोपमयोर[1]तः ।

मुखत्वनेत्रत्वदन्ता॥र्चिष्ट्वरूपमुपमेयम् । निवर्त्यैव प्रतिषिध्यैव । पद्मादित्वेन पद्मत्वा-
३दिना । पद्मत्वभ्रमरत्वकेसरत्वेन । रूपणात् आरोपात् । उद्भावितगुणोष्कर्षम् उद्भा-
वितः रूपकान्तरेभ्यः प्रकटतां नीतः गुणानामुत्कर्षः तादात्म्यारोपहेतु प्रस्तुतगुणा-
नाम् आधिक्यम् यत्र तत् । तत्त्वस्य यथार्थभूतस्य प्रस्तुतस्य मुखस्वरूपस्य अप-
६ह्नवेन अप्रस्तुतपद्मादिस्वरूपारोपेण वस्तुनिह्नवेन रूपकम् इति तत्त्वापह्नवरूपकम् ।
रूपकान्तरेषु केवलं सामानाधिकरण्येन उपमेयोपमानानामभेददर्शनेन यावान्
गुणोत्कर्षः ततोपि अधिकोत्र प्रतिषेधपूर्वकारोपेण इति उद्भावितगुणोकत्र्षत्वमास्मिन्
९रूपके सहृदयवेद्यमस्ति । केचित्तु उद्भाविगुणोत्कर्षम् इत्यस्य उद्भावितः स्फुटं
दर्शितः गुणोत्कर्षः प्रस्तुतस्य यत्रेति प्रस्तुतोपमेयस्य गुणवर्णनरूपं तत्त्वापह्नव-
रूपकस्य विशेषं मन्यते । परं तदपेक्षया प्रथमदर्शिताशयः एव गरीयान् इति
१२भाति । नेयमपह्नुतिः । तस्यां प्रस्तुतस्य धर्मनिषेधेन धर्मान्तरारोपः । यथा—न
पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति । कुवलयानन्देपि—शुद्धापह्नुतिरन्यस्यारो-
पार्थो धर्मनिह्नवः । इति धर्मनिह्नवस्थले एव अपह्नुतेर्विषयो दर्शितः । अस्मिन्नु-
१५दाहरणे प्रस्तुतस्य स्मरस्य पञ्चेषुत्वरूपं धर्मं प्रतिषिध्य तस्मिन् सहस्रपत्रित्वारोपः।
अत्र तु धर्मिणं मुखादिकं प्रतिषिध्य धर्म्यन्तरस्य पद्मादिकस्यारोपः इति उभयोर्भेदः।
केचित्तु सादृश्यप्रतीतिपूर्वकारोपो रूपकम् । अपह्नुतौ तु सादृश्यप्रतीतिर्नापेक्ष्यते ।
१८सादृश्यप्रतीतिभिन्नस्थलीयारोपे एव सा । तथा च प्रकृते निषेधेपि सादृश्यप्रतीति-
रस्त्येव इति अत्र सादृश्यप्रतीतिजीवितस्य रूपकस्यैव साम्राज्यम् । दर्पणकारास्तु
—प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः । ( १०. ३२ ) इति सामान्यतः
२१प्रतिषेधपूर्वकारोपे अपह्नुतिं कथयन्ति । तदपह्नुतिविषयपरिहारार्थं च रूपकलक्षणे
रूपकं रोपितारोपो विषये निरपह्नवे । इति विषयस्य निरपह्नवमिति विशेषण-
मुपन्यस्यन्ति । तन्मतेत्रापह्नुतिरेव ॥ ९५ ॥

रूपकमुपसंहरति—**न पर्यन्त इति** । रूपकस्य उपमायाश्च । विकल्पानां
प्रकाराणाम् । पर्यन्तः परिसमाप्तिः । नास्ति । अतः दिङ्मात्रम् उपमारूपकस्वरूपाव-

[1] °योरपि. अ.

दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥

॥ इति रूपकचक्रम् ॥

३गमाय किंचिदिव । दर्शितं कथितम् । अनयैव दिशा धीरैः साहित्यशास्त्रप्रगल्भमतिभिः । अनुक्तमपि अकथितः उपमारूपकविभागः । अनुमीयताम् उन्नीयताम् । तथा च भेदद्वयविशिष्टं परंपरितमपि रूपकभेद एव । तदुक्तं प्रकाशकृता—

६ नियतारोपणोपायः यदारोपः परस्य यः ।
तत् परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥

यथा—

९ विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
१२ साम्राज्यं नरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

(७२८–२९ पत्रयोः ) इति ।

अत्र मानसमेव मानसम् कमलायाः संकोच एव कमलानामसंकोचः दुर्गाणाम-
१५ममार्गणमेव दुर्गायाः मार्गणम् समितां युद्धानां स्वीकारः एव समिधां स्वीकारः सत्ये प्रीतिरेव सत्यामप्रीतिः विजयः परपराभवः एव विजयः अर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः ॥ भेदभाजि यथा—

१८ आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
२१ राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ इति ।

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते । अपय्यदीक्षितास्तु अश्लिष्टशब्दनिबन्धनं मालापरंपरितमपि दर्शयन्ति । यथा —

२४ पर्यङ्को राज्यलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः
संग्रामत्रासताम्यन्मुरलपतियशोहंसलीलाम्बुवाहः ।
भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः
२७ खड्गक्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥

इति । (चि. मी. ५१ पत्रे )

इदं चाधिकारारूढवैशिष्ट्यमपि भवति । यथा—इदं वक्त्रं साक्षाद्विरहितकलङ्कः
३०शशधरः । इति । वैयधिकरणेपि भवति । यथा—विदधे मधुपश्रेणीमिह भ्रूलतया
विधिः । इति । क्वचिद्वैधर्म्येणापि । यथा—सौजन्याम्बुमरुस्थली सुजनता लेख्यद्यु-
भित्तिर्गुणः । इत्यादि । काव्यानुशासने ( २५१ पत्रे ) अन्येपि भेदा हेमचन्द्रेण
३३दर्शिताः । तथाहि अनेकविषयं रूपकं यथा—

यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृज्ज्ञात्यादयः पल्लवाः ।
३६ स्कन्धोदारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णा लता लूयताम् ॥

इदमेव अन्यैः उभयावयवत्वेन निर्दिश्यते । उदाहरणान्तरं यथा—

३९ इन्द्रस्त्वं तव बाहू जयलक्ष्मीद्वारतोरणस्तम्भौ ।
खड्गः कृतान्तरसना रसना च सरस्वती राजन् ॥ इति ।

सहजावयवरूपकं यथा—

४२ गजो नगः कुथा मेघाः शृङ्खलाः पन्नगा अपि ।
यन्ता सिंहोपि शोभन्ते भ्रमरा हरिणास्तथा ॥ इति ।

यथा वा—

४५ पप्फुरिअओट्ठदलअं तक्खणविगलिअरुहिरमहुविच्छड्डं ।
उक्खण्डिदअण्ठाणालं पडिअं फुटदसणकेसरं मुहकमलं ॥

अत्र ओष्ठादीनां दलादीनां च मुखाम्भोजावयवानां स्फुरितविगलितोत्खण्डितस्फुट-
४८विशेषणविशिष्टानां परस्परमुपमानोपमेयभावरूपितानां मुखपक्षे कमलपक्षे च
सहजत्वं गम्यते ।

उभयावयवं यथा—

५१ अलिकुलकुन्तलभाराः सरसिजवदनाश्च चक्रवाककुचाः ।
राजन्ति हंसरसनाः संप्रति वापीविलासिन्यः ॥ इति ।

रशनारूपकं यथा—

५४ किसलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति ।

**जातिक्रियागुणद्रव्यवाचिनैकत्र वर्तिना ।**
**सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा ॥ ९७ ॥**

नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ इति ।

अत्र हि किसलयकरैः करकमलैः कमलमुखैः मुखेन्दुभिरिति रशनाक्रमेण शब्दानां ५७संदर्भः उपलभ्यमानः तदर्थानां मनोभुवो जगद्विजये लतादिसंबन्धात् करणभावमनुमापयति । एवमन्येपि विविधाः कल्पिताः प्रभेदाः सन्ति । तेषु केचिदुक्तेषु अन्तर्भावनीयाः केचित्तु वर्णनानुरोधेन तत्तदनुरूपनामभिरूहनीयाः । विस्तरस्तु ६०सरस्वतीकण्ठाभरणे चतुर्थपरिच्छेदे द्रष्टव्यः ॥ ९६ ॥

क्रमप्राप्तं दीपकं लक्षयति—**जातीति** । एकत्र प्रबन्धान्तरगते कस्मिंश्चिदपि एकस्मिन् वाक्ये आदिमध्यावसानेषु एकस्मिन् स्थाने । वर्तिना विद्यमानेन । ३जातिक्रियागुणद्रव्यवाचिना जात्याद्यन्यतमवाचकेन पदेन । सर्ववाक्योपकारश्चेत् स्वार्थद्वारा वाक्यान्तरार्थान्वयोपपत्तिश्चेत् । तदा तं रचनाचमत्कारं दीपकं दीपकसंज्ञकालंकारम् । आहुः कवय इति शेषः । दीप इव दीपकम् । संज्ञायां कन् इति ६सूत्रेण इवार्थे कन् । दीपो यथा प्रासादार्थमारोपितः प्रासादमुपकृत्य रथ्यामपि उपकरोति तथा कस्मिंश्चिदपि एकस्मिन् वाक्ये स्थितं जात्यादिपदं तद्वाक्योपस्कारपूर्वकम् अन्यस्मिन् वाक्ये तदादिसर्वनाम्ना चकारादिना वा अनुषक्तं सत् तदर्थं ९संपादयति इति दीपसाम्यात् दीपकम् । एवं च एकवाक्योपात्तपदप्रतिपाद्यस्य जात्याद्यन्यतमस्य तत्रोपपन्नान्वयत्वेन निराकाङ्क्षस्यापि पुनः वाक्यान्तरान्वयोपपादनायानुषङ्गादिना तत्रान्वयित्वं दीपकमिति निष्कर्षः । अत एव अस्य अर्था- १२लंकारत्वम् । इदमेव दीपकलक्षणं भरतभामहादिभिः कटाक्षितं दृश्यते । सरस्वती- कण्ठाभरणेपि इदमेव लक्षणं स्वीकृत्य विस्तरः प्रदर्शितः । प्रकाशकारादयः अर्वाचीनास्तु प्रस्तुताप्रस्तुतयोर्धर्मस्य सकृद्वृत्तित्वं दीपकमाहुः । तदनेकवाक्यगतं १५चेदेतन्मतेन दीपकं भवेत् । एकवाक्यगतत्वे तु भिन्नं तदिति ध्येयम् । उपमारूपकयोः साधारणधर्मस्योभयान्वितत्वेपि अनुषङ्गादिना वाक्यान्तरार्थोपस्थापकत्वाभावान्न तत्र दीपकातिव्याप्तिः । सर्ववाक्योपकारः यत्र जात्यादिपदानामुपादानं

---

१ °पचारश्चेत्. कपा, ड, प. २ तदाहुः. बक.

**पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।**

**स[1] एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥**

**चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।**

**चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ ९९ ॥**

**श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।**

तद्वाक्यस्य तथा तद्भिन्नानां जात्यादिपदाकाङ्क्षिणां वाक्यान्तराणां च उपकारः अनेन एकवाक्ये दीपकं न भवतीति स्पष्टम् ॥ ९७ ॥

दीपकमुदाहरति—**पवन इति** । दक्षिणः पवनः मलयानिलः । वीरुधां जीर्णं पत्रं हरति । अनेन तस्य मान्द्यं सूचितम् । स एव अत्र तच्छब्दः पूर्ववाक्यस्थ-३पवनशब्दपरामर्शकः । स एव पवनः । अवनताङ्गीनां विनम्रगात्रीणाम् । मानभङ्गाय कल्पते कामोद्दीपकत्वादिति भावः । अत्र पूर्ववाक्यस्थस्य पवन इति जातिवाचक-पदस्य उत्तरवाक्ये स इत्यनेन परामर्शादन्वयः सुघटितो भवति इति दीपका-६लंकारः । शास्त्रे वायोः एकपञ्चाशद्व्यक्तिकथनात् तत्सामान्यवाचकः पवनशब्दो जातिवाचकः । अत एतत् जातिदीपकम् ॥ ९८ ॥

क्रियादीपकमुदाहरति—**चरन्तीति** । कस्यचिच्चक्रवर्तिनः नृपस्य वर्णन-मेतत् । ते दन्तिनः चतुरम्भोधिवेलोद्यानेषु चरन्ति । अनेन सार्वभौमत्वं सूचितम् । ३ते गुणाश्च चक्रवालाद्रिकुञ्जेषु लोकालोकपर्वतकुञ्जेषु । कुन्दभासः कुन्दकुसुमस्येव भाः कान्तिः येषां ते । तादृशाः गुणाः चरन्ति । अनेन गुणानां विश्वव्यापित्वं सूचितम् । अत्र चकारेण परामृष्टायाः चरन्तीतिक्रियायाः पूर्ववाक्यवदुत्तरवाक्यो-६पकारकत्वात् क्रियादीपकमेतत् । अत्र केचित् दन्तिनः इत्यस्य दिग्दन्तिनः इत्यर्थं स्वीकृत्य ते इति षष्ठ्यन्तपदस्य तत्संबन्धविरहेणैवार्थं प्रदर्शयन्ति । परं राजवर्णानुगुणः प्रथमानिर्दिष्ट एवार्थः इति नो भाति ॥ ९९ ॥

गुणदीपकमुदाहरति—**श्यामला इति** । दिशः दश दिशः । प्रावृषेण्याभिः प्रावृट्कालसंभूताभिः । प्रावृष एण्य इति प्रावृट्शब्दात् भवार्थे एण्यप्रत्ययः ।

---

१ स एव नतगात्रीणाम्. कपा.

**भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥ १०० ॥**
**विष्णुना विक्रमस्थेन दानवानां विभूतयः ।**
**क्वापि नीताः कुतोप्यासन्नानीता दैवतर्द्धयः ॥ १०१ ॥**
**इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।**
**वाक्ययोर्दर्शयिष्यामः कानिचित् तानि तद्यथा ॥ १०२ ॥**
**नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।**
**बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥ १०३ ॥**

३ जीमूतपङ्क्तिभिः मेघराजिभिः । श्यामलाः मलिनाः । भुवश्च सुकुमाराभिः नवशाद्वल-राजिभिः कोमलनूतनतृणहरितीकृतप्रदेशैः । श्यामलाः । अत्र श्यामलाः इति गुण-वाचकपदेन दिशः इति पदस्य तथा चकारेण भुवः इत्यस्य च संबन्धात् इदं ६ गुणदीपकम् ॥ १०० ॥

द्रव्यदीपकमाह—**विष्णुनेति** । विक्रमस्थेन त्रिपादविक्रममाचरता त्रिवि-क्रमेण । विष्णुना दानवानां बलिप्रभृतीनाम् । विभूतयः संपदः । क्वापि नीताः लयं ३ प्रापिता इत्यर्थः । तथा दैवतर्द्धयः इन्द्रादीनां श्रियः । कुतोपि आनीताः । अवि-तर्कितमेव संपादिता इत्यर्थः । आसन्निति शेषः । अत्र विष्णुशब्दस्य व्यक्तिवाचक-तया द्रव्यत्वम् । तच्च पूर्ववाक्यस्थितं काकाक्षिन्यायेन अनुषङ्गेन वा अपरत्रान्वेति ६ इति द्रव्यदीपकम् ॥ १०१ ॥

उक्तानि आदिदीपकानि मध्यान्तदीपकानि दर्शयामः इति प्रतिजानीते—**इत्यादीति** । इति पूर्वोक्तप्रकारेण आदिदीपकानि उक्तानि । वाक्यान्तरसंबध्य-३ मानजातिक्रियागुणद्रव्यवाचकानां पदानां प्रथमवाक्ये निवेशितत्वात् । एवम् अनेनैव प्रकारेण अन्यत्र परामृश्यमानजात्यादिपदनिवेशेन मध्यान्तवाक्ययोरपि कानिचित् तानि दीपकानि दर्शयिष्यामः । तद्यथा तानि यथा । एतद्वक्ष्यमाणो-६ दाहरणार्थम् ॥ १०२ ॥

मध्यवाक्यगतं जातिदीपकमुदाहरति—**नृत्यन्तीति** । कलापिनः मयूराः । निचुलो वेतसवृक्षः तस्य उत्सङ्गे अधोभूमौ नृत्यन्ति । तथा गायन्ति केकाशब्दं ९ कुर्वन्ति । तथा पयोदेषु सजलमेघेषु । हर्षाश्रुगर्भिणीः आनन्दबाष्पपरिपूर्णाः । दृशो

मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।
चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥ १०४ ॥
जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् ।
चलं च तडितां दाम बलं कुसुमधन्वनः ॥ १०५ ॥

बध्नन्ति आसक्ताः कुर्वन्ति । अत्र वाक्यान्तरैरन्वितं कलापिन इति जातिवाचकपदं मध्यवाक्यवर्ति इति मध्यगतं जातिदीपकम् ॥ १०३ ॥

क्रियागतं मध्यदीपकमुदाहरति—**मन्दो गन्धवह इति** । प्रवासिनां विरहिपान्थानाम् । मन्दः मृदुः । गन्धवहः सुरभिवातः । क्षारः क्षतपतितक्षारवत् ३क्लेशकरः । जायते । इन्दुश्च वह्निः वह्निरिव संतापकरः जायते । चर्चा अङ्गचर्चनं तदर्थो यश्चन्दनः शीतलचन्दनरस इत्यर्थः तस्य पातः संबन्धः । शस्त्रपातः शस्त्रप्रहारः । जायते । अत्र सर्ववाक्यान्वयिनः जायते इति क्रियापदस्य मध्यवाक्यगतत्वात् ६मध्यवाक्यगतं क्रियादीपकमेतत् । किं च रूपकमपि । अत उभयोः संसृष्टिसंकरः । मध्यगतं गुणद्रव्यदीपकं श्रीप्रेमचन्द्रशर्माण इत्थं दर्शयन्ति । यथा—

तडिद्भिर्वारिवाहाणां योगः स्त्रीभिः प्रवासिनाम् ।
९ लताभिः पादपानां च समायाते घनागमे ॥ इति ।

अत्र योगः संयोगः स च गुणः । मध्यवाक्यगतेन च सर्ववाक्यदीपनात् गुणगतं मध्यदीपकमिदम् । तथैव—

१२ मुहुर्विश्वं संसृजति बिभर्ति च मुहुर्हरिः ।
मुहुश्च नाशं नयति बालक्रीडनकौतुकी ॥ इति ।

अत्र हरिर्द्रव्यम् । तच्च मध्यवाक्यगतमिति मध्यगतं द्रव्यदीपकम् । इति ॥१०४॥

अन्तवाक्यगतजातिदीपकमुदाहरति—**जलमिति** । जलधरैः मेघैः उद्गीर्णं वान्तम् । जलं वृष्टिजलम् । गृहशिखण्डिनां प्रासादस्थितमयूराणाम् । कुलं समूहः । ३चलं चञ्चलम् । तडितां विद्युताम् । दाम सन्दानम् । एतत् त्रयं कुसुमधन्वनः मदनस्य । बलं सैन्यम् । अत्र बलमिति जातिवाचकेन अन्त्यवाक्यस्थितेन पदेन वाक्यत्रये समन्वयात् एतत् अन्तगतं जातिदीपकम् ॥ १०५ ॥

---

१ चलत्तडिल्लतादामुज्ज्वलं. अ.

त्वया नीलोत्पलं कर्णे स्मरेणास्त्रं शरासने ।
मयापि मरणे चेतस्त्रयमेतत् समं कृतम् ॥ १०६ ॥
शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः ।
स च रागस्य रागोपि यूनां रत्युत्सवश्रियः ॥ १०७ ॥
इत्यादिदीपकत्वेपि पूर्वपूर्वव्यपेक्षिणी ।

अन्तदीपकं क्रियागतमुदाहरति—**त्वयेति** । त्वया कर्णे नीलोत्पलम् । स्मरेण शरासने अस्त्रम् । मयापि मरणे चेतः चित्तम् । एतत् त्रयं समं युगपत् । ३कृतम् । मानिनीं प्रति नायकस्योक्तिरियम् । अत्र चरमवाक्यस्थेन कृतमिति क्रियावाचकेन इतरवाक्यसंबन्धात् क्रियागतमन्त्यदीपकमिदम् । गुणद्रव्यगतमन्त्यवाक्यदीपकं श्रीप्रेमचन्द्रशर्माणः दर्शयन्ति । यथा—

६ इदमुज्जृम्भते बिम्बं भानोस्तापयितुं जगत् ।
ममेव हृदयं चण्डि मुखं च तव लोहितम् ॥

ममेव हृदयं लोहितमित्यत्र लोहितं आरक्तं अनुरक्तमित्यर्थः । अत्रान्त्यवाक्यगतं ९लोहितमिति गुणपदं वाक्यद्वयं दीपयति ।

सत्यं विश्वं संतपति सत्यं कर्षति वै रसान् ।
तमांसि तु निहन्तीति प्रार्थनीयोदयो रविः ॥

१२अत्र रविरिति द्रव्यपदं सर्वाणि वाक्यानि दीपयति । इति द्रव्यगतमन्त्यवाक्यदीपकम् ॥ १०६ ॥

मालादीपकमुदाहरति—**शुक्ल इति** । शुक्लः पक्षः मासस्य प्रथमः पक्षः । श्वेतार्चिषः चन्द्रस्य । वृद्ध्यै परिपोषाय । भवति । सः श्वेतार्चिः पञ्चशरस्य मदनस्य । ३वृद्ध्यै भवति । स च पञ्चशरः रागस्य अनुरागस्य । वृद्ध्यै भवति । रागोपि यूनां तरुणानाम् । रत्युत्सवश्रियः विलासोत्सवलक्ष्म्याः । वृद्ध्यै भवति ॥ १०७ ॥

उदाहरणं विशदयति—**इतीति** । इति एवम् । आदिदीपकत्वेपि वृद्ध्यै इति सर्ववाक्यानुषक्तपदस्य प्रथमवाक्यस्थितत्वेन आदिदीपकसद्भावेपि । पूर्वपूर्वव्यपे३क्षिणी स्वोपकारकत्वेन पूर्वपूर्ववाक्यमपेक्षमाणा । वाक्यमाला उत्तरीयो वाक्यसमूहः । प्रयुक्ता ग्रथितः । इति एवं मालावैचित्र्यानुगतत्वात् इदं मालादीपकं मतम् ।

वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥ १०८ ॥

अवलेपमनङ्गस्य वर्धयन्ति बलाहकाः ।
कर्शयन्ति तु[2] घर्मस्य मारुतोद्धूतशीकराः ॥ १०९ ॥

अवलेपपदेनात्र बलाहकपदेन च ।
क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम् ॥ ११० ॥

शिष्टानामिति भावः । तथा च पूर्ववाक्यसापेक्षोत्तरवाक्येषु जात्याद्यन्यतमपदा-
६नुषङ्गो मालादीपकम् इति फलितम् । इदं सर्ववाक्येष्वनुषज्यमानं सापेक्षवाक्यस्थ-
मेवेति नाग्रहः । अत एव प्रकाशकारेण मालादीपकस्य—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
९ देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

१२इति निरपेक्षवाक्यगतेनापि आसादितम् इति क्रियावाचकेन सर्वेषां वाक्यानां
दीपनात् मालादीपकोदाहरणं दत्तम् । भोजस्तु अत्र भावलक्षणाक्षिप्तस्य भाव-
विशेषस्य द्वितीयपादे यत् संक्षेपेणाभिधानं तदेतत् चक्रवालाद्रिणेव मालादीपकेन
१५विस्तारवता वेष्टितमितीदं चक्रवालं नाम दीपकस्य भेदः इत्याह ॥ १०८ ॥

विरुद्धार्थदीपकमुदाहरति—**अवलेपेति** । बलाहकाः मेघाः । **अनङ्गस्य**
अवलेपं दर्पम् । वर्धयन्ति । मारुतोद्धूतशीकराः वायूत्क्षिप्तजलकणाः । बलाहक-
३विशेषणमेतत् । घर्मस्य ग्रीष्मस्य । अवलेपं कर्शयन्ति कृशं कुर्वन्ति । अत्र हेतु-
र्मारुतोद्धूतशीकरा इति ॥ १०९ ॥

उदाहरणं व्याख्याति—**अवलेपेति** । अत्र अस्मिन्नुदाहरणे अवलेपपदेन
कर्मभूतेन बलाहकपदेन कर्तृभूतेन च विरुद्धक्रिये वर्धनकृशीकरणरूपे संयुक्ते
६सामानाधिकरण्यं प्रापिते । एवं च विरुद्धक्रिययोर्वर्धनकृशीकरणरूपयोरपि एक-
स्मिन् कर्तरि कर्मणि च संबन्धेन वैचित्र्यविशेषात् विरुद्धदीपकमिदम् । एतच्च
आदिवाक्यस्थावलेपबलाहकपदाभ्याम् उत्तरवाक्यसमन्वयात् आदिदीपकम् ।

१ स्मृतम्. अ; विदुः. कपा. २ च. क.

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य[1] मे प्राणानसौ जलधरावली[2] ॥ १११ ॥
अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥ ११२ ॥
हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।
दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥ ११३ ॥

तथैव च अवलेपम् इति गुणवाचकं बलाहक इति जातिवाचकम् इति गुणजातिगतयोस्तयोः संकरः ॥ ११० ॥

एकार्थदीपकमुदाहरति—**हरतीति** । असौ जलधरावली मेघपङ्क्तिः । आशानां दिशाम् । आभोगं विस्तारम् । हरति । ज्योतिषां नक्षत्राणाम् । गणं समूहम् । गृह्णाति स्वस्मिन् निगूहति । मे प्राणांश्च आदत्ते हरति ॥ १११ ॥

उदाहरणं विशदयति—**अनेकेति** । अत्र अस्मिन्नुदाहरणे । यतः जलधरावल्या अन्तवाक्यगतेन तत्पदेन एकैव क्रिया अदर्शनरूपा । अनेकशब्दोपादानात् अनेकाः बहवः ये शब्दाः हरणग्रहणादानरूपाः क्रियावाचकाः तेष उपादानात् स्वीकारात् । हेत्वर्थे पञ्चमी । दीप्यते निर्व्यूढान्वयेनोज्ज्वलीक्रियते । तस्मात् अनेकपदप्रतिपाद्यस्य एकार्थस्य दीपनादेकार्थदीपकमिदम् । विभिन्नक्रियाणामेककारकसंबन्धरूपं नवीनैरङ्गीकृतं कारकदीपकम् अस्माद्भिन्नमेव । एकार्थानेकक्रियाभावात् । कारकदीपकं प्रकाशे दर्शितं यथा—

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ (७७८ पत्रे )

इति ॥ ११२ ॥

श्लिष्टार्थदीपकमाह—**हृद्येति** । हृद्यः निदाघसंतापदूरीकरणेन मनोरमः गन्धवहः वायुर्यत्र इति जीमूतपक्षे । हृद्यः घ्राणातर्पकः गन्धः दानोदकगन्धः तं वहन्ति धारयन्ति इति हृद्यगन्धवहाः गजाः । तुङ्गाः उच्चाः । तमालानामिव श्यामला मलिना त्विट् येषां ते तमालश्यामलत्विषः । उभयत्र समानम् । एतादृशा

१ चास्य. अ. २ °वलिः. अ.

**अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां तथा ।**
**भ्रमणेनैव संबन्ध इति श्लिष्टार्थदीपकम् ॥ ११४ ॥**
**अनेनैव प्रकारेण शेषाणामपि दीपके ।**

जीमूताः मेघाः । दिवि आकाशे । भ्रमन्ति पर्यटन्ति । भुवि च एते मतङ्गजाः दन्तिनः ॥ ११३ ॥

उदाहरणं विवृणुते--**अत्रेति** । धर्मैः हृद्यगन्धवहत्वादिधर्मैः अभिन्नानाम् एकशब्दप्रतिपाद्यत्वेन भेदशून्यानाम् । तत्र प्रथमविशेषणे एकशब्दप्रतिपाद्यत्वम् ३उत्तरत्र एकार्थत्वमिति ज्ञेयम् । अभ्राणां तथा दन्तिनां भ्रमणेनैव भ्रमन्ति इति क्रिययैव । संबन्धः वाक्यद्वये तस्या एव संबन्धात् । इति श्लिष्टशब्दप्रतिपाद्यसाधारणधर्मवतोर्जीमूतमतङ्गजयोः कर्त्रोर्भ्रमन्तीति क्रियया दीपनात् इदं श्लिष्टार्थ-६दीपकम् । तत्र हृद्यगन्धवहा इत्यत्र शब्दश्लेषः अपरत्रार्थश्लेषः ॥११४॥

दीपकमुपसंहरति--**अनेनेति** । अनेनैव प्रकारेण एकत्रान्वितेन पदस्य वाक्यान्तरसमन्वयरूपवैचित्र्यमुपजीव्य विविधदर्शितरचनावैचित्र्येण शेषाणामपि ३उक्तेष्वशिष्टानामपि । विकल्पानां प्रकाराणाम् । आवलिसंपुटप्रभृतीनाम् । अवगतिः यथायथं निवेशो । विधातव्या कर्तव्यः । तथा चोक्तं भोजराजेन—

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली ।
६ संपुटं रसना माला चक्रवालं च तद्भिदाः ॥ इति ।

तत्र अर्थावृत्तिः पदावृत्तिरुभयावृत्तिः इत्येतानि आचार्यदण्डिना आवृत्यलंकारनाम्ना अग्रे एव दर्शितानि । ततः आवली यथा—

९ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं
१२ न विद्मस्तत् तत्त्वं वयमिह हि यत् त्वं न भवसि ॥ इति ।

संपुटं यथा—

नवपल्लवेषु लोलति घूर्णति विटपेषु चलति शिखरेषु ।

---

१ हस्तिनामपि. कपा.

विकल्पानामवंगतिर्विधातव्या विचक्षणैः ॥ ११५ ॥

॥ इति दीपकचक्रम् ॥

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।
दीपकस्थान एवेष्टमलंकारत्रयं यथा ॥ ११६ ॥

१५ स्थापयति स्तबकेषु चरणे वसन्तलक्ष्मीरशोकस्य ॥ इति ।

अत्र अशोकस्य नवपल्लवेषु वसन्तलक्ष्मीः लोलति । अशोकस्य विटपेषु वसन्तलक्ष्मीः घूर्णते । अशोकस्य शिखरेषु वसन्तलक्ष्मीः चलति । अशोकस्य स्तबकेषु वसन्तलक्ष्मीः १८चरणे स्थापयति । इति संपुटक्रमेण मिथः वसन्तलक्ष्मीरशोकः इति पदे द्रव्यवाचिनी संबध्यमाने मिथः संबद्धे एव दीपयतः । तदेतत् संपुटं नाम दीपकम् । रसनादीपकं मालादीपकं प्रायः समानमेव । तच्च मूले दर्शितेन मालादीपकेन ज्ञातप्राय-२१मिति न पुनः उदाहरणेन दर्शयामः । चक्रवालमपि न तथा मनोहारि । तत्-स्वरूपं प्राक् दर्शितमेव । इति दीपकचक्रं दीपकसंघः ॥ ११५ ॥

दीपकनिरूपणानन्तरं तत्सजातीयमावृत्त्यलंकारं लक्षयति—**अर्थावृत्ति-रिति** । दीपकस्थाने दीपकप्रसङ्गे । अर्थावृत्तिः पदावृत्तिः उभयावृत्तिः इति एत-३त्संज्ञकम् अलंकारत्रयम् । इष्टम् । कविभिरिति शेषः । यथेति उदाहरणप्रदर्शनाय । अर्थावृत्तिर्नाम एकस्य वाक्यार्थस्य पुनः वाक्यान्तरेणोपस्थापनम् । पदावृत्तिः एकस्मिन् वाक्ये स्थितानां पदानां पुनर्वाक्यान्तरे तेन रूपेणोत्थितिः । उभयावृत्तिः ६वाक्यार्थपदयोरेकतरस्मिन् वाक्ये निर्दिष्टयोः पुनरन्यत्रोभयोरुत्थितिः । दीपके वाक्यान्तरे अपेक्षितपदस्यानुपादानेन पूर्ववाक्यस्थपदस्यानुषङ्गेणान्वयनिर्वाहः । अत्र तु तादृशवाक्ये तत्तत्पदस्यार्थस्य वा पुनरुपादाने आवृत्तिरलंकारः इति ९युक्तमेवोक्तं दीपकस्थानत्वम् । अस्य दीपकस्थाने एव इष्टमिति । एतेन पदावृत्ति-रूपस्यास्य अलंकारस्य यमकादौ अतिप्रसङ्गः निराकृतः । यमके हि द्वितीयपदानु-पादाने अन्यवाक्यीयपदसंबन्धस्य अनुपपन्नत्वेन विवक्षितार्थानुपपत्तिः । यत्र १२पूर्ववाक्यीयपदस्यानुषङ्गः उपयुक्तः तत्र यमकालंकारबाधेन पदावृत्तेरेव प्रवृत्तिरिति प्रेमचन्द्रशर्माणः । भोजराजस्तु एते त्रयोपि अलंकाराः दीपकविशेषा एव इति मन्यते इत्यनुपदमेव दर्शितमस्माभिः ॥ ११६ ॥

---

१ अपि गतिः. अ; अनुगतिः. कपा. २ °रित्यपि. कपा.

विकसन्ति कद[1]म्बानि स्फु[2]टन्ति कु[3]टजद्रुमाः ।
उन्मीलन्ति च कन्दल्यो दलन्ति क[4]कुभानि च ॥ ११७ ॥
उत्कण्ठयति मेघानां माला वृ[5]न्दं कलापिनाम् ।
यूनां चोत्कण्ठयत्ये[6]ष मानसं मकरध्वजः ॥ ११८ ॥
जित्वा विश्वं भवानत्र[7] विरहत्यवरोधनैः ।
विरहत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ ११९ ॥

॥ इत्यावृत्तिचक्रम् ॥

अर्थावृत्तिमुदाहरति—**विकसन्तीति** । कदम्बानि कदम्बमुकुलानि । कुटजद्रुमाः स्फुटन्ति पुष्पविकासेनोद्भिन्ना इव भवन्ति । कन्दल्यः उन्मीलन्ति पुष्पोद्गमेन विकसिता भवन्ति । ककुभानि अर्जुनवृक्षसुमनानि । दलन्ति । प्रावृड्-वर्णनमिदम् । अत्र विकसन्तीत्यादिपदानि भिन्नरूपाण्यपि एकार्थानि इति अर्थस्यावृत्तेरर्थावृत्तिरलंकारः ॥ ११७ ॥

पदावृत्तिमुदाहरति—**उत्कण्ठेति** । मेघानां माला मेघपङ्क्तिः । कलापिनां मयूराणाम् । वृन्दं समूहम् । उत्कण्ठयति स्वदिदृक्षया उद्ग्रीवं करोति । एष मकर-ध्वजः कुसुमेषु यूनां तरुणानाम् । मानसम् उत्कण्ठयति विलासोत्सुकं विदधाति । मेघालोकस्योद्दीपकत्वादिति भावः । अत्र उत्कण्ठयतीतिपदस्य उभयत्र भिन्नार्थक-त्वेन केवलं पदावृत्तिः इति पदावृत्तिरलंकारः ॥ ११८ ॥

उभयावृत्तिं दर्शयति—**जित्वेति** । अत्र मर्त्यलोके । भवान् विश्वं भूमण्डलम् । जित्वा अवरोधनैः अन्तःपुरिकाभिः । विहरति । ते रिपुवर्गः दिवं गतः सन् । युद्धे सन्मुखमरणादिति भावः । अप्सरोभिः विहरति । अत्र विहरतीति पदस्य तदर्थस्य च आवृत्तिः । वाक्यद्वयेपि द्वयोरेकार्थकत्वात् । अतः उभयावृत्तिरलंकारः । ननु ईदृशस्थले अनेनैव कविना अग्रे निर्दिष्टस्य ( ३. १३५ ) एकार्थरूपदोषस्यापात इति वाच्यमिति चेन्न । तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् । उद्देश्यप्रति-निर्दिश्यतायाम् एकप्रयोगस्यैव युक्तत्वम् । यथा—उदेति सविता ताम्रस्ताम्र

---

१ सरोजानि. कपा. २ स्फुरन्ति. अ. ३ कुटजोद्गमाः. कपा. ४ कुमुदानि. अ, कपा. ५ वर्ग. कपा. ६ °यत्येव. ब; °यत्यद्य. कपा. ७ भवानद्य. कपा.

**प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।**

**अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥ १२० ॥**

**अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः ।**

एवास्तमेति च । इत्यादौ । प्रकृते च राजोद्देशेन विधेयस्य विहरणस्य रिपुवर्गो-
९द्देशेनापि विधेयत्वमित्युद्देश्यप्रतिनिर्देश्यत्वम् । इति सर्वं समुचितमिति सुधीभिरा-
कलनीयम् ॥ ११९ ॥

आक्षेपालंकारं लक्षयति—**प्रतिषेधोक्तिरिति** । प्रतिषेधस्य निषेधस्य
उक्तिः कथनमात्रम् । न तु वास्तवः प्रतिषेधः । तात्त्विके प्रतिषेधे चमत्काराभावाद-
३लंकारत्वाभावप्रसङ्गः । तथा च प्रतिषेधाभासः आक्षेपः इत्यर्थः । इयं च प्रति-
षेधोक्तिः अर्थविशेषाविष्करणायेति बोध्यम् । तत एव वैचित्र्यातिशयः । तथा
चायं प्रतिषेधः इष्टार्थस्यैव । तत एव विशेषेण वैचित्र्यात् । उक्तं च अग्निपुराणे—

६ शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्जनम् ।

प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ॥

तमाक्षेपं ब्रुवन्त्यत्र । ( ३४५. १५ ) इति ।

९उक्तिरित्यस्य प्रतिपादनमिति सामान्यार्थः । न तु शब्देनैव प्रतिपादनमपेक्ष्यते ।
व्यङ्ग्यप्रतिषेधेपि आक्षेपालंकारस्येष्टत्वात् । अन्यस्य अध्यवसानाभावान्नात्रापह्नुते-
राशङ्का ॥ अयमाक्षेपः त्रैकाल्यापेक्षया नाम त्रैकालिकवस्तुगतत्वेन त्रिविधः
१२वर्तमानाक्षेपः अतीताक्षेपः भविष्यदाक्षेपश्चेति । प्रकाशकारादयस्तु भूतभविष्य-
तोरेव प्रतिषेधोक्तिराक्षेपः इति मन्वते । तदुक्तम्—

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।

१५ वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥ इति ।

अस्य च त्रिविधस्याक्षेपस्य । आक्षेप्यभेदानन्त्यात् आक्षेप्याः निषेधनीयाः तेषां भेदाः
धर्मधर्मिकार्यकारणादयः तेषाम् आनन्त्यात् । अनन्तता अपरिच्छिन्नता । ज्ञेया । १२०

तत्र त्रिविधाक्षेपमध्ये आदौ वृत्ताक्षेपमुदाहरति—**अनङ्ग इति** । अनङ्गः
स्मरः । पञ्चभिः पुष्पैः तत्सरूपैः इषुभिः । विश्वं व्यजयत ।

---

१ पौष्पैः. क. २ विजयते°. अ.

इत्यसंभाव्यमथवा विचित्रा वस्तुशक्तयः ॥ १२१ ॥
इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह ।
प्रवृत्तैव यदाक्षिप्ता वृत्ताक्षेपः स ईदृशः ॥ १२२ ॥
कुतः कुवलयं कर्णे करोषि कलभाषिणि ।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥ १२३ ॥

३अनङ्गस्य—

अरविन्दमशोकं च चूतं च नवमालिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥

६इति पञ्चकुसुमबाणत्वं प्रसिद्धमेव । इति पञ्चकुसुमेषुभिः विश्वविजयः अनुपपत्त्या असंभवनीय एव । तथा हि मदनः स्वयमनङ्गः बाणाः पञ्चैव ते च पुष्पमयाः जेतव्यं च विश्वं ब्रह्मेन्द्रादिधीरवीरैः परिपूर्णम् इति विजयः अश्रद्धेय एव इति ९विजयानुपपत्तिं स्थिरीकृत्य निषेधति—**अथवेति**। अथवा वस्तूनां पदार्थानां शक्तयः कार्यसंपादनसामर्थ्यानि । विचित्राः अचिन्त्यस्वरूपाणि । न ताः अन्वयव्यतिरेकादिना तर्कयितुं शक्या इति भावः । ततश्च संभवत्येव पञ्चेषुभिर्विश्वविजयः ॥१२१॥

उदाहरणे आक्षेपलक्षणं संगमयति—**इतीति**। एवंप्रकारेण अनङ्गस्य जयः विश्वजयः तस्य अयोगः असंभवः तद्विषये बुद्धिः । हेतुबलात् अनङ्गपञ्चेषु-३त्वादिहेतुसामर्थ्यात् । प्रवृत्ता एव उत्पन्ना एव । यत् आक्षिप्ता विचित्रा वस्तुशक्तयः इति वस्तुमाहात्म्योद्घोषेण प्रतिषिद्धा । स ईदृशः । वृत्ताक्षेपः वृत्तस्य अतीतस्य आक्षेपः वृत्ताक्षेपः इत्यर्थः । अत्र केचित् हेतुबलात् इति विचित्रा वस्तुशक्तिरिति ६हेतुसामर्थ्यात् आक्षिप्ता प्रतिषिद्धा इति हेतुबलादिति पदमाक्षेपे योजयन्ति । अत्र प्रतिषेधो वाचकशब्दायोगात् व्यङ्ग्य एव ॥ १२२ ॥

वर्तमानाक्षेपमुदाहरति—**कुत इति**। हे कलभाषिणि मधुरालापे । कर्णे कुवलयं कुतः किमिति करोषि । मा कुरु इत्यर्थः । अस्मिन् कर्मणि कर्णशोभा-३संपादनकर्मणि अथवा उत्पलभूषाविन्यासेन नायकचेतोहरणकर्मणि । अपाङ्गं नेत्रप्रान्तम् । अपर्याप्तमसमर्थं मन्यसे किम् । अत्र कर्णे कुवलयधारणस्य कुत इत्यनेन कैमर्थ्येन प्रतिषेधो ज्ञेयः ॥ १२३ ॥

---

१ तदीदृशम् अ.

**स वर्तमानाक्षेपोयं कुर्वत्येवासितोत्पलम् ।**
**कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते ॥ १२४ ॥**
**सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ लप्स्यसे ।**
**अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा ॥ १२५ ॥**
**सोयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी ।**
**कदाचिदपराधोस्य भावीत्येवमरुन्द्ध यत् ॥ १२६ ॥**
**तव तन्वङ्गि मिथ्यैव रूढमङ्गेषु मार्दवम् ।**
**यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम् ॥ १२७ ॥**

वर्तमानाक्षेपमुदाहरणे योजयति——**स इति** । यतः काचित् नायिका । कर्णे असितोत्पलं कुर्वती एव न तु कृतवती करिष्यमाणा वा । चाटुकारेण मधुर-भाषिणा प्रियेण । एवम् कुतः इति वैफल्यप्रदर्शनेन । निषिद्धा । अतोत्र वर्तमान-कालीनस्यासितोत्पलधारणस्य निषेधात् वर्तमानाक्षेपोयं ज्ञेयः ॥ १२४ ॥

भविष्यदाक्षेपमाह——**सत्यमिति** । हे वल्लभ अन्यचुम्बनसंक्रान्तलाक्षा-रक्तेन अन्यस्य नायिकान्तररूपजन्यस्य चुम्बनेन संक्रान्ता तदधरतः संप्राप्ता या लाक्षा तया रक्तेन लोहितीभूतेन । चक्षुषा त्वं मां द्रष्टुं न लप्स्यसे मद्दर्शनं न प्राप्नोषीत्यर्थः । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति तुमुन् । एतत् सत्यं ब्रवीमि ॥ १२५ ॥

भविष्यदाक्षेपमुदाहरणेन संगमयति—**सोयमिति** । काचित् अतिमनस्विनी अत्यन्तमानिनी । नायिका । अस्य नायकस्य । कदाचित् अपराधो भावी इति तं नायकं यत् यस्मात् । एवम् अरुन्ध रुरोध । तस्मात् सोयं भविष्यदाक्षेपः । अत्र सत्यं ब्रवीमीति वाक्येन नायकस्य भविष्यन्नायिकानुरागस्य प्रतिषेधादयं भविष्यदापेक्षः ॥ १२६ ॥

इत्थमाक्षेपस्य सामान्यभेदत्रयमुक्त्वा तस्य सूक्ष्मभेदानामानन्त्यात् संपूर्ण-तया निरूपणमशक्यमिति शिष्यशिक्षार्थं कांश्चित् प्रभेदान् दिदर्शयिषुः धर्मा-क्षेपमुदाहरति——**तवेत्यादि** । तन्वङ्गि तव अङ्गेषु रूढं परिणतम् । अथवा सार्व-जनीनप्रवादगोचरम् । मार्दवं मिथ्यैव असत्यमेव । यदि सत्यं तर्हि तादृशानि तेङ्गानि मामकाण्डे सहसैव किं रुजन्ति व्यथयन्ति ॥ १२७ ॥

**धर्माक्षेपोयमाक्षिप्तमङ्गनागात्रमार्दवम् ।**
**कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥ १२८ ॥**
**सुन्दरी सा[1] न[2] वेत्येष विवेकः केन[3] जायते ।**
**प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥ १२९ ॥**
**धर्म्याक्षेपोयमाक्षिप्तो धर्मी धर्मं प्रभाह्वयम् ।**
**अनुज्ञायैव[4] यद्रूप[5]मत्याश्चर्यं विवक्षता ॥ १३० ॥**
**चक्षुषी तव रज्येते स्फुरत्यधरपल्लवैः[6] ।**
**भ्रुवौ च भुग्ने[7] न तथाप्यदुष्टस्यास्ति मे भयम् ॥ १३१ ॥**

उदाहरणं योजयति---**धर्माक्षेप इति** । यदत्र एवम् उक्तिनैपुण्येन । कामुकेन तद्विरोधिना मार्दवविरुद्धेन व्यथाकरणरूपेण । कर्मणा अङ्गनायाः शुभाङ्ग्याः । गात्राणां मार्दवम् आक्षिप्तं निषिद्धम् । तस्मादयं मार्दवधर्मस्याक्षेपात् धर्माक्षेपः ॥ १२८ ॥

धर्म्याक्षेपमुदाहरति---**सुन्दरीति** । सा प्रभाविशेषेण अनवगतस्वरूपा सुन्दरी नायिका । न वा विद्यते न वा इत्येष विवेकः निश्चयज्ञानम् । केन जायते कथं जायते । ननु प्रत्यक्षविषये कथं भ्रान्तोसीत्याह **प्रभामात्रमिति** । हि यतः । तरलं चञ्चलं सर्वतः दृष्टिविघातेन प्रसरत् । प्रभामात्रं केवलं प्रभैव दृश्यते । तस्याः प्रभायाः आश्रयः आधारो । नायिकाशरीरं न दृश्यते ॥ १२९ ॥

धर्मिण आक्षेपं दर्शयति---**धर्म्याक्षेपोयमिति** । अत्याश्चर्यं रूपं प्रभातिशयेन विस्मयावहं नायिकाया रूपम् । विवक्षता प्रतिपिपादयिषता नायकेन प्रभाह्वयं प्रभासंज्ञकं धर्मम् । नायिकाधर्मम् । अनुज्ञायैव स्वीकृत्यैव । यत् यस्मात् । धर्मी नायिकारूपः । आक्षिप्तः निषिद्धः । तस्मात् धर्म्याक्षेपोयम् ॥ १३० ॥

कारणाक्षेपमुदाहरति---**चक्षुषीति** । तव चक्षुषी नेत्रकमले । रज्येते कोपादारक्ते भवतः । अधरपल्लवः स्फुरति रोषेण कम्पते । भ्रुवौ भ्रुकुट्यौ । भुग्नौ क्रोधेन वक्रीभूतौ । तथापि एवंभूतेपि । अदुष्टस्य नायिकान्तरानुरागदोषशून्यस्य । मे भयं नास्ति ॥ १३१ ॥

---

१ वा. अ. २ भवत्येवं. ब. सा सुन्दरीयमित्येष. ड [ टीकायां ].
३ कस्य. कपा. ४ अनुज्ञायेव. कपा.
५ तद्रूपम्. कपा. ६ °पल्लवम्. अ. ७ भुग्नौ. डप.

**स एष[1] कारणाक्षेपः प्रधानं कारणं भियः[2] ।**
**स्वापराधो निषिद्धोत्र यत् प्रियेण पटीयसा ॥ १३२ ॥**
**दूरे प्रियतमः सोयमागतो जलदागमः ।**
**दृष्टाश्च फुल्ला निचुला न मृता चास्मि किं न्विदम् ॥१३३॥**

उदाहरणं विशदयति—**स एष इति** । पटीयसा चतुरेण । प्रियेण नायकेन । भियः प्रधानं कारणं स्वापराधो यत् यस्मान्निषिद्धः अतः कारणाक्षे-
३पोयम् । तथा च प्रधानकारणनिषेधः कारणाक्षेपस्य विषयः । अप्रधानकारणा-भावस्तु विभावनायाः इति आक्षेपविभावनयोर्भिन्नो विषयः कल्प्य इति केचित् । अन्ये तु चक्षुषी तव रज्येते इत्यादिकारणान्तरस्य शब्दतः प्रतिपाद्यत्वात् तस्य
६विभाव्यत्वं नास्ति । विभावनायां कारणान्तरस्य विभाव्यत्वमपेक्ष्यते । तदुक्तम्—

प्रसिद्धहेतुव्यावृत्त्या यत्किंचित् कारणान्तरम् ।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ इति ।

९तथैवात्र नास्ति मे भयम् इत्यनेन भयरूपकार्यप्रतिषेधात् कार्याक्षेपोपि इत्यपि केचित् । परमत्र पूर्वाक्षेपेण कारणनिषेधे तत्फलकथनं नास्ति मे भयमिति अतो न प्राधान्येन एष आक्षेपः चमत्कारशाली इति कारणाक्षेप एवालंकार इति भाति ।
१२शुद्धोदाहरणमाहुः श्रीप्रेमचन्द्रशर्माणः—

अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
१५ किंत्वन्येपि जना वदन्ति सुभगोप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥ इति ।

अत्रोत्तरार्धव्यङ्ग्यस्य वशीभूतपतिकत्वरूपकार्यस्य वासोरुचिरत्वादिरूपकारणा-
१८न्येवाक्षिप्तानीति ॥ १३२ ॥

कार्याक्षेपमाह—**दूरे प्रियतम इति** । प्रियतमः दूरे तिष्ठतीति शेषः । सोयं विरहिजनघातक इति प्रसिद्धः । जलदागमः वर्षाकालः । आगतः । फुल्लाः
३निचुला वेतसाः । दृष्टाः प्रत्यक्षीकृताः । एवं स्थितेपि न मृतास्मि मदनानलेन न

१ एव. कपा. २ ह्रियः. अ.

कार्याक्षेपः स कार्यस्य मरणस्य निवर्तनात् ।
तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥ १३४ ॥
न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यासि यातं[1]व्यमलमाशङ्कया[2] ते ॥ १३५ ॥
इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः ।

दग्धास्मि । किंनु इदम् अवश्यंभाविनि कार्ये कथं वैधुर्यम् । अत्याश्चर्यावहमेतत् ॥ १३३ ॥

उदाहरणं विशदयति—**कार्याक्षेप इति** । तस्य मरणस्य कारणं प्रियतमदूरावस्थानादिकम् । अथवा तत् विरहिमारकत्वेन प्रसिद्धं कारणं कारणभूतम् । ३क्त्वाप्रत्ययान्तघटितवाक्यस्य प्रधानवाक्यात् पूर्वभावित्वेन तद्घटिततच्छब्देन मरणपरामर्शः कथं स्यादिति दोषोस्मिन् पक्षे अपहृतो भवति । तच्छब्दस्य बुद्धिपरामर्शकत्वेन सकलश्लोकार्थावलोचनया अत्र मरणमेव तच्छब्देनाभिप्रेतमिति ६स्फुटं तस्य कविबुद्धिस्थमरणावेद्यत्वात् प्रथमार्थेपि न क्षतिः इत्यन्ये । उपन्यस्य प्रथमं निवेश्य । तत्कार्यस्य मरणस्य निवर्तनात् निषेधात् । सः पूर्वश्लोकोदाहृतः कार्याक्षेपः । कारणमित्यस्य प्रसिद्धकारणमित्यर्थस्वीकारे अप्रसिद्धकारणोपन्यासे ९कार्याभावो विशेषोक्तिः इति विशेषोक्तेः विषयः स्वतन्त्रो दर्शितो भवति । अन्यथा उभयोर्विषयैक्यात् दुरवस्था स्यात् ॥ १३४ ॥

अनुज्ञाक्षेपमुदाहरति—**न चिरमिति** । देशान्तरं जिगमिषुं नायकं प्रति नायिका ब्रूते न चिरमिति । तव यात्रागमनं मम तापाय विरहवेदनायै । चिरं ३बहुकालम् । न भविष्यति । अचिरादेव त्वद्विरहेण लोकयात्रायाः परिसमाप्तेः । यदि यास्यसि यातव्यम् अवश्यं गन्तव्यम् । अत्र मद्विषये शङ्कया विरहपीडितेयं कथं दुःखं सहिष्यते इति शङ्कया अलम् ॥ १३५ ॥

उदाहरणं व्याख्याति—**इतीति** । इति अनुज्ञामुखेनैव गमनानुमत्यैव । एवकारेण निषेधार्थकशब्देन निषेधस्य व्यावृत्तिः सूच्यते । केचित्तु अनुज्ञामु-३खेनैव इति मरणं सूचयन्त्यैव इत्यनेन संयोजयन्ति । कान्तस्य गतिः आक्षिप्यते

---

१ याहि त्वं. बपा. २ °यापि. बपा.

मरणं सूचयन्त्यैव सोनुज्ञाक्षेप उच्यते ॥ १३६ ॥
धनं च बहु लभ्यं ते सुखं क्षेमं च वर्त्मनि ।
न च मे प्राणसंदेहस्तथापि प्रिय मा स्म गाः ॥ १३७ ॥
इत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः ।
प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते ॥ १३८ ॥
जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा कान्त स्वावस्था तु निवेदिता ॥१३९॥

अतः सोयमनुज्ञाक्षेपः । मरणं संसूचयन्त्यैवेति गतेराक्षेपस्य हेतुः । अनिष्टस्य विधेयत्वासंभवेन प्रतिषेधपर्यवसानात् । दर्पणकारास्तु एतादृशस्थले विध्याभास-मलंकारमाहुः । तदुक्तम्---अनिष्टस्य तथार्थस्य विध्याभासः परो मतः । इति ॥ १३६ ॥

प्रभुत्वाक्षेपमाह---**धनं चेति**। अस्मिन् विदेशगमने ते धनं बहुलभ्यम्। व्यवहारनैपुण्यादिति भावः । चकारो भिन्नक्रमः । तथा च ते वर्त्मनि सुखं च क्षेमं च स्यात् । यात्रानुकूलसमयत्वात् सौराज्यत्वाच्चेति भावः । मे प्राणसंदेहोपि न त्वं सफलमनोरथोचिरादेव प्रत्यागमिष्यसीति मे दृढो विश्वासः । तथापि एवं सकलानुकूल्येपि । हे प्रिय मा स्म गाः प्रेमभावार्द्राहं न त्वां मुञ्चामि । त्वं मा गच्छ ॥ १३७ ॥

उदाहरणं विशदयति---**इत्याचक्षाणयेति**। इति एवंप्रकारेण । प्रिययात्रा-नुबन्धिनः प्रिययात्रानुकूलान् । हेतून् धनलाभादीन् । आचक्षाणया कथयन्त्या । प्रभुत्वेनैव प्रेमभावस्वाधीनपतित्वरूपसामर्थ्येनैव । रुद्धः गमनान्निवारितः । प्रियः इति शेषः । तत् तस्मात् । प्रभुत्वाक्षेपः साधनानुकूल्येन अवश्यं करणीये गमने केवलं प्रभुत्वेनैव निषेधः प्रदर्शितः इति प्रभुत्वाक्षेपः ॥ १३८ ॥

अनादराक्षेपमाह---**जीविताशेति**। हे कान्त मम जीविताशा जीवनेच्छा । बलवती धनाशापेक्षया अधिकतरा । धनलाभापेक्षया त्वत्संनिधौ चिरं जिवितु-मिच्छामि । धनाहरणाय त्वयि विदेशं गते न जीविष्यामि इति ध्वनिः । धनाशा

१ सूचयन्त्येति. अ. २ ईदृशः. कपा. ३ प्रत्याच°. बपा.
४ °सरोधिनः. अ; कपा. °नुरोधिनः. कपा. ५ त. अ.

**असावनादराक्षेपो यदनादरवद्वचः ।**
**प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥**
**गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १४१ ॥**
**इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।**
**स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥ १४२ ॥**
**यदि सत्यैव यात्रा ते काप्यन्या[1] मृग्यतां त्वया ।**

दुर्वला जीविताशापेक्षया । अतः एवं स्थिते त्वं गच्छ अथवा तिष्ठ । स्वावस्था मम भाविनी अवस्था । मरणरूपा इत्यर्थः । अथवा मम वर्तमाना मनोवृत्तिः । ६निवेदिता ॥ १३९ ॥

उदाहरणं समर्थयते—**असाविति** । इह उदाहरणे । प्रियप्रयाणं नायकस्य विदेशगमनम् । रुन्धत्या परिहरन्त्या । रक्तया अनुरागिण्या । यत् अनादरवत् गच्छ ३वा तिष्ठ वेति अनादरसूचकं वचः प्रयुक्तम् । अतः असौ अनादराक्षेपः ॥ १४० ॥

आशीर्वचनाक्षेपमुदाहरति—**गच्छेति** । हे कान्त गच्छसि चेत् यदि तत्र गमने निश्चयः तर्हि गच्छ । पन्थानः ते शिवाः कल्याणप्रदाः । सन्तु । यत्र ३भवान् गतः । भविष्यतीति शेषः । तत्रैव ममापि जन्म भूयात् भवतु । इति आशासे । त्वद्गमनानन्तरमचिरादेव त्वद्विरहवेदनया मरिष्यामि मृतायाश्च—पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् इति क्रमेणावश्यं जननं ६भवेत् । तच्च यत्र भवान् तिष्ठति तत्रैव भवतु । तथा सति पुनस्तत्र भवद्दर्शनं भविष्यतीति भावः ॥ १४१ ॥

आशीर्वचनाक्षेपं विशदयति—**इतीति** । अत्र कान्तया आशीर्वादवर्त्मना आशीः आशंसा सा चात्र सततप्रियदर्शनरूपा तस्या वादः ममापि जन्म तत्रैव ३भूयाद्यत्र गतो भवान् इति प्रकारेण कथनम् तद्वर्त्मना तद्द्वारेणैव । स्वावस्थां विरहेण मरणरूपाम् । सूचयन्त्या तया कान्तस्य यात्रागमनं निषिध्यते । आशीर्वचनस्य ममापि जन्म तत्र स्यादित्यस्य भाविमरणसूचनद्वारा कान्तयात्राया ६आक्षेपात् आशीर्वचनाक्षेपोयम् ॥ १४२ ॥

परुषाक्षेपमुदाहरति—**यदीति** । यदि ते यात्रा सत्यैव तर्हि कापि अन्या

---

१ काप्यनुयाह्यतां. कपा.

अहमद्यैव रुद्धास्मि रन्ध्रापेक्षेण[1] मृत्युना ॥ १४३ ॥
इत्येष परुषाक्षेपः परुषाक्षरपूर्वकम् ।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥ १४४ ॥
गन्ता चेद्गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।
आर्तबन्धुमुखोद्गीर्णाः[2] प्रयाणपरिपन्थिनः[3] ॥ १४५ ॥
साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते ।
प्रियप्रयाणं साचिव्यं कुर्वत्येवातिरक्तया[4] ॥ १४६ ॥

त्वद्विरहेपि जीवितुं समर्था । त्वया मृग्यतां सुखोपभोगाय अन्विष्यताम् । ननु त्वयि प्रेयस्यां सत्यां कोयमुपदेश इति चेत् कथयति । अहम् अद्यैव रन्ध्रापेक्षेण रन्ध्रस्य अपेक्षा यस्य तेन छिद्रान्वेषणतत्परेण मृत्युना रुद्धास्मि आक्रान्तास्मि ॥ १४३ ॥

उदाहरणं विशदयति—**इतीति** । प्रेमनिघ्नया प्रेमपराधीनया कान्तया । कान्तस्य यस्मात् परुषाक्षरपूर्वकम्—काप्यन्या मृग्यतां त्वया । अहमद्यैव रुद्धास्मि मृत्युना । इत्यादिकठोरार्थकवाक्यपुरःसरम् । प्रस्थानं देशान्तरप्रवासः । आक्षिप्यते निषिध्यते । तस्मात् अयं परुषाक्षेपः ॥ १४४ ॥

साचिव्याक्षेपमाह—**गन्ता चेदिति** । भवान् गन्ता चेत् निश्चितभाविगमनश्चेत् । गन्तेति लुटः रूपम् । तूर्णं द्रुतम् । गच्छ । किमिति त्वरयसे मामिति चेत् कथयति । आर्तबन्धुमुखोद्गीर्णाः आर्ताः मद्विनाशेन दुःखिताः ये बन्धवः तैः मुखोद्गीर्णाः मुखोच्चारिताः । प्रयाणपरिपन्थिनः यात्राप्रतिबन्धकाः । रवाः मन्मरणसूचका ध्वनयः । ते कर्णौ कर्णयुगुलम् । पुरा यान्ति यास्यन्ति । यावत्पुरानिपातयोर्लट् इति पुरा शब्दयोगे भविष्यति लट् ॥ १४५ ॥

उदाहरणं नामाक्षरेण योजयति—**साचिव्याक्षेप इति** । यदत्र यस्मात् अत्र एतादृशवर्णनायाम् । साचिव्यं कुर्वत्या इव तूर्णं गच्छ इति साहाय्यम् आचरन्त्येव । अनुरक्तया प्रेमासक्तया । प्रियप्रयाणं नायकगमनम् । प्रतिषिध्यते स्वमरणसूचनेन निषिध्यते । तस्मादेष साचिव्याक्षेपः साहाय्यपूर्वकनिषेधादिति भावः ॥ १४६ ॥

---

१ रन्ध्रान्वेषण. अ, कपा; °न्वेषणमृ°. बपा. २ °जनोद्गीर्णाः. अ.
३ प्रतिपथिनः. अ, प्रतिबन्धिनः. कपा. ४ कुर्वत्यव. अ.

**गच्छेति वक्तुमिच्छामि मत्प्रियं[1] त्वत्प्रियैषिणी ।**
**निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥१४७॥**
**यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि ।**
**विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात्[2] ॥ १४८ ॥**
**क्षणं[3] दर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।**
**प्रेम्णः प्रयाणं त्वं[4] ब्रूहि मया तस्येष्टमिष्यते ॥ १४९ ॥**

यत्नाक्षेपमाह--**गच्छेति** । हे मत्प्रिय जीवितेश्वर । त्वत्प्रियैषिणी त्वत्प्रियानुसरणशीला । अहमस्मि । अतः गच्छ त्वं याहि इति वक्तुमिच्छामि । परं मुखाद्वाणी मा गा इति निर्गच्छति । अन्तर्भावानुसारित्वात् वाग्देव्या इति भावः किं करोमि नास्ति अत्र कोप्युपायः । गच्छेति वक्तुं कृतप्रयत्नापि विफलपरिश्रमा भवामीत्यर्थः । अत्र त्वत्प्रियं मत्प्रियैषिणी इत्यपि पाठः साधुः । अर्थस्तु स्पष्ट एव ॥ १४७ ॥

नामार्थं उदाहरणेन संयोजयति--**यत्नाक्षेपः इति** । अनिष्टवस्तुनि गच्छेति गमनविधानरूपानिष्टकार्ये । कृतस्यापि यत्नस्य विपरीतफलोत्पत्तेः विपरीतं मा गा इति वचननिःसरणरूपं यत् फलं तस्य उत्पत्तेः हेतोः । आनर्थक्योपदर्शनात् आनर्थक्यस्य गच्छेति वक्तुं कृतो यः प्रयत्नः तस्य विफलतायाः उपदर्शनात् मा गा इति विरुद्धवचननिःसरणेनावगमात् । यत्नाक्षेपः प्रियानुसरणकृतयत्नस्य आक्षेपः वैफल्येन निषेधः । इति यत्नाक्षेपालंकारः ॥ १४८ ॥

परवशाक्षेपमाह--**क्षणेति** । हे नाथ । क्षणं पलमात्रम् । त्वद्दर्शनस्य त्वन्निरीक्षणस्य विघ्नः व्यत्ययः यस्मात् तस्मै । पक्ष्मस्पन्दाय पक्ष्मणां नेत्रलोम्नां स्पन्दाय निमेषोन्मेषरूपाय । कुप्यतः निमेषमप्यसहमानस्य । प्रेम्णः अनुरागं प्रति । कर्मणि षष्ठी । प्रयाणं ब्रूहि निवेदय । ननु त्वमेव प्रार्थये किमिति प्रेमप्रार्थनामुपदिशसि चेत् तत्राह । मया प्रेमाधीनयेति भावः । तस्य प्रेम्णः । इष्टम् अभिलषितम् । इष्यते वाञ्छयते । प्रेमपराधीनाया मम प्रार्थनयालम् । यदि तस्यानुमतिः तर्हि गच्छ । नाहं प्रतिकूला भवामि । परं त्वद्दर्शनस्य क्षणविच्छेदासहिष्णुः स प्रेमा कथमनुज्ञां दास्यति । इति त्वमेव विचारय । सर्वथा तन्नानुमंस्यते इति भावः ॥ १४९ ॥

---

१ त्वत्प्रियं मत्प्रियै°. च,क,ड,प. २ °सूचनात्. कपा. ३ क्षणदर्शन°. क. ४ ते. क.

**सोऽयं परवशाक्षेपो यत् प्रेमपरतन्त्रया ।**
**तया निषिध्यते यात्रान्यस्यार्थस्योपसूचनात् ॥ १५० ॥**

**सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम ।**
**यदक्तनेत्रां कन्दर्पः प्रहर्ता मां न पश्यति ॥ १५१ ॥**

**दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।**
**पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥ १५२ ॥**

**प्रवृत्तैव प्रयामीति वाणी वल्लभ ते मुखात् ।**
**अयतापि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम् ॥ १५३ ॥**

अलंकारसंज्ञार्थं योजयति—**अयमिति** । यत् यस्मात् । प्रेमापरतन्त्रया स्वस्य अत्यन्तं प्रेमपराधीनया । तया नायिकया । अन्यस्य स्वापेक्षया भिन्नस्य । प्रेमानुज्ञारूपस्य । अर्थस्य वस्तुनः । उपसूचनात् । कथनात् । यात्रा निषिध्यते । अतोयं परावशाक्षेपः ॥ १५० ॥

उपायाक्षेपमाह—**सहिष्ये इति** । हे नाथ विरहं त्वद्वियोगम् । सहिष्ये । किंतु तदर्थं अदृश्याञ्जनं अदर्शनसंपादकं कज्जलविशेषम् । देहि । किं तेनेति चेदाह । येन अञ्जनेन अक्ते म्राक्षिते नेत्रे यस्याः सा ताम् । माम् प्रहर्ता प्रहारशीलः । ताच्छील्ये तृन् । कन्दर्पः न पश्यति न पश्येत् । तेन च त्वद्विरहे स मां न पीडयेत् इति भावः । त्वयि प्रयाणाभिमुखे कन्दर्पबाधैव मां तरलीकरोति । तन्निवर्तनक्षमश्चेत् त्वं सुखेन याहीत्यर्थः ॥ १५१ ॥

दुष्करं दुर्घटम् । जीवनोपायं कामकर्तृकविलोकननिवारणाय अदर्शनसंपादकसिद्धाञ्जनदानरूपम् । उपन्यस्य कथयित्वा । पत्युः प्रस्थानं यात्रा । उपरुध्यते तादृशाञ्जनप्राप्तेरसंभवात् प्रतिषिध्यते । ईदृशम् एवंप्रकारकम् । उपायाक्षेपम् उपायेन अशक्योपायेन आक्षेपः निषेधः तम् । उपायाक्षेपम् । कवयः आहुरिति शेषः ॥१५२

रोषाक्षेपमुदाहरति—**प्रवृत्तैवेति** । हे वल्लभ दयित । ते मुखात् प्रयामि गच्छामि । इति वाणी प्रवृत्तैव निःसृतैव । अत्र एवकारेण क्तप्रत्ययेन च अतिविस्मयो ध्वन्यते । मां प्राणेश्वरीति मन्यमानस्य तव वदनादीदृशं प्रयामीति वचनं

---

१ अयं. क. २ यात्रेत्यस्यार्थ°. अ; यात्रेत्यन्यार्थस्योपदर्शनात्. ब, ड,प. यात्रा तस्यार्थ०. क; यात्रा तस्यार्थस्यैव सूच°, बपा; तस्यार्थस्योपदर्शनात्. कपा. ३ यद्रक्तनेत्रां. अ. ४ प्रहर्तुं. ब,ड,प.

रोषाक्षेपोयमुद्रिक्तस्नेहनिर्यन्त्रि[1]तात्मना ।
संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते[2] ॥ १५४ ॥
मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता ।
बुद्ध्वा वक्ति प्रियं[3] दृष्ट्वा किं चिरेणागतो भवान् ॥१५५॥
ई[4]ति तत्कालसंभूतमूर्छयाक्षिप्यते गतिः ।
कान्तस्य कातराक्ष्या यन्मूर्छाक्षेपः स ईदृशः ॥ १५६ ॥

प्राणवियोगवचनमिवातिदुःसहम् । तत्तु त्वयोच्चारितमेव । अतस्त्वया सर्वथा प्रेमबन्धः शिथिलीकृतः । तस्मात् इदानीं प्रयामीति उक्तेरनन्तरम् । मन्दप्रेम्णा त्वया । अयतापि अगच्छतापि । मम किमस्ति किं प्रयोजनम् । त्वच्छिथिलप्रेम्णा सर्वथा दूये इति भावः ॥ १५३ ॥

संज्ञार्थं घटयति—**रोषाक्षेपोयमिति** । उद्रिक्तः अतिशयस्य परं काष्ठां गतः यः स्नेहः प्रेमा तेन निर्यन्त्रितः विह्वलीकृतः आत्मा अन्तःकरणं यस्याः सा तया । संरब्धया संदर्शितकोपावेशया । प्रियारब्धम् प्रियेण आरभ्यमाणम् । प्रयाणं गमनम् । यत् यस्मान्निषिध्यते तस्मात् अयं रोषाक्षेपः रोषेण आक्षेपः रोषाक्षेपः । अस्मिन्नुदाहरणे निषेधो व्यङ्ग्यः ॥ १५४ ॥

मूर्छाक्षेपमुदाहरति —**मुग्धेति** । मुग्धा सुन्दरी । कान्तस्य यात्रोक्तिश्रवणा-देव प्रयाणवचनश्रवणादेव न तु प्रयाणदर्शनात् । मूर्छिता मोहं प्राप्ता । बुद्ध्वा मूर्छापगमात् संज्ञां लब्ध्वा । प्रियं च दृष्ट्वा वक्ति किं चिरेण आगतो भवानिति । कथं चिरकालेन त्वमागतोसि इति पृच्छतीत्यर्थः ॥ १५५ ॥

संज्ञार्थं योजयति—**इतीति** । इति एवंप्रकारेण । तत्कालसंभूतमूर्छया तत्काले प्रयाणकाले एव संभूता संजाता या मूर्छा मोहः तया । करणे तृतीया । कातराक्ष्या चकितनयनया । कान्तस्य गतिः आक्षिप्यते निषिध्यते । स कवि-प्रसिद्धः । मूर्छाक्षेपः मूर्छया आक्षेपः । ईदृशः अस्तीति शेषः । इदं श्लोकद्वयं प्राचीनेषु बहुषु पुस्तकेषु न दृश्यते । मुद्रितपुस्तकेषु तु वर्तते । न क्रमविसंगतं चातो व्याख्यातमिति ज्ञेयम् ॥ १५६ ॥

१ °र्यन्त्रणा°. अ. २ निवार्यते. कपा. ३ प्रियाश्लिष्टा. कपा. ४ १५५–१५६ श्लोकौ अ पुस्तके न स्तः । तथा कपुस्तके १५२ श्लोकानन्तरं वर्तेते ।

**नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् ।**
**[1]त्वद्द्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥ १५७ ॥**
**असाव[2]नुक्रोशाक्षेपः सानुक्रोशमिवोत्पले ।**
**व्यावर्त्य कर्म तद्योग्यं शोच्यावस्थोप[3]दर्शनात् ॥ १५८ ॥**
**अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।**
**मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥ १५९ ॥**

सानुक्रोशाक्षेपमाह—**नाघ्रातमिति** । त्वद्द्विषां त्वदरीणाम् । स्त्रीभिः नीलमुत्पलं नाघ्रातम् नास्वादितम् । कर्णे भूषणार्थं न कृतम् । तथा मधुनि मद्ये । सुवासार्थं नार्पितम् । दीर्घिकासु वापीषु । तत् विशीर्णम् अनुपभोगेन कालपरिणामेन क्षयं गतम् । त्वदरिनृपस्त्रीणां विधवात्वात् वने गमनाद्वा इति भावः ॥१५७

उदाहरणं विशदयति -- **असावनुक्रोशे इति** । उत्पले सानुक्रोशमिव सदयमिव । तद्योग्यं कर्म स्त्रीजनकृतम् आघ्राणादिकम् । व्यावर्त्य प्रतिषिध्य । शोच्यावस्थोपदर्शनात् शोच्यावस्था विशीर्णत्वरूपा तस्याः प्रकाशनात् । असौ अनुक्रोशाक्षेपः । अनुक्रोशपूर्वकं नाघ्रातमित्यादिनिषेधदर्शनादसौ सानुक्रोशाक्षेपः । अपरे तु नीलोत्पलानुक्रोशेन त्वद्द्विषस्तत्र न सन्तीत्याक्षेपसूचनादनुक्रोशाक्षेपः । व्यपदेशकस्य व्यपदेश्यं प्रति साक्षात् परंपरया वा हेतुतासद्भावस्यौचित्यादिति व्याख्यान्ति ॥ १५८ ॥

श्लिष्टाक्षेपमाह--- **अमृतात्मनीति** । अमृतस्येव आत्मा स्वभावः स्वरूपं वा यस्य । तादृशे परमाह्लादके इत्यर्थः मुखपक्षे । चन्द्रपक्षे अमृतमेव आत्मा स्वरूपं यस्य । अमृतमये इत्यर्थः । पद्मानां द्वेष्टरि सौन्दर्यातिशयेनेति मुखपक्षे । चन्द्रपक्षे तत्संकोचनेन । स्निग्धे तारके अक्षिकनीनिके यस्मिन् इति प्रथमपक्षे । अन्यत्र स्निग्धाः अनुरक्ताः तारकाः अश्विन्यादयो यस्मिन् । भार्यात्वादिति भावः । एवं तव मुखेन्दौ सति अपरेण इन्दुना प्रसिद्धेन चन्द्रमसा । किं प्रयोजनम् न किमपीति भावः ॥ १५९ ॥

---

१ तद्द्विषां. ब. २ सानुक्रोशोयमाक्षेपः. बपा. इत्यनुक्रोशाक्षेपः. बपा.
३ ०पवर्णनात्. क.

इति मुख्येन्दुराक्षिप्तो गुणान् गौणेन्दुवर्तिनः ।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः[1] ॥ १६० ॥

अर्थो न संभृतः कश्चिन्न विद्या काचिदर्जिता ।
न तपः संचितं किंचिद्गतं च सकलं वयः ॥ १६१ ॥

असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।
अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह[2] गतायुषा ॥ १६२ ॥

किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ १६३ ॥

इत्ययं संशयाक्षेपः संशयो यन्निवर्त्यते[3] ।

उदाहरणं विशदयति—**इतीति** । एवंप्रकारेण इह रचनायाम् । गौणेन्दुवर्तिनः अमुख्येन्दुवर्तिनः । गुणान् अमृतात्मत्वादीन् । तत्समान् मुख्येन्दुसमान् । इह दर्शयित्वा श्लिष्टविशेषणोपन्यासमहिम्ना प्रकल्प्य । मुख्येन्दुः उपमानभूतेन्दुः । आक्षिप्तः प्रतिषिद्धः । इति श्लिष्टपदविन्यासेन आक्षेपः श्लिष्टाक्षेपः ॥ १६० ॥

अनुशयाक्षेपमाह— **अर्थो नेति** । कश्चित् रत्नसुवर्णादिरूपः । अर्थः न संचितः । काचिदपि पदवाक्यप्रमाणादिरूपा । विद्या न संपादिता । किंचिदपि तपः सान्तपनादिकम् । न संभृतम् । सकलं वयः आयुः । गतम् ॥ १६१ ॥

संज्ञां विवृणोति— **असाविति** । यस्मात् अनुशयोत्तरम् अनुशयः पश्चात्तापः तस्मादनन्तरम् । अर्थार्जनादेः व्यावृत्तिः विमुखता । दर्शिता । अतः असौ अनुशयाक्षेपः । अनुशयपूर्वकः आक्षेपः अनुशयाक्षेपः ॥ १६२ ॥

संशयाक्षेपमुदाहरति—**किमयमिति** । अयं वियति दृश्यमानः । शरदम्भोदः शरत्कालीनः मेघः । किम् । अथवा हंसकदम्बकम् शरत्समये मानसादागच्छतां हंसानां समूहः । किम् । नूपुरं तुलाकोटि तस्य संवादि शिञ्जितसदृशम् । रुतं ध्वनिः । श्रूयते । तत् तस्मात् । अयं तोयदः न ॥ १६३ ॥

अभिधां विशदयति—**इतीति** । अस्पृष्टघनजातिना अस्पृष्टा घनजातिर्येन

---

१ °विधिः. अ.  २ दर्शितेयं. अ.  ३ निवार्यते. अ, क.

**धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥ १६४ ॥**

**चित्रमाक्रान्तविश्वोपि विक्रमस्ते न तृप्यति[1] ।**

**कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥ १६५ ॥**

**अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्यते[2] ।**

**विस्मयोर्थान्तरस्येह दर्शनात् तत्सधर्मणः ॥ १६६ ॥**

**न स्तूयसे[3] नरेन्द्र त्वं ददासीति कदाचन ।**

**स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥ १६७ ॥**

तेन । मेघेषु अनुपलभ्यमानेन । हंससुलभेन हंसेषु सुलभतयावगतेन । धर्मेण नूपुर-
३संवादिरुतरूपेण । यत् यस्मात् । संशयः प्रकृते मेघसंशयः । निवर्त्यते । अतोयं
संशयाक्षेपः संशयस्य आक्षेपः संशयाक्षेपः ॥ १६४ ॥

अर्थान्तराक्षेपमुपन्यस्यति—**चित्रमिति** । ते विक्रमः पराक्रमः । आक्रा-
न्तविश्वोपि आक्रान्तं व्याप्तं विश्वं येन तादृशोपि । न तृप्यति तृप्तो न भवति ।
३इति आश्चर्यमेतत् । अर्थान्तरविन्यासेन परिहरति— **कदा वेति** । वा अथवा ।
उदीर्णस्य उद्दीप्तस्य । हविर्भुजः अग्नेः । तृप्तिः कदा दृश्यते न कदापि । हविषा
कृष्णवर्त्मा हि भूय एवाभिवर्धते । इति भावः ॥ १६५ ॥

उदाहरणं विस्पष्टयति—**अयमिति** । इह उदाहरणे । तत्सधर्मणः विक्रम-
समानधर्मस्य । अर्थान्तरस्य उदीर्णस्य हविर्भुजस्तृप्त्यभावरूपस्य । दर्शनात्
३णिजन्तमेतत् । प्रक्रान्तः प्रस्तुतः । विस्मयः यन्निवार्यते यस्मादपाह्रियते । अतोयम्
अर्थान्तरेण आक्षेपः अर्थान्तराक्षेपः ॥ १६६ ॥

हेत्वाक्षेपमाह—**न स्तूयसे इति** । हे नरेन्द्र त्वं ददासि इति कदाचन
कदापि । न स्तूयसे । जनैरिति शेषः । यतः त्वद्धनं अर्थिनः याचकाः । स्वमेव
३मत्वा आत्मीयमिति ज्ञात्वा । गृह्णन्ति । अनेन राज्ञो लोकोत्तरो दानमहात्म्यातिशयो
ध्वन्यते ॥ १६७ ॥

---

१ शाम्यति ब, ड, प. २ निवर्त्यते. अ. ३ श्रूयसे. अ.

इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः ।
अनयैव दिशान्येपि[1] विकल्पाः शक्यमूहितुम् ॥ १६८ ॥

॥ इत्याक्षेपचक्रम् ॥

ज्ञेयः सोर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन ।

आक्षेपालंकारमुपसंहरति--**इतीति** । इत्येवमादिः एतत्प्रकारकः । आक्षेपः हेत्वाक्षेपः । प्रस्तुतस्य नरेन्द्रस्तवस्य स्वमेव मत्वा गृह्णन्ति इति हेतुमुपन्यस्य ३आक्षेपात् निषेधात् हेत्वाक्षेपः हेतुना आक्षेपः हेत्वाक्षेपः । पूर्वं दर्शितः कारणाक्षेपस्तुः कारणस्य आक्षेपः न तु कारणेन इति उभयोर्भेदः । अनयैव दिशा पद्धत्या । अन्येपि विकल्पाः भेदाः । ऊहितुं कल्पितुम् । शक्यम् । प्रज्ञावद्भिरिति ६शेषः ॥ १६८ ॥

अर्थान्तरन्यासं लक्षयति--**ज्ञेय इति** । किंचन किमपि । वस्तु प्रकृतम् । प्रस्तुत्य उपन्यस्य । तस्य प्रस्तुतस्य । अनुपपद्यमानतया संभाव्यस्य । साधनं ३सोपपत्तिकत्वेनोपपादनं तत्र समर्थस्य । अन्यस्य कस्यचिदप्रस्तुतस्येति सूचितम् । न्यासः निवेशः । सोयमर्थान्तरन्यासः अलंकारः । अत्र प्रस्तुत्येति क्त्वाप्रत्ययेन प्रथमतः प्रस्तुतस्योपन्यासः पश्चात्समर्थकस्याप्रस्तुतस्येति प्राप्तम् । परं प्रायिक६मेतत् । वैपरीत्येनापि दर्शनात् । यथा—

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥

९अत्र सायंकालवर्णनस्य प्रस्तुतत्वात् अवलम्बनाय दिनभर्तुरित्युत्तरार्धवाक्यार्थः प्रस्तुतः समर्थ्यः पूर्वार्धवाक्यार्थः तत्समर्थकः । भोजराजस्तु अमुं विपरीतार्थान्तरन्यासमाह ॥ तथा च प्रस्तुतस्य पूर्वत्र परत्र वा यत्रकुत्रापि स्थितस्य अ१२प्रस्तुतेन समर्थनमर्थान्तरन्यासः इति फलितम् । अत्र समर्थ्यसमर्थकयोः सामान्यविशेषभावः आदरणीयः इति प्रकाशकारादयः । कार्यकारणभावे तु तन्मते स काव्यलिङ्गस्य विषयः । दण्डिना तु काव्यलिङ्गो न स्वीकृतः । अतः स उभयत्रापि १५अर्थान्तरन्यासं स्वीकरोति । स हि ज्ञापकः निष्पादकः समर्थश्चेति हेतुं त्रिधा विभजति । तत्र ज्ञापको अनुमानालंकारस्य विषयः । निष्पादकः काव्यलिङ्गालंकारस्य ।

---

१ °न्योऽपि विकल्पः शक्य ऊहि° ब. क. ड. प.

**तत्साधनसमर्थस्य न्यासो योन्यस्य वस्तुनः ॥ १६९ ॥**
**विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान् ।**
**अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्ययः ॥ १७० ॥**
**इत्येवमादयो भेदाः प्रयोगेष्वस्य[1] लक्षिताः ।**
**उदाहरणमालैषां रूपव्यक्त्यै[2] निदर्श्यते[3] ॥ १७१ ॥**

समर्थकश्चार्थान्तरन्यासस्य । सामान्यविशेषभावोपि साधर्म्यवैधर्म्येण द्विधा भवति । १८ततश्च सामान्यं विशेषेण विशेषः सामान्येन स च साधर्म्येण वैधर्म्येण च इति चतुर्विधोर्थान्तरन्यासः प्रकाशे उक्तः । उदाहरणानि तत एव ज्ञेयानि । यस्मिन् वाक्यार्थे न विशेषसामान्यभावः न वा कार्यकारणभावः तत्र साधारणधर्मयोर- २१भिन्नत्वे प्रतिवस्तूपमा भिन्नयोस्तयोर्बिम्बानुबिम्बत्वे दृष्टान्तः । इमौ द्वावपि आचार्य- दण्डिना उपमायामेव अन्तर्भावितौ । एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः । इत्यादौ तु अर्थान्तरन्यासद्वयस्य संसृष्टिः आचार्यदण्डिनो मतेन २४ज्ञेया । तेन यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः । इति दीक्षितादिभिर्ल- क्षितः विकस्वरालंकारः न पृथक् गणनामर्हतीति बोद्धव्यम् । उद्योतकारास्तु अनुपपद्यमानतया संभाव्यमानस्यार्थस्योपादानार्थं यत् अर्थान्तरं न्यस्यते सोर्था- २७न्तरन्यासः । दृष्टान्ते तु सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यते इति ततो भेदः । साक्षात् व्याप्त्यादेरनभिधानादनुमानतो भेदः । इत्याहुः ॥ १६९ ॥

कथितसामान्यलक्षणस्य अर्थान्तरन्यासस्य समर्थकार्थभेदेन संभवतो भेदान् निर्दिशति — **विश्वव्यापीति** । विश्वव्यापी सर्वव्यापकः सर्वत्र संभवार्हः । ३विशेषस्थः वस्तुविशेषे एव विद्यमानः । श्लेषाविद्धः समानवस्तूनामेव संश्लेषदर्श- नात् अत्र श्लेषशब्देन वस्तुसाम्यं ग्राह्यम् । तेन आविद्धः युक्तः । अविरुद्धार्थसमर्थ केन समर्थितः इत्यर्थः । विरोधवान् प्रकृतविरोधी । अयुक्तकारी प्रकृत्यैवानुचित- ६करणशाली । युक्तात्मा औचित्ययुक्तः । युक्तायुक्तः युक्तोपि अयुक्तकारी । विपर्ययः एतद्विरुद्धः अयुक्तोपि युक्तकारी ॥ १७० ॥

**इत्येवमिति** । अस्य अर्थान्तरन्यासस्य इत्येवमादयः एवं प्रकाराः । भेदाः समर्थकार्थविशेषाः । प्रयोगेषु कविप्रयोगेषु । लक्षिताः दृष्टाः । एषां रूपव्यक्त्यै ९स्वरूपावगमाय । उदाहरणमाला निदर्श्यते ॥ १७१ ॥

---

१ विकल्पेषु. कपा. २ रूपव्यक्तौ क. ड. प. ३ निगद्यते. क.

भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ १७२ ॥
पयोमुचः परीतापं हरन्त्येव[1] शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ १७३ ॥
उत्पादयति लोकस्य प्रीतिं मलयमारुतः ।
ननु दाक्षिण्यसंपन्नः[2] सर्वस्य भवति प्रियः[3] ॥ १७४ ॥

क्रमेणोदाहरन्नादौ विश्वव्यापिनमुदाहरति--**भगवन्तौ इति** । भगवन्तौ षडैश्वर्यसंपन्नौ । जगन्नेत्रे विश्वनयनभूतौ । सर्वपदार्थप्रकाशकत्वात् । सूर्यश्च चन्द्र-
३माश्च सूर्याचन्द्रमसौ । अपि शब्देन अस्तानर्हत्वं सूच्यते । अथवा एतादृशौ अस्तं गच्छतः अन्येषां का कथा इति सूच्यते । गच्छत एव इत्यनेन अयं क्रमः प्रचलित एव न विश्रान्तः इति ध्वन्यते । अस्यार्थस्य असंभवमाशङ्क्य समर्थयति--
६**नियतिरिति** । नियतिः दैवम् । केन लङ्घ्यते न केनापि इत्यर्थः । अत्र समर्थकस्य चतुर्थपादवाक्यार्थस्य ब्रह्मादिपिपीलिकापर्यन्तानां सर्वेषां नियत्यधीनत्वात् विश्वव्यापित्वम् । तेन सामान्यार्थेन पादत्रयगतविशेषार्थः समर्थितः । अतो विश्वव्यापी
९नामायमर्थान्तरन्यासः ॥ १७२ ॥

विशेषस्थमर्थान्तरन्यासमुदाहरति---**पयोमुच इति** । पयोमुचः वारिदाः । शरीरिणां प्राणिनाम् । परीतापं निदाघार्कसंतापम् । हरन्ति एव । अमुमर्थं समर्थयते--
३महतामात्मलाभः जन्मग्रहणम् । परदुःखोपशान्तये परेषां दुःखस्य उपशान्तये शमनाय । अस्तीति शेषः । ननु इति निश्चये । अत्र च सर्वमहद्वर्णनपरेणोत्तरवाक्यार्थेन महद्विशेषाणां पयोमुचां वर्णनपरस्य पूर्ववाक्यार्थस्य समर्थनं तेनार्थान्तर-
६न्यासालंकारः । तत्र समर्थकवाक्ये महतामेवैतादृशी रीतिर्न प्राणिमात्रस्य इति विशेषस्थता बोध्या ॥ १७३ ॥

श्लेषाविद्धमुदाहरति --**उत्पादयतीति** । दाक्षिण्यसंपन्नः सारल्यादिगुणान्वितः । दाक्षिण्येन दक्षिणदिक्संबन्धेन संपन्नश्च । सर्वस्य प्रियः भवति ।
३अत्रापि समर्थ्यसमर्थकयोः सामान्यविशेषता । तत्र समर्थकस्य दाक्षिण्यसंपन्नः

---

१ हरन्त्येते. कपा. २ दक्षिण०. अक. ३ आवहति प्रियम्. कपा.

**जगदानन्दयत्येष मलिनोपि निशाकरः।**
**अनुगृह्णाति हि परान् सदोषोपि द्विजेश्वरः॥ १७५॥**
**मधुपानकलात् कण्ठान्निर्गतोप्यलिनां ध्वनिः।**
**कटुर्भवति कर्णस्य कामिनां पापमीदृशम्॥ १७६॥**
**अयं मम दहत्यङ्गमम्भोजदलसंस्तरः।**

सर्वस्य प्रियः भवति इति वाक्यार्थस्य दाक्षिण्यसंपन्नस्य प्रियभवनं समुचितमेवेति श्लिष्टानुविद्धोर्थान्तरन्यासः॥ १७४॥

विरोधवन्तमुदाहरति—**जगदानन्दयतीति**। एष मलिनोपि कलङ्कितोपि। सदोषश्चेति ध्वनिः। निशाकरः जगदान्दयति आह्लादयति। ननु मलिनस्य ३कथमेतदिति सामान्येन समर्थयति—**अनुगृह्णातीति**। द्विजेश्वरः ब्राह्मणश्रेष्ठः। सदोषोपि मलिनाचरणोपि। परान् अन्यान्। अनुगृह्णाति। अत्र सदोषः दोषा रात्रिः तया सहितः सदोषः। द्विजेश्वरः चन्द्रः। चन्द्रोपि द्विजराजत्वेन प्रसिद्धः। तेन च ६द्विजेश्वर इति सामान्यरूपेण निशाकर आह्लादयति इति विशेषार्थस्य समर्थनम्। मलिनत्वाह्लादनत्वयोर्विरुद्धधर्मत्वात्तयोरेकत्र संवेशः समर्थनीयः। स च सदोषद्विजेश्वररूपसामान्येन समर्थितः। एवं विरुद्धार्थस्य समर्थनादयं विरोधवानर्थान्त-९रन्यासः। समर्थ्यसमर्थकयोः सामान्यविशेषभावः। तत्र च समर्थकवाक्यार्थः सदोषत्वानुग्राहकत्वरूपविरुद्धधर्माभ्यामवस्कन्दितः। अतः विरोधवदर्थान्तरन्यासोयम्॥ १७५॥

अयुक्तकारिणमुदाहरति—**मधुपानेति**। मधुपानं मकरन्दास्वादः तेन कलात् मधुरात्। अलीनां भ्रमराणाम्। कण्ठात् निर्गतोपि ध्वनिः गुञ्जारवः। ३कामिनां विरहिकामुकानाम्। कर्णस्य कटुर्भवति कर्णारुंतुन्दो भवति। एतत् सामान्येन समर्थयति—**पापमीदृशमिति**। ईदृशं सुखदवस्तुनोपि दुःखदत्वम्। अत्र कामिनां पापस्वरूपत्वं विषयासक्तत्वेन ज्ञेयम्। अत्र पापस्य दुःखकारित्वरूपसामा-६न्येनार्थेन मधुरस्यापि भ्रमरध्वनेः दुःखदत्वरूपविशेषार्थस्य समर्थनादर्थान्तरन्यासः। तत्र च सामान्यपापरूपसमर्थकस्य मधुरध्वनेः कटुत्वसंपादनादयुक्तकारिता।१७६।

युक्तात्मानमुदाहरति—**अयमिति**। अयम् अम्भोजदलसंस्तरः कमलदलैः

---

१ आह्लादयति. कपा.

**हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥ १७७ ॥**

**क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।**

**मलिनाचरितं कर्म सुरभेर्नन्वसांप्रतम् ॥ १७८ ॥**

**कुमुदान्यपि दाहाय[1] किमयं[2] कमलाकरः ।**

कल्पिता शय्या । मम अङ्गं दहति । शीतलानां कमलदलानां कथमेतदिति अनु-
३पपत्तिं परिहरति—**हुताशनेति** । यः हुताशनस्य अग्नेः प्रतिनिधिः प्रतिकृतिः ।
अनेन उज्ज्वलारक्तकमलानां अग्निप्रतिनिधित्वं सूच्यते । स दाहात्मा दाहस्वरूपः ।
इति युज्यते । ननु इति निश्चये । अत्र हुताशनप्रतिनिधित्वरूपसामान्येन
६तत्प्रतिनिधिविशेषस्य अम्भोजदलसंस्तरस्य अङ्गदाहकसमर्थनात् सामान्येन
विशेषस्य समर्थनम् । तत्र च समर्थके हुताशनप्रतिनिधौ दाहकत्वस्य समुचित-
त्वात् युक्तात्मायमर्थान्तरन्यासः ॥ १७७ ॥

युक्तायुक्तमुदाहरति—**क्षिणोत्विति** । शीतांशुः शीतकिरणो मृगाङ्कः ।
मां कामं पर्याप्तम् । क्षिणोतु हिनस्तु । परं वसन्तः माधवः । मां किं दुनोति कथं
३पीडयति । नैतद्युक्तमिति सामान्येन दर्शयति । सुरभेः श्रेष्ठस्य । वसन्तस्यापि ।
मलिनाचरितं मलिनैः पापैराचरितम् । तथा मलिनेन कलङ्कितेन चन्द्रेणाचरितम् ।
कर्म परपीडकत्वम् । असांप्रतम् अयुक्तम् । अत्र सामान्येन विशेषस्य समर्थनम् ।
६तत्रोत्कृष्टस्य सुरभेरपकृष्टकर्माचरणे युक्तेन अयुक्ताचरणम् इति युक्तायुक्तता तन्ना-
मार्थान्तरन्यासः ॥ १७८ ॥

विपर्ययं दर्शयति—**कुमुदान्यपीति** । विरहिण्या उक्तिरियम् । कुमुदा-
न्यपि चन्द्रविकासीनि कमलान्यपि । दाहाय जायन्ते । अपिशब्देन शीतांशुरागिणां
३तेषां दाहकत्वमल्याश्चर्यास्पदमिति ध्वनितम् । अयं कमलाकरः सूर्यविकासिकमल-
समूहः । दाहाय भवेत् इति किं वक्तव्यम् । जगद्दाहकसूर्यानुरक्तत्वेन तस्य विरहि-
जनदाहकत्वं नाश्चर्यास्पदम् । उक्तार्थमेवार्थान्तरेण द्रढयति— **नेति** । इन्दुगृह्येषु इन्दु-
६पक्षीयेषु । उग्रेषु सत्सु । सूर्यगृह्यः सूर्यपक्षीयः । मृदुः न भवेत् । अत्र सामान्येन
विशेषस्य समर्थनम् । तत्र समर्थ्यवाक्ये कुमुदे अयुक्तकारिता कमले युक्तकारिता

---

१ तापाय. अ. २ किमङ्ग. क.

**न हीन्दुगृह्येषूग्रेषु सूर्यगृह्यो मृदुर्भवेत् ॥ १७९ ॥**

**॥ इत्यर्थान्तरन्यासचक्रम् ॥**

**शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।**

इति अयुक्तयुक्तकारिता । तथा च अयुक्तं च युक्तं च अयुक्तयुक्तं तस्य कारिता ९इति समासः । एतानि सर्वाण्यपि साधर्म्येणोदाहरणानि । वैधर्म्येण यथा——

वक्षोजकुम्भनिवहाद्वनिताजनानां
गीष्मर्तुना विनिहितं ग्रहराजपुत्री ।
१२ तापं पितुः स्वमहरत् तरलोर्मिहस्तै-
रन्यं न याति हि विभूतिरपत्यभाजाम् ॥

अत्र सामान्येन अपत्यभाजां विभूतिरन्यं न याति इति निषेधमुखेन ग्रहराजपुत्री १५तापं पितुरहरत् इति विधिमुखस्य वाक्यार्थस्य समर्थनात् वैधर्म्येणायमर्थान्तर-न्यासः ॥ १७९ ॥

व्यतिरेकं लक्षयति——**शब्दोपात्त इति** । द्वयोर्वस्तुनोः अर्थात् उपमानोपमेययोः । सादृश्ये शब्दोपात्ते साधारणधर्मवाचकेवादिप्रयोगेण बोधिते । ३किंवा तुल्यसमादिशब्दप्रयोगे लक्षणया ज्ञाते । अथवा साधारणधर्मवाचकस्यानुपादाने पूर्वापरविमर्शेनावगते सति । तत्र सादृश्ये । लक्षणया सादृश्यसंबन्धिनोः प्रतियोग्यनुयोगिभूतयोरुममानोपमेययोः । यद्भेदकथनं केनचिद्धर्मविशेषेण उपमाना-६द्रुपमेयस्योत्कर्षाय भेदप्रतिपादनम् । स व्यतिरेकः । भवतीति शेषः । स च उपमेयोत्कर्षोपमानापकर्षोपादानाद् द्वयोरेकस्य वानुपादानाच्चतुर्विधः । उपमानोपमेययोर्भेदकथनं च क्वचित् नञादिभिः क्वचिद् विरुद्धधर्मोपादनमात्रेण संभवति । ९क्वचिच्च तात्पर्यार्थपर्यालोचनया भवति । एतत् सर्वमुदाहरणेषु दर्शयामः । केचित्तु उपमानादुपमेयस्य भेदकथने उपमेयस्योत्कर्षकथनवदपकर्षकथनेनापि व्यतिरेकं मन्यन्ते उदाहरन्ति च——

१२ क्षीणः क्षीणोपि शशी भूयो भूयोभिवर्धते नित्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥

तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते[1] ॥ १८० ॥

धैर्यलावण्यगाम्भीर्य[2]प्रमुखैस्त्वमुदन्वतः ।

गुणैस्तुल्योसि[3] भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥

इत्येकव्यतिरेकोयं धर्मेणैकत्रवर्तिना ।

प्रतीति[4]विषयप्राप्तेर्भेदस्योभयवर्तिनः ॥ १८२ ॥

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।

अत्र उपमेययौवनस्योपमानचन्द्रापेक्षया अपकर्षः । परं नैतदाचार्यदण्डिसंमतम् । १५उदाहरणेषु तादृशभेदोदाहरणस्यानुपलम्भात् । तथैव मम्मटजगन्नाथादयोपि उपमानादुपमेयस्य व्यतिरेकः आधिक्यं तेन भेदश्चेत् तर्हि इममलंकारं स्वीकुर्वन्ति। अपकर्षे तु न । उक्तोदाहरणे व्यतिरेकविषये तु तेषामेवमाशयः । यदत्र उपमेये १८यौवनस्थैर्याधिक्यमपेक्षितम् । अतः अस्त्येवोपमानादुपमेयस्याधिक्यम् । व्यतिरेके-स्मिन् भेदकथनं स्पष्टतया अपेक्ष्यते । तेन मुखमिव चन्द्रः इति प्रतीपे उपमानी-करणप्रयुक्तस्याधिक्यस्य मुखे गम्यत्वेपि विशेषतस्तद्बोधकशब्दाभावान्नातिव्याप्तिः २१इति ॥ १८० ॥

व्यतिरेकसामान्यलक्षणमभिधाय तत्प्रभेदान् दर्शयति । तत्रादौ एकव्यति-रेकमाह—**धैर्येति** । धैर्यं धृतिः अचाञ्चल्यं च । लावण्यं सौन्दर्यं लवणमयत्वं च । ३गाम्भीर्यम् गूढाशयत्वं गभीरत्वं च । एते प्रमुखा येषु तैः । गुणैः सरसत्वादिभिः । उदन्वतः महोदधेः । त्वं तुल्योसि । भेदस्तु वैधर्म्यं तु । ते ईदृशेन अतिसुन्दरकर-चरणवदनवता वपुषा शरीरेणैवास्ति ॥ १८१ ॥

**इत्येकेति** । एकत्र उपमेये एव । वर्तिना स्थितेन । धर्मेण सुन्दरवपुष्मत्व-रूपेण । उभयवर्तिनः उपमानोपमेयवर्तिनः । प्रतियोग्यनुयोगित्वेनेति भावः । भेदस्य ३वैधर्म्यस्य । प्रतीतिविषयप्राप्तेः प्रतीयमानत्वात् हेतोरयं एकव्यतिरेकः । एकमात्र-गतधर्मस्य द्वयोर्वैधर्म्यबोधकत्वादिति भावः । अत्र विरुद्धधर्मोपादानेन भेद-प्रतीतिः ॥ १८२ ॥

उभयव्यतिरेकमाह—**अभिन्नेति** । अम्बुराशिः भवांश्च उभावपि अभि-

---

१ उच्यते. कपा. २ °माहात्म्य°. अ. ३ तुल्योपि. क. ४ प्रतीत°. अ.

असावञ्जनसंकाशस्त्वं तु चामीकरद्युतिः ॥ १८३ ॥

उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ ।

कार्ष्ण्यं पिशङ्गता चोभौ यत् पृथग्दर्शिताविह ॥ १८४ ॥

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।

अयं तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥ १८५ ॥

स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।

त्वेलौ अपरित्यक्तमर्यादौ गम्भीरौ च । किंतु असौ अम्बुराशिः । अञ्जनसंकाशः कज्जलवन्मलिनाकारः । नीलजलत्वादिति भावः । त्वं तु चामीकरद्युतिः सुवर्णप्रभोसि ॥ १८३ ॥

**उभयेति** । अयं उभयव्यतिरेकः । यत् यतः । उभयोः उपमानोपमेयभूतयोः समुद्रनृपयोः । भेदकौ भेदसाधनभूतौ । गुणौ कार्ष्ण्यपिशङ्गतारूपौ । पृथक् दर्शितौ स्तः । अत्रापि विरुद्धधर्मोपादानेन भेदप्रतीतिः ॥ १८४ ॥

सश्लेषव्यतिरेकमुदाहरति—**त्वमिति** । त्वं समुद्रश्च । दुर्वारौ त्वमनभिभवनीयः स च अवार्यजलवेगः । त्वं महासत्त्वः महासामर्थ्यवान् स च महाजन्तुविशिष्टः । त्वं सतेजसः द्युतिमान् स च वाडवाग्निविशिष्टः । अयं तु युवयोर्मध्ये भेदः । सः समुद्रः जडात्मा मूर्खः डलयोरभेदात् जलस्वरूपः शीतलश्च । भवान् पटुः चतुरः तीक्ष्णश्च ॥ १८५ ॥

**स इति** । स एष उपरि दर्शितः व्यतिरेकः । श्लेषरूपत्वात् जडात्मा पटुः इति श्लिष्टपदेन वैधर्म्यदर्शनात् श्लेषस्वरूपत्वात् । सश्लेषः एतत्संज्ञकः । इति गृह्यतां जानीहि । अभ्यस्यमानं छात्रं प्रति उक्तिरियम् । न चात्र साधारण धर्मवाचकदुर्वारादिपदानामपि श्लिष्टत्वात् तेनास्य सश्लेषता वाच्या । तैर्विशेषणैः सादृश्यबोधात् वैधर्म्यावबोधे तेषामसंबन्धात् । वैधर्म्यचमत्कृतिप्रधाने व्यतिरेके वैधर्म्यविशेषणे श्लिष्टे एव सश्लेषव्यतिरेकस्वीकारस्य युक्तत्वात् । अपरं च साधर्म्योपपादकविशेषणश्लेषस्वीकारे सर्वत्र व्यतिरेके श्लेषत्वापत्तिर्दुर्वारा भवेत् ।

---

१ °च्छविः. अ. २ पृथक्त्वेन दर्शितौ. कपा. ३ इयता. कपा. तथापि भवतः कक्षां जडात्मा नायमर्हति. बपा. ४ एव. अ.

**साक्षेपश्च सहेतुश्च दर्श्यते[1] तदपि द्वयम् ॥ १८६ ॥**

**स्थितिमानपि धीरोपि रत्नानामाकरोपि सन् ।**

**तव कक्षां[2] न यात्येव मलिनो मकरालयः ॥ १८७ ॥**

**वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम् ।**

**भर्तृभावाद्भुजंगानां शेषस्त्वत्तो निकृष्यते ॥ १८८ ॥**

**शब्दोपादानसादृश्यव्यतिरेकोयमीदृशः ।**

अत्र प्रस्तुताप्रस्तुतयोर्विशेषणद्वयस्य श्लिष्टत्वम् । क्वचिदेकतरनिष्ठश्लिष्टविशेषणेपि ९अयं भवति । एवं श्लिष्टं सप्रपञ्चमुपपाद्य पुनर्भेदद्वयं दर्शयति —**साक्षेप इति ।** आक्षेपः विरुद्धधर्मोपन्यासेन सादृश्यप्रतिषेधः । सहेतुः हेतुश्चात्र हेत्वर्थबोधक-पञ्चम्यन्तपदरूपः । तेन हेतुभूतविशेषणैः प्रतिषेधः साध्यते चेत् तत्र सहेतुव्य-१२तिरेकः ॥ १८६ ॥

साक्षेपमुदाहरति—**स्थितिमानिति ।** मकरालयः समुद्रः । स्थितिमानपि अनुज्झितमर्यादोपि । धीरोपि प्रशान्तोपि । रत्नानां महार्घमणीनां सद्गुणरत्नानां ३च आकर उत्पत्तिस्थानमपि सन् । मलिन इति तव कक्षां साधर्म्यम् । न यात्येव । अत्रोपमानगतेन मालिन्यरूपधर्मेण नृपसादृश्याक्षेपः । तेन च नृपस्योत्कर्ष इति साक्षेपव्यतिरेकः । अत्राक्षेपो नञा वाच्यः ॥ १८७ ॥

सहेतुव्यतिरेकमुदाहरति—**वहन्निति ।** सशैलद्वीपसागरां कृत्स्नाम् । महीं वहन्नपि धारयन्नपि । भुजङ्गानां सर्पाणां जाराणां च । भर्तृभावात् स्वामीत्वात् हेतोः । ३शेषः अनन्तः । त्वत्तः त्वया । निकृष्यते निकृष्टीक्रियते । अत्र भुजङ्गपतित्व-रूपधर्मस्य उपमेयापेक्षया उपमानस्यापकर्षहेतुत्वात् अयं सहेतुव्यतिरेकः ॥१८८॥

एवं शब्दोपात्तसादृश्यव्यतिरेकमुपपाद्य प्रतीयमानसादृश्यव्यतिरेकं प्रति-पिपादयिषुराह—**शब्देति ।** अयं ईदृशः एतावत्पर्यन्तं विवेचितः । शब्दोपादन-३सादृश्यव्यतिरेकोस्ति । शब्दस्य साधारणधर्मवाचकस्य उपादानं यस्मिन् एतादृशं यत् सादृश्यं तत्पूर्वकः व्यतिरेकः उपमेयगुणातिशयवर्णनं तत्स्वरूपोस्ति । अत्र

१ दृश्यते. अ, कपा. २ कक्ष्यां. क.

प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते ॥ १८९ ॥
त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा ।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥ १९० ॥
अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम् ।
इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥ १९१ ॥
पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम् ।

केचित् शब्दोपादानेन यत्सादृश्यं तत्पूर्वको व्यतिरेक इति समासं दर्शयन्ति । परं प्रतीयमानसादृश्येत्युत्तरपदसमासैक्यसंपादनाय प्रथमार्थ एव ज्यायान् । प्रतीयमानं सादृश्यं यत्र तादृशः । व्यतिरेकः अस्ति । सोऽपि अभिधीयते मया निवेद्यते ॥ १८९ ॥

प्रतीयमानसादृश्यव्यतिरेकमुदाहरति—**त्वन्मुखमिति** । त्वन्मुखं कमलं च द्वयोरपि अनयोः भिदा एवं भेदः । तं भेदमेव दर्शयति—**कमलमिति** । कमलं जलसंरोहि जलजमित्यर्थः । त्वन्मुखं त्वदुपाश्रयं त्वमेव उपाश्रयः आधारः यस्य तत् । अत्र विभिन्नाश्रयत्वेन कविप्रसिद्धं कमलमुखसादृश्यं प्रतिषिध्यते । समानधर्मस्यात्राकथनात् प्रतीयमानसादृश्यत्वं बोध्यम् ॥ १९० ॥

विरुद्धधर्मेण प्रतीयमानसादृश्यव्यतिरेकं दर्शयति—**अभ्रूविलासमिति** । मृगेक्षणं हरिणनयनम् । अभ्रूविलासं भ्रूकुटिनर्तनलीलाशून्यम् । तथा अस्पृष्टमदरागं मदिरासेवनोद्भूतलौहित्यवर्जितम् । इदं तु तव नयनद्वन्द्वं तौ गुणौ भ्रूविलासमदरागरूपौ ताभ्यां भूषितम् । अत्रापि उपमेयगतगुणविशेषेण कविप्रसिद्धं मृगनयनसादृश्यं निषिध्यते ॥ १९१ ॥

उदाहरणद्वयप्रयोजनं दर्शयति—**पूर्वस्मिन्निति** । पूर्वस्मिन् त्वन्मुखमित्युदाहरणे । भेदमात्रोक्तिः केवलं भेदस्य कथनम् । न तु उपमेयोत्कर्षस्योक्तिः । तत्र त्वदुपाश्रयमित्यनेनोत्कर्षो व्यङ्ग्यः । तथा च तत्र भेदः कारणभेदाद्विज्ञेयः । ननु जलसंरोहि इत्यनेन जडसंरोहि इति प्रतीतेः कमलस्य जडोपादनत्वम् । अजडोपादनत्वं च मुखस्य । अत उत्कर्षः शाब्द एव इति चेन्न । तथाविधश्लेषे तात्पर्या-

१ अनुविधीयते. कपा. अत्राभिधीयते. २ अस्पष्ट°. अ.

सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते ॥ १९२ ॥
त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनी ।
भ्रमद्भ्रमरमम्भोजं लोल[1]नेत्रं मुखं तु[2] ते ॥ १९३ ॥
चन्द्रोयमम्बरोत्तंसो हंसोयं तोयभूषणम् ।
नभो नक्षत्रमालीदमु[3]त्फुल्लकुमुदं पयः ॥ १९४ ॥

६भावात् । अस्मिन् अव्यवहितोदाहरणे आधिक्यदर्शनं तद्गुणभूषितम् इत्यनेन गुणाधिक्यस्य कथनं न तु साधारणविशेषणमहिम्ना केवलसादृश्यप्रतीतिः । भेदश्च विरुद्धधर्मवत्त्वेन प्रतीयते न तु शब्देनाभिहितोक्ति । पूर्वोदाहरणे कारण-९भेदाद्भेदः अस्मिन्नुदाहरणे विरुद्धधर्माध्यासेन स इति बोध्यम् ॥ एतावता विरुद्ध-धर्मोपादानेन नञादिना वा सादृश्यप्रतिषेधेन परिस्फुटः भेदव्यतिरेको दर्शितः । इदानीं सदृशभेदकेन भेदव्यतिरेकं दर्शयति—**सदृशेति** । सदृशव्यतिरेकः सदृशेन १२भेदकेन व्यतिरेकः भेदः सदृशव्यतिरेकः इत्यर्थः ॥ १९२ ॥

शब्दोपात्तसादृश्यं सदृशव्यतिरेकमुदाहरति—**त्वन्मुखमिति** । त्वन्मुखं पुण्डरीकं कमलं च । फुल्ले विकसिते । एकत्र स्मितलक्ष्म्या अन्यत्र दलविकासेन । ३तथा सुरभिः घ्राणतर्पकः गन्धः सुवासः ययोस्ते । फुल्लत्वसुरभिगन्धत्वयोः साधारण्यात् सादृश्यमत्र शब्दोपात्तम् । एवं सादृश्यं स्थिरीकृत्य सदृशभेदकेन व्यतिरेकं दर्शयति—**भ्रमद्भ्रमरेति** । अम्भोजम् भ्रमद्भ्रमरं भ्रमन्तः भ्रमरा यस्मिन् ६तत् । ते मुखं तु लोलनेत्रं लोले विलासचञ्चले नेत्रे यस्मिन् तत् । अत्र भ्रमर-नेत्रे भेदके । ते च भ्रमणचाञ्चल्यरूपधर्मेण समाने । इति सदृशाभ्यां ताभ्यां भेदः सदृशव्यतिरेकः ॥ १९३ ॥

शब्दानुपात्तसादृश्यं सदृशव्यतिरेकमुदाहरणद्वयेन उदाहरति—**चन्द्र इति** । अयं चन्द्रः अम्बरोत्तंसः वियद्भूषणम् । हंसः तोयभूषणम् जलशोभा-३संपादकः । तथैव इदं नभः नक्षत्रमालि तारामालाविभूषितम् । इदं पयः उत्फुल्ल-कुमुदं विकसितारविन्दम् । अत्र चन्द्रहंसयोः सादृश्यं श्वेतत्वादि अनुभूततया स्फुटं प्रतीतं भवति । वियदम्भसोश्च शौक्ल्यादि वर्णनानुरोधेन यथाकथंचित् ६प्रतीयते । एवमुभयत्र शब्दानुपात्तस्य सादृश्यस्य अम्बरतोयाभ्यां नक्षत्रकुमुदाभ्यां च भेदो दर्शितः । तौ च परस्परतुल्यौ इति सदृशव्यतिरेकिता ॥ १९४ ॥

---

१ लोलदृष्टि. अ. २ च. अ. ३ इदमुत्कुमुदं. अ.

**प्रतीयमानशौक्ल्य[1]ादिसाम्ययोर्वियदम्भसोः[2] ।**
**कृतः प्रतीतशुध्द्योश्च भेदोऽस्मिंश्च[3]न्द्रहंसयोः ॥ १९५ ॥**
**पूर्वत्र शब्दवत् साम्यमुभयत्रापि भेदकम् ।**
**भृङ्गनेत्रादि तुल्यं तत् सदृशव्यतिरेकता ॥ १९६ ॥**

उक्तोदाहरणद्वयं विशदयति—**प्रतीयमानेति** । अस्मिन् पूर्वश्लोके । प्रतीयमानम् वाचकशब्दाभावात् वर्णनानुरोधेन यथाकथंचित् उन्नीयमानं ३शौक्ल्यादि आदिशब्देन नैर्मल्यस्य संग्रहः । तेन साम्यं ययोः तादृशयोः । वियदम्भसोः आकाशपयसोः । तथा प्रतीतशुद्धयोः सदानुभूततयावगतशुद्धयोः चन्द्रहंसयोः भेदः कृतः । प्रथमोदाहरणे अम्बरतोयाभ्यां द्वितीयोदाहरणे नक्षत्रकुमुदा६भ्याम् सादृश्यनिषेधः कृतः । इमे च भेदके अम्बरतोये नीलत्वादिना नक्षत्रकुमुदे च मनोहराकारत्वेन परस्परसदृशे इति सदृशव्यतिरेकः । पूर्वोदाहरणे वियदम्भसोः शौक्ल्यादिसादृश्यं दुरूहतया प्रतीयमानम् उत्तरोदाहरणे शुद्धिस्तु सर्वानुभवसिद्धा ९इति सा प्रतीता इत्यनयोर्भेदः । अत्र केचिदुपमानोपमेयभूतयोः चन्द्रहंसयोः प्रतीतशुद्धिरूपसमानधर्मयोः प्रतीयमानसौक्ष्म्यरूपसमानधर्माभ्यां वियदम्भोभ्याम् आधारतया चन्द्रहंसयोर्भेदः कृतः इति एकमेवोदाहरणं मन्यन्ते । तन्मते सदृश१२योर्व्यतिरेकः सदृशव्यतिरेकः इति समासः ॥ १९५ ॥

पूर्वोदाहृतशब्दोपात्तसादृश्यं सदृशव्यतिरेकोदाहरणं व्याचष्टे—**पूर्वत्रेति** । पूर्वत्र त्वन्मुखमित्युदाहरणे । शब्दवत् शब्दः समानधर्मवाचकः शब्दः सोऽस्मिन्नस्ति ३इति शब्दवत् । साम्यं फुल्लत्वादिकमस्ति । उभयत्रापि शब्दोपात्तप्रतीयमानसादृश्यद्वयोदाहरणेऽपि । वैधर्म्यप्रतिपादकं भृङ्गनेत्रादि आदिशब्देन अम्बरतोयनक्षत्रकुमुदानां संग्रहः । तुल्यम् । भ्रमल्लोलेति भिन्नशब्दाभ्यां प्रतिपादितस्यापि वस्तुतो६भिन्नस्य चाञ्चल्यस्य उभयत्र विद्यमानत्वात् तयोस्तुल्यता । तथा अम्बरतोययोः शौक्ल्यादिना नक्षत्रकुमुदयोः मनोहराकारत्वेन च सादृश्यं ज्ञेयम् । तत् तस्मात् भेदकयोः सादृश्यात् सदृशव्यतिरेकता बोद्धव्या ॥ १९६ ॥

---

१ °सौक्ष्म्यादि°. क.

२ वियदम्भसोः चन्द्रहंसयोः इत्येतयोः परस्परव्यत्यासः ब, ड, प, पुस्तकेषु.

३ हंसचन्द्रयोः. अ.

अरत्नालोकसंहार्यमहार्यं[1] सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ १९७ ॥
संजाति[2]व्यतिरेकोयं तमोजातेरिदं तमः ।
दृष्टिरोधितया तुल्यं भिन्नमन्यैरदर्शि यत् ॥ १९८ ॥

॥ इति व्यतिरेकचक्रम् ॥

प्रसिद्धहेतुव्यावृत्त्या यत्किंचित् कारणान्तरम् ।

सजातिव्यतिरेकमुदाहरति—**अरत्नेति** । रत्नालोकैः मणिकिरणैः संहार्यं न भवतीति अरत्नालोकसंहार्यम् । सूर्यरश्मिभिः भानुगभस्तिभिः । अहार्यम् अनि-
३वार्यम् । यूनां तरुणानाम् । दृष्टिरोधकरं दर्शनसामर्थ्यनिरोधकम् । एतादृशं यौवनप्रभवं तारुण्यमदोत्पन्नं तमोस्ति । प्रसिद्धं तमस्तु रत्नज्योतिषा सूर्यप्रकाशेन च विनिवार्यमस्ति । तथा आबालस्थविराणां दृष्टिरोधकं भवति । अत्र दृष्टिशब्देन
६ज्ञानं तमःशब्देन मोहोपि सूच्यते । श्लेषवशादेव तमःशब्देन उपमानोपमेयभूततमोद्वयप्रतिपादनात् व्यतिरेकसामान्यलक्षणं संगतं भवति । अत्र दृष्टिरोधकत्वेन साम्यम् । तच्च धर्मस्य शब्दप्रतिपाद्यत्वात् शाब्दम् । रत्नसूर्यादिभिरविनाश्यत्वं
९च असाधारणधर्मतया उपमेयमात्रवृत्ति । तदेव भेदकम् । उपमेयस्योत्कर्षाधायकं चेति ज्ञेयम् ॥ १९७ ॥

उदाहरणं व्याख्याय अलंकारं संगमयति—**सजातीति** । दृष्टिरोधितया दृष्टेरावरणतया । इदं यौवनप्रभवम् । तमः तमोजातेः तुल्यम् । तत् अन्यैः अरत्ना-
३लोकसंहार्यादिभिः असाधारणधर्मैः । भिन्नम् । यत् यस्मात् । अदर्शि अतः अयं सजातिव्यतिरेकः । अन्यैरिति बहुवचनेन दीपशिखादिभिरनपनेयत्वादयो साधारणधर्माः संग्राह्याः । तेन असाधारणधर्मद्वयस्यैवोपन्यासे कथं बहुवचनमिति शङ्का
६परास्ता ॥ १९८ ॥

अथ क्रमप्राप्तां विभावनामाह—**प्रसिद्धेति** । यत्र वैचित्र्ये । प्रसिद्धः लोकप्रसिद्धः यो हेतुः कारणं तस्य व्यावृत्त्या अभावप्रदर्शनेन । यत्किंचित् किमपि

---

१ अवार्य. ब, ड, प.  २ स्वजाति°. अ.

**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ १९९ ॥**

**अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम्[1] ।**

**अप्रसादितशुद्धाम्बु[2] जगदासीन्मनोहरम्[3] ॥ २०० ॥**

३अतिगूढं कविकल्पितं वा । कारणान्तरम् विभाव्यं फलोत्पत्त्यनुपपत्त्या सूक्ष्मेक्षिकया अनुसंधानीयम् वा । अथवा स्वाभाविकत्वं कृतेपि विमर्शे कारणान्तराप्राप्तौ फलस्य वस्तुस्वभावेनैव संपद्यमानत्वम् । विभाव्यं चिन्तनीयम् । सा विभावना । एवं ६च प्रसिद्धहेतुव्यतिरेकसामानाधिकरण्येन अप्रसिद्धकारणस्वभावान्यतरप्रतीयमान-फलोत्पत्तिर्विभावनेति लक्षणं संपन्नम् । विभाव्यते फलोत्पत्त्यनुपपत्त्या विचार्यते कारणान्तरं फलोत्पत्तिस्वाभाविकत्वं वा यस्यां सा विभावना । प्रकाशकारादयस्तु— ९क्रियायाः प्रतिषेधेपि फलव्यक्तिर्विभावना । इति कारणाभावे फलोत्पत्तिवर्णनं विभावनामाहुः । तत्र तु विभावनासंज्ञायाः अन्वर्थता न संभवति । कारणाभावश्च क्वचित् नञादिना साक्षात् क्वचिच्च कारणविरोधिन उक्त्या परंपरया प्रतिपाद्यते । १२विभावितं कारणान्तरं क्वचित् शाब्दं क्वचिदार्थं च भवति । एवमेव स्वाभाविकत्वस्य शाब्दार्थप्रभेदौ उदाहरणेषु तत्र तत्रानुसर्तव्यौ । ननु कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परिहारात् विरोधाभास एवायमिति १५चेन्न । समबलयोः परस्परविरोधे तत्स्वीकारात् । इह हि कारणविरहेण कार्यमेव बाध्यत्वेन गम्यते न तु तेन कारणविरहः इति विशेषात् ॥ १९९ ॥

कारणान्तरविभावनामुदाहरति—**अपीतेति** । अपीताः मदिरापानम-कुर्वन्तोपि क्षीबाः मत्ताः कादम्बाः हंसविशेषाः यस्मिन् तत् । असंमृष्टमपि ३अमार्जितमपि अमलं निर्मलम् अम्बरं यस्मिन् । अप्रसादितं कतकादिभिः अशो-धितमपि शुद्धं निर्मलम् अम्बु यस्मिन् । एतादृशं मनोहरं जगदासीत् इत्यन्वयः । अत्र क्षीबत्वामलत्वशुद्धत्वानां पानसंमार्जनप्रसादनादीनि प्रसिद्धानि कारणानि । ६तेषामभावेपि तादृशफलोत्पत्तिः वर्ण्यमाना प्रस्खलद्रूपतया कारणान्तरं अपेक्षमाणा शरत्कालरूपं कारणान्तरं विभावयति । तस्य चात्र शब्दाप्रतिपाद्यत्वादार्थत्वं बोध्यम् । प्रसिद्धकारणाभावस्तु शाब्दः ॥ २०० ॥

---

१ असंसृष्टा°. बपा. २ °सूक्ष्माम्बु. अ, कपा. ३ मनोरमम्. बपा.

अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता ।
अर[1]ञ्जितोरुणश्चायमधरस्तव सुन्दरि ॥ २०१ ॥
यद्[2]पीतादिजन्यं स्यात् क्षीबत्वाद्यन्यहेतुजम् ।
अहेतुकं च तस्येह विवक्षेत्यविरुद्धता ॥ २०२ ॥
वक्त्रं निसर्गसुरभि वपुरव्या[3]जसुन्दरम् ।
अकारणरिपुश्चन्द्रो निर्निमित्तासुहृत्[4] स्मरः ॥ २०३ ॥

स्वाभाविकविभावनां निर्दिशति—**अनञ्जितेति** । हे सुन्दरि तव दृष्टिः अञ्जनेन कज्जलेन अनञ्जिता अलिप्तापि । असिता नीला । भ्रूः अनावर्जिता अनाकृष्टापि । नता वक्रीकृता । अयमधरश्च अरञ्जितोपि लाक्षया अनक्तोपि । अरुणः रक्तच्छविः । अत्र असितनतारुणरूपाणि कार्याणि अञ्जनावर्जनरञ्जनस्वरूपैः प्रसिद्धैः कारणैर्विना दर्शितानि । तानि च अनुपपद्यमानानि कारणान्तरमप्रतिपद्यमानानि स्वाभाविकत्वमेव विभावयन्ति । इति स्वाभाविकविभावनात्र ॥२०१॥

उक्तोदाहरणद्वये विभावनालक्षणस्य संगतिं दर्शयति विरोधं च परिहरति—**यदिति** । प्रथमोदाहरणेन यत् वर्ण्यमानम् । मदिरापानाद्यजन्यम् । आदिना उत्तरश्लोकस्थानञ्जितादीनां संग्रहः । क्षीबत्वादि यत् । अत्र आदिशब्देन उत्तरश्लोकस्थासितादयो ग्राह्याः । अन्यहेतुजं कारणान्तरजन्यम् । तच्च कारणं शरदादिकम् । अहेतुकं च कारणं विना स्वतःसिद्धम् । स्यात् भवेत् । इह उदाहरणद्वये । तस्य विवक्षा प्रतिपिपादयिषा । अस्तीति एवं प्रकारेण अविरुद्धता विरोधाभावः । अस्मिन्नलंकारे सर्वत्रापि कार्यांशे अभेदाध्यवसानरूपातिशयोक्तिरनुप्राणतया स्थिता । तस्मात् कारणाभावे कथं कार्योत्पत्तिः इति शङ्काया नोत्थितिः ॥ २०२ ॥

शाब्दं स्वाभाविकत्वमुदाहरति—**वक्त्रमिति** । वदनं निसर्गसुरभि स्वभावसुगन्धि । न तु कर्पूरादिद्रव्यैरिति भावः । वपुः अव्याजेन अकृत्रिमतया सुन्दरं मनोहरम् । न तु भूषावस्त्रादिभिरिति भावः । अकारणरिपुः विरहिणां सहजशत्रुः । चन्द्रः । तथा निर्निमित्तासुहृत् अकारणशत्रुः स्मरः मदनः ॥२०३॥

---

1 अरञ्जितारुणः. अ.  2 °पत्यादि जन्म. अ.
3 °रत्यन्त°. अ.  4 °सुहृत् स मे. अ.

निसर्गादिपदैरत्र हेतुः साक्षान्निवर्तितः ।
उक्तं च सुरभित्वादि[1] फलं तत्[2] सा विभावना ॥ २०४ ॥

॥ इति विभावनाचक्रम् ॥

वस्तु किंचिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।

उदाहरणं विशदयति—**निसर्गेति** । अत्र सुरभ्यादयो धर्माः स्वाभाविका इति ते शाब्दाः । अतः शब्दस्वाभाविकेयं विभावना । लक्षणोक्तं प्रसिद्धहेतु-
३व्यावृत्तित्वमुदाहरणे दर्शयति—**निसर्गादि इति** । अत्र उदाहरणे । निसर्गादिपदैः निसर्गाव्याजाकारणानिर्निमित्तशब्दैः । हेतुः जात्यैकवचनम् । हेतवः । कर्पूरभूषण-मात्सर्यादयः । साक्षात् नञादिवाचकशब्दवत् स्वार्थेनैव । निवर्तितः अपसारितः ।
६सुरभित्वादि सुरभिसौन्दर्यरिप्विसुहृदिति । फलं कार्यम् । उक्तं तैः निसर्गादिपदैः स्वाभाविकत्वेन कथितम् । तत् तस्मात् । हेतुव्यावृत्तिपूर्वकस्वाभाविकत्वेन फलोत्पत्तेः प्रतितेः विभावना सुसंगतेति शेषः ॥ २०४ ॥

अथ क्रमप्राप्तां समासोक्तिं निर्वक्ति—**वस्तु किंचिदिति** । किंचित् किमपि । वस्तु प्रस्तुतं अप्रस्तुतं वा । अभिप्रेत्य चमत्कारसौभाग्यादिदिदर्शयिषया
३व्यञ्जनया प्रतिपादयितुमभिलष्य । तत्तुल्यस्य वर्णनाभिप्रेतसदृशस्य । वस्तुनः कस्य-चिद् अप्रस्तुतस्य प्रस्तुतस्य वा । उक्तिः कथनम् । समासोक्तिः । समासेन संक्षेपेण अर्थद्वयकथनात् उक्तिः समासोक्तिः । संक्षेपश्च एकस्य प्रयोगेणोभयार्थप्रतिपाद-
६नात् ज्ञेयः । तथाच प्रकृते प्रस्तुताप्रस्तुतयोरन्यतरस्य प्रयोगेण तदन्यस्य प्रतीतिः समासोक्तिः इति समासोक्तिलक्षणम् । एकस्य शब्देन प्रतिपादनेन्यस्य व्यञ्जनया बोधः चमत्कारविशेषमादधाति इति तदेवास्याः अलंकारबीजम् । यदुक्तं ध्वनि-
९कृता—वाच्यार्थो न तथा स्वदते प्रतीयमानः स एव यथा । इति । भोजराजः उपमानाच्छाब्दादतिप्रसिद्धेरुपमेयस्य प्रतीतिः इत्याह ॥ तथा च—

यत्रोपमानादेवैतत् उपमेयं प्रतीयते ।
१२ अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः ॥ (४.४६.) इति ।

दण्डिनापि समासोक्तेः सर्वाण्यपि उदाहरणानि अप्रस्तुतवर्णनेन (उपमानवर्णनेन)

---

१ सुरभीत्यादि. अ.  २ तस्मात्. बपा.

उक्तिः संक्षेपरूपत्वात्[1] सा समासोक्तिरिष्यते ॥ २०५ ॥

प्रस्तुतार्थावबोधकान्येव दर्शितानि। तथापि उपमानवर्णनेनोपमेयार्थावगतौ यद्वै-
१५चित्र्यं प्रतीयते न ततो न्यूनं उपमेयवर्णनेनोपमानार्थावगतौ वैचित्र्यं भवति
इति वस्तुशब्देनास्माभिः द्वयोः संग्रहः कृतः। केचित्तु प्रस्तुतादप्रस्तुतावगतौ
समासोक्तिः अप्रस्तुतात् प्रस्तुतावगतौ च अप्रस्तुतप्रशंसा इति एकस्यैव वैचि-
१८त्र्यस्य उपन्यासप्रकारभेदेन अलंकारद्वयमाहुः। परं तन्न रुचिरम्। वैचित्र्य-
विशेषाभावे ईदृशभेदकरणेऽलंकाराणामानन्त्यापत्तेः। नापि दण्डिना एवंविधा
अप्रस्तुतप्रशंसा स्वीकृता। स तु ताम्—अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः।
२१इति लक्षयति। न तत्राप्रस्तुतात् प्रस्तुतावगतेः कोपि संबन्धोस्ति। ततश्च एक-
तरस्य वर्णने शब्दोपात्ते तदन्यप्रतीतिचमत्कारस्वरूपे प्रस्तुतेनाप्रस्तुतावगत्या
अप्रस्तुतेन प्रस्तुतावगत्या वा दर्शिते तत्र सर्वत्र समासोक्तिरेव दण्ड्याचार्यस्य
२४अभिप्रेतास्तीति ज्ञेयम्। नैवं हि कल्पयितुं शक्यते यदुपमेयादुपमानप्रतीतौ न
चारुतातिशयः इति। यतः—

व्याधूय यद्वसनमम्बुजलोचनायाः वक्षोजयोः कनककुम्भविलासभाजोः।
२७ आलिङ्गसि प्रसभमङ्गमशेषमस्माद्धन्यस्त्वमेव मलयाचलगन्धवाह ॥

इत्याद्युदाहरणेषु चमत्कृतेः स्पष्टत्वात्। काव्यप्रकाशकारादयस्तु प्रस्तुते वाच्ये
अप्रस्तुतव्यवहारसमारोपः समासोक्तिः इति मन्यन्ते। अप्रस्तुतात् प्रस्तुतावगतौ
३०च अप्रस्तुतप्रशंसाम्। श्लेषालंकारे उपमाध्वनौ च विशेष्यस्यापि उभयार्थवाचकता।
अस्यास्तु केवलविशेषणानामेव तथात्वमिति ततो भेदः इति च तेषां विवेकः।
एतदर्वाचीनसंमतसमासोक्तिवैचित्र्यविषये अप्पय्यदीक्षितैः सुगमपद्धत्या कुवलया-
३३नन्दे विवेचनं कृतमस्ति तदुपयुक्तमिति बुद्ध्या तदक्षरैरेवात्र निवेश्यते। अत्र
(समासोक्तौ) प्रस्तुताप्रस्तुतसाधारणविशेषणबलात्सारूप्यबलाद्वा अप्रस्तुतस्य
वृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते विशेष्ये तत्समारोपार्थम्। सर्वथैव प्रस्तुतानन्वयिनः
३६कविसंरम्भगोचरत्वायोगात्। ततश्च समासोक्तौ अप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः
न तु रूपक इव प्रस्तुते अप्रस्तुतरूपसमारोपोस्ति। मुखं चन्द्र इत्यत्र मुखे
चन्द्रत्वारोपहेतुचन्द्रपदसमभिव्याहारवत् रक्तश्चुम्बति चन्द्रमा इति समासोक्त्यु-
३९दाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोः तद्वाचकपदसमभिव्याहारस्य अभावात्।

---

१ संक्षिप्त°. अक.

निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्तश्चन्द्रोयमित्यार्ततरं ररासे ॥

४२इत्येकदेशविवर्तिरूपकोदाहरण इव प्रस्तुते अप्रस्तुतरूपसमारोपगमकस्याप्यभावात् । तत्र हि विद्युन्नयनैरित्यत्र निरीक्षणानुगुण्यात् उत्तरपदप्रधानमयूरव्यंसकादिसमासव्यवस्थितात् उत्तरपदार्थभूतनयनान्वयानुरोधात् पयोदे अनुक्तमपि द्रष्टृपुरुषरूपणं ४५गम्यमुपगम्यते । न चेह तथा निरीक्षणवत् त्वय्यागते किमपि वेपत एष सिन्धुः इति श्लोके सेतुकृत्वादिवच्च अप्रस्तुतासाधारणवृत्तान्तः उपात्तोस्ति । नापि श्लिष्टसाधारणदिविशेषणसमर्पितयोः प्रस्तुताप्रस्तुतवृत्तान्तयोः अप्रस्तुतवृत्तान्तस्य विद्यु-४८न्नयनवत्प्राधान्यमस्ति । येन तदनुरोधात् त्वं सेतुमन्थनकृदित्यत्रेव प्रस्तुतेनुक्तमपि अप्रस्तुतसमारोपमभ्युपगच्छेम । तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः । यद्यपि प्रस्तुताप्रस्तुतवृत्तान्तयोरिह श्लिष्टसाधारणविशेषण-५१समर्पितयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणेव साक्षादन्वयात् अस्ति समप्राधान्यम् । तथापि अप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुते अप्रस्तुतसमारोपोङ्गीकार्यः । तथा हि यथा (अयमैन्द्रीमुखं पश्येत्यत्र) प्रस्तुतविशेष्ये अप्रस्तुतवृत्तान्त-५४स्यान्वययोग्यता । तथैव अप्रस्तुतेपि जारादौ नास्ति प्रस्तुतवृत्तान्तस्यान्वययोग्यता । एवं च समप्रधानयोः प्रस्तुताप्रस्तुतवृत्तान्तयोः अन्यतरस्यावश्यमारोपेभ्युपगन्तव्ये श्रुत एव प्रस्तुतेप्रस्तुतस्यारोपश्चारुताहेतुरिति युक्तम् । नन्वेवं सति——

५७ विशेषणानां साम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥

इत्यादीनि प्राचीनानां समासोक्तिलक्षणानि न संगच्छेरन् । प्रस्तुते श्लिष्टसाधारणा-६०दिविशेषणसमर्पितानुरागपूर्वकवदनचुम्बनाद्यप्रस्तुतवृत्तान्तसमारोपमात्रस्य चारुताहेतुत्वाभ्युपगमेन विशेषणसाम्यकृतकामुकाद्यप्रस्तुतधर्मिव्यञ्जनानपेक्षणादिति चेदुच्यते । स्वरूपतोप्रस्तुतवृत्तान्तस्यारोपो न चारुताहेतुः किंतु अप्रस्तुतकामुक-६३त्वादिसंबन्धित्वेन अवगम्यमानस्य तस्यारोपः । तथाभूतस्यैव रसानुगुणत्वात् । न च तावदवगमने विशेषणपदानां सामर्थ्यमस्ति । अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन वदनचुम्बनादिना तत्संबन्धिनि कामुकादावभिव्यक्ते पुनस्त-६६दीयत्वानुसंधानं तत्र भवति । यथा स्वरूपतो दृष्टेन राजाश्वादिना तत्संबन्धिनि राजादौ स्मारिते पुनरश्वादौ तदीयत्वानुसंधानमिति विशेषणसाम्येन वाच्योपस्का-

पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।
अप्यसंनद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥ २०६ ॥
इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः ।
कस्यांचिदिह बालायामिच्छावृत्तिर्विभाव्यते ॥ २०७ ॥
विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।

रकस्य अप्रस्तुतव्यञ्जनस्यास्त्यपेक्षा । अत एव श्लिष्टविशेषणायामिव साधारण-
६९ विशेषणायामपि अप्रस्तुतव्यवहारसमारोपः इत्येव प्राचीनानां प्रवादः । (व्यावल्ग-
-कुचभारमित्यादौ) कन्दुके व्यावल्गत्कुचभारत्वादिविशिष्टवनितासेव्यत्वस्य कामुक-
संबन्धित्वेनैव समारोपणीयत्वात् । स्वरूपतः कन्दुकेपि तस्य सत्त्वेनासमारो-
७२पणीयत्वात् । किं च सारूप्यनिबन्धनत्वेनोक्तायां समासोक्तौ अप्रस्तुतवृत्तान्त-
स्याशब्दार्थस्याप्रस्तुतवृत्तान्तरूपेणैव गम्यतया तेन रूपेण तत्र समारोपसिद्धेः
अन्यत्रापि तथैव युक्तमिति युक्तमेव प्राचीनानां लक्षणमिति विभावनीयम् ।
७५॥ २०५ ॥

वाच्यात् व्यङ्गप्रतीतौ कार्यलिङ्गविशेषणानामन्यतमस्य साम्यं हेतुरिति
प्रथमं कार्यसाम्यघटितां समासोक्तिमुदाहरति—**पिबन्निति** । भ्रमरः फुल्लपङ्कजे मधु
३पुष्परसम् । यथाकामं पर्याप्तम् । पिबन् असंनद्धसौरभ्यं अपरिपक्वमधुसौगन्धम् ।
कुड्मलं कलिकाम् । चुम्बति पश्य ॥ २०६ ॥

**इतीति** । इति पूर्वोक्तवर्णितप्रकारेण । इह श्लोके । प्रौढा यौवनसंपन्ना या
अङ्गना तस्यां बद्धा दृढा रतिः अनुरागो येन तादृशस्य । रागिणः विलासेनु-
३रागिणः । कस्यांचित् बालायाम् । इच्छावृत्तिः सुरताभिलाषप्रवृत्तिः । विभाव्यते
व्यापारसाम्येन ध्वन्यते । अत्र अप्रस्तुतभ्रमरव्यापारः फुल्लपङ्कजरसास्वादानन्तरं
पङ्कजकोरकानुधावनं प्रौढाङ्गनाज्ञातास्वादस्य कामुकस्य अनुत्पन्नसंभोगाभिलाषायाः
६बालाया अनुसरणं ध्वनयति इति समासोक्तिः ॥ २०७ ॥

विशेषणसाम्यघटितभेदां दर्शयति—**विशेष्येति** । विशेष्यमात्रं विशेष्य-
पदमात्रं भिन्नं श्लेषाभावात् केवलमेकार्थबोधकं यत्र सा । तुल्यः समानः आकारः
३स्वरूपं येषां तानि तुल्याकाराणि श्लेषादिना प्रस्तुताप्रस्तुतार्थसंपादकानि विशे-

अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ २०८ ॥

षणानि यस्यां सा एतादृशी । असौ समासोक्तिरस्ति । अत्र श्लेषवशेन विशेषधर्माणां साम्यम् । भिन्नाभिन्नविशेषणा भिन्नानि एकमात्रानुसंबन्धीनि अभिन्नानि ६उभयानुसंबन्धीनि एवं विशेषणानि यस्यां सा । अपरा समासोक्तिरस्ति । अत्रापि विशेष्यमात्रभिन्नेत्यनुषज्यते । तच्च विशेष्यं प्रस्तुतमप्रस्तुतं वा भवेदिति पूर्वं प्रपञ्चितमत्रानुसंधेयम् । विशेष्यपदस्य श्लिष्टत्वे द्वयोः प्रस्तुतत्वे श्लेषालंकारः । ९द्वयोरेकतरस्य प्रस्तुतत्वे शब्दशक्तिमूलः उपमाध्वनिः इति ज्ञेयम् । भिन्नविशेषणानां व्यङ्ग्यधर्मेण सह बिम्बप्रतिबिम्बतया साम्यम् । श्लेषश्चात्र शब्दगतोर्थगत इति गृह्यते । तेन परैरङ्गीकृतं विशेषणसाधारण्यगर्भभेदान्तरं संगृहीतं भवति । १२तत्र अर्थश्लेषावष्टब्धस्य विशेषणस्यैव साधारण्यात् । यथा—

विलखति कुचावुच्चैर्गाढं करोति कचग्रहं
लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसाम् ।
१५ क्षितिप खदिरः श्रोणीबिम्बाद्विकर्षति चांशुकं
मरुभुवि हठान्नश्यन्तीनां तवारिमृगीदृशाम् ॥ इति ।

अत्र कुचविलेखनकचग्रहणादिविशेषणानामर्थश्लेषेण उभयार्थसाधारण्यात् सा-१८धर्म्यम् । तेन च हठनायकप्रतीतिरस्तीति समासोक्तिः । तुल्याकारविशेषणत्वं औपम्यगर्भत्वे सारूप्ये च संभवति । अतस्तत्रापि समासोक्तिः । तत्रौपम्यगर्भत्वे यथा—

२१ दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा ॥ इति ।

अत्र प्रस्तुतार्थविशेषणे दन्तप्रभा पुष्पाणीव इत्यादय उपमितसमासाः । अप्रस्तु-२४तार्थे दन्तप्रभासदृशैः पुष्पैः इत्यादयः समासाः । तेन च लतावृत्तान्तस्य परिस्फूर्तेः समासोक्तिः । सारूप्ये यथा—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
२७ विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवासः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ इति ।

रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।
सान्द्रच्छायो महावृक्षः सोयमासादितो मया ॥ २०९ ॥
अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।
सो¹च्छ्रायः स्थैर्यवान् दैवादेष लब्धो मया द्रुमः ॥२१०॥
उभयत्र पुमान् कश्चिद् वृक्षत्वेनोपवर्णितः ।

१०अत्र वनसारूप्यात् कुटुम्बिषु धनसंतानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य ग्राम-नगरादेर्वृत्तान्तस्य प्रतीतेः समासोक्तिः ॥ २०८ ॥

तुल्याकारविशेषणां समासोक्तिं दर्शयति---**रूढमूल इति** । रूढं प्रवृद्धं मूलं शिफा मूलधनं च यस्य सः । अनिशं अर्थिनः याचकान् । फलभरैः विविध-३फलैः । तथा फलैः लाभैः वाञ्छितार्थलाभैः । पुष्णन् । सान्द्रा बहुला छाया अनातपः तथा वदनकान्तिर्यस्य सः । सोयं प्रसिद्धः । महावृक्षः मया आसादितः प्राप्तः । महावृक्ष इति विशेष्यपदं एकार्थमेव प्रस्तुतार्थानुसंबन्धि । अत्र सर्वाण्यपि ६विशेषणानि तुल्याकाराणि । तेन चाप्रस्तुतस्य पुंस प्रतीतिः । इति समासोक्तिः ॥ २०९ ॥

भिन्नाभिन्नविशेषणामेनामुदाहरति---**अनल्पेति** । अनल्पः बहुलः विट-पानां शाखानाम् आभोगः विस्तारो यस्य । फलानां पुष्पाणां च समृद्धिः वैपुल्यं ३अस्यास्तीति फलपुष्पसमृद्धिमान् । उच्छ्रायः उन्नतत्वं विभूतिमत्त्वं च तेन सहितः सोच्छ्रायः । सुच्छाय इति पाठे सुष्ठु शोभना छाया आतपाभावः प्रभा च यस्य सः इत्यर्थः । स्थैर्यं दृढमूलत्वम् अन्यत्र निश्चयादचलनं तदस्यातीति स्थैर्यवान् । ६दैवात् भाग्यात् । एष द्रुमः मया लब्धः । अत्र स्थैर्यमूलादिधर्मौ श्लेषभित्तिकया-भेदेनाध्यवसितौ इति समानौ । विटपफलादयश्च केवलं वृक्षमात्रानुगामिनोपि प्रतीयमानपुरुषगततत्सजातीयबहुपुत्रत्वधनधान्यसमृद्धित्वादिभिः बिम्बप्रतिबिम्ब-९भावेन एकार्थतामापन्नाः साधर्म्यं भजन्ते । तथा च सर्वैरपि विशेषणैः अप्रस्तुतः पुरुषः प्रतीयते इति समासोक्तिः ॥ २१० ॥

उभयत्र लक्षणं संगमयति---**उभयत्रेति** । उभयत्र पद्ययोः कश्चित्

---

१ सुच्छायः. ब, क, ड, प.

सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥ २११ ॥
निवृत्तव्यालसंसर्गो निसर्गमधुराशयः ।
अयमम्भोनिधिः कष्टं कालेन परिशुष्यति[1] ॥ २१२ ॥
इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्तनात् ।

पुमान् वृक्षत्वेन वृक्षगतसाधारणविशेषणैः उत्थापितया व्यञ्जनया बोधितत्वात् वृक्षोपमानतया वर्णितः । तत्र पूर्वश्लोके सर्वे धर्मा रूढमूलादयः विशेषणभूताः साधारणा श्लिष्टत्वेन एकरूपेणैव उभयान्वयिनः । अन्यत्र उत्तरश्लोके । तु द्वयं विशेषणद्वयमेव । सोच्छ्रायत्वस्थैर्यवत्त्वरूपं साधारगम् । पूर्ववत् श्लिष्टत्वादभिन्नम् । विटपादीनां साधारण्यं पुरुषगततत्सजातीयधर्मैर्बिम्बप्रतिबिम्बभावेन इति ज्ञेयम् । अन्यथा सादृश्याभावात् व्यञ्जनया अप्रस्तुतार्थानवगमने अपुष्टत्वदोषापत्तिः स्यात् । ततश्च समासोक्तिरपि सुसंगता न भवेत् ॥ २११ ॥

अपूर्वसमासोक्तिमुदाहरति—**निवृत्त इति** । निवृत्तः अपगतः व्यालानां एकत्र सर्पाणां अन्यत्र खलानां च संसर्गः यस्मात्सः । निसर्गेण स्वभावतः एव मधुराणां सुमिष्टानां जलानां आशयः आधारः अन्यत्र स्वभावतः एव मधुरः मनोहरः आशयः चित्तवृत्तिः यस्य सः । एतादृशः अयं अपूर्वः अम्भोनिधिः कालेन समयेन यमेन च । परिशुष्यति शोषं यास्यति विनाशं च गमिष्यति । कष्टं अतीव दुःखास्पदमेतत् । पूर्वोदाहृताभिन्नविशेषणसमासोक्तौ रूढमूलादीनि विशेषणानि वास्तवानि । इह तु वास्तवगुणनिरोधपूर्वककल्पितानीति उभयोर्भेदः ॥ २१२ ॥

उदाहरणं विशदयति—**इतीति** । इति एतादृशी । अपूर्वसमासोक्तिः । कथमिति चेत् पूर्वधर्मनिवर्तनात् पूर्वौ जगति समुद्रधर्मत्वेन प्रसिद्धौ धर्मौ व्यालसंसर्गलवणजलरूपौ तयोः निवर्तनात् तद्विपरीतनिवृत्तव्यालसंसर्गत्वनिसर्गमधुराशयत्वरूपधर्मस्य वाच्ये अम्भोनिधौ निवेशनादिति भावः । तेन च प्रस्तुतपुरुषस्य प्रतीतिः इति समासोक्तिः । समासोक्तिहेतुं दर्शयति —**समुद्रेणेति** । समुद्रेण समानस्य निवृत्तव्यालत्वादिगुणैरिति भावः । पुंसः व्यापत्तिः नाशः तस्य सूचनात् इयमपूर्वसमासोक्तिः । अपूर्वाः पूर्वधर्मनिवर्तकाः कल्पिताः धर्माः

---

१ परिशुष्यते. अ, ड, प.

**समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात् ॥ २१३ ॥**

**॥ इति समासोक्तिचक्रम् ॥**

**विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।**

**असावतिशयोक्तिः स्यादलंकारोत्तमा यथा ॥ २१४ ॥**

यस्यां सा अपूर्वसमासोक्तिः । एवं ग्रन्थकर्त्रा कार्यसाम्येन विशेषणसाम्येन ९समासोक्तिर्दर्शिता । लिङ्गसाम्योदाहरणं तु न प्रदर्शितम् । तत्तु निशामुखं चुम्बति चन्द्र एषः । इति । अत्र स्त्रीलिङ्गपुल्लिङ्गाभ्यां मुखचुम्बनरूपार्थसचिवाभ्यां नायिकात्वं नायकत्वं च व्यज्यत एव । अन्यथा निशामुखं चुम्बति चन्द्रिकैषा । १२अथवा अहर्मुखं चुम्बति भानुबिम्बम् । इत्यनेनापि प्रस्तुतार्थप्रतीतिः स्यात् । केवलं चुम्बतिपदोपादानेन समासोक्तिर्न संभवति । पुत्रादीनामपि चुम्बनसंभवात् । तस्मादत्र केवललिङ्गेनैव समासोक्तिः ॥ २१३ ॥

अथ अतिशयोक्तिं लक्षयति—**विवक्षेति** । विशेषस्य प्रस्तुतवस्तुगतस्य । लोकसीमा लोकमर्यादा तां अतिवर्तते अलौकिकवर्णनेन अतिशेते सा । अत्यद्भुत- ३वर्णनानुगा इत्यर्थः । या विवक्षा विवक्षया वर्णनम् । हेतुहेतुमतोरभेदबुद्ध्या प्रयोगः । असौ अतिशयोक्तिः । विवक्षायाः लोकसीमातिवर्तित्वं च परंपरया विशेष्यस्यैव । तद्वर्णनेनैव चमत्कारस्योदयात् । एवं च प्रस्तुतस्य विशेषस्य अत्युत्कर्षस्य वर्णनं ६अतिशयोक्तिः । ननु एवं सति काव्यात्मभूतदशगुणान्तर्वर्तिकान्तिगुणस्य अस्यां असंभवः स्यात् । यतः स लौकिकार्थानतिक्रमत्वेन वर्णने एव भवति । तदुक्तं पूर्वं—कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात् । इति । सत्यम् । तस्य ९वार्ताभिधानेष्वेव नियमेन सद्भावे नियमनात् अन्यत्र अतिशयोक्तौ तदभावेपि न दोषः । अपरं च इयमतिशयोक्तिः विशेषः धर्मविशेषः तस्यैव आधिक्येन वर्णने भवति न तु धर्मिणः । कान्तिगुणस्तु लौकिकार्थानतिक्रमेण वर्णनं धर्मिण एवा- १२पेक्ष्यते इति उभयोर्विषयभेदः । अनयैव दिशा वक्ष्यमाणोदात्तालंकारस्यापि विषयभेदो बोद्धव्यः । अत्र प्रस्तुतोत्कर्षवर्णनं अप्रस्तुतेन अभेदाध्यवसानादिना ज्ञेयम् । असौ अतिशयोक्तिः अलंकारेषु उत्तमा । यतः अलंकारः वैचित्र्याधीनः ।

---

१ °द्रे तत्समा°. अ. २ °वर्तिनः, ब. ३ °रोत्तमो. अ.

**मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥२१५॥**

१५तच्च वैचित्र्यं प्रायः अतिशयवर्णनाधीनम् । अतः सर्वालंकारजीवितेश्वरी इयम् इति भावः । वामनः संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिरित्याह । उभौ यदि व्योम्नि इत्युदाहरति च । विस्तरस्तु तत एवाधिगन्तव्यः । प्रकाशकारस्तु—

१८ निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥
कार्यकारणयोश्चैव पौर्वापर्यविपर्ययः ।
२१ विज्ञेयातिशयोक्तिः सा

इति चतुर्विधां भिन्नस्वरूपामेव अतिशयोक्तिं वर्णयति । अर्वाञ्चस्तु सर्वे तमेवानुसरन्ति ॥ २१४ ॥

उदाहरणमाह—**मल्लिकेति** । मल्लिकानां माधवीपुष्पाणां माला ताः बिभ्रति तच्छीलाः मल्लिकामालभारिण्यः । इष्टकेषिकामालानां चिततूलभारिषु इति ३मालाशब्दस्य ह्रस्वः । सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणम् । तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति इति खः । सर्वाङ्गीणं आर्द्रं चन्दनं यासां ताः । क्षौमवत्यः सितदुकूलधारिण्यः । अभिसारिकाः कान्ताभिसरणशीलाः । तदुक्तं दशरूपके—
६कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका । इति । ज्योत्स्नायां न लक्ष्यन्ते स्फुटं न ज्ञायन्ते । अत्र प्रस्तुता ज्योत्स्ना तस्याः श्वेतत्वं मल्लिकादिश्वेताभिन्नतया वर्ण्यमानं समधिकं प्रतीयते । अथवा तादृशज्योत्स्नावत्यां रजन्यां तादृशनायि-
९कायाः अलक्ष्यत्वासंभवेपि तत्कथनात् प्रस्तुतज्योत्स्नाया उत्कर्षः प्रतीयते इति अतिशयोक्तिः । अत्र प्रकाशकारादयः मीलिताभिधमलंकारं मन्यन्ते—

समेन लक्ष्मणा वस्तु वस्तुना यन्निगुह्यते ।
१२ निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥

इति हि तल्लक्षणम् ॥ २१५ ॥

---

[1] °कामाल्यधारिण्यः. अ; बपा. [2] °ङ्गेणार्द्र°. बपा.

चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया ।
संशयातिशयादीनां व्यक्त्यै[1] किंचिन्निदर्श्यते ॥ २१६ ॥
स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव ।
अस्ति नास्तीति संदेहो न मेद्यापि निवर्तते ॥ २१७ ॥
निर्णेतुं शक्यमस्तीति[2] मध्यं तव नितम्बिनि ।
अन्यथानुपपत्त्यैव[3] पयोधरभरस्थितेः[4] ॥ २१८ ॥

उदाहरणे लक्षणं योजयति--**चन्द्रातपस्येति** । पूर्वोदाहरणे चन्द्रातपस्य ज्योत्स्नायाः श्वेतिम्नः । बाहुल्यं वैपुल्यम् । उत्कर्षवत्तया मल्लिकादीनां श्वेतिम्नो-भिन्नतया । उक्तम् । तेन सा अतिशयोक्तिरिति शेषः । भेदान्तरं दर्शयति--**संशयेति** । संशयेन अतिशयः संशयातिशयः । संशयेन प्रस्तुतोत्कर्षवर्णनमित्यर्थः । आदिना निर्णयादीनां संग्रहः । व्यक्त्यै स्पष्टीकरणाय । किंचित्संक्षेपेण । निदर्श्यते उदाहियते ॥ २१६ ॥

उदाहरति--**स्तनयोरिति** । हे प्रिये तव स्तनयोः तुङ्गोन्नतकुचयोः । जघनस्य रथाङ्गसदृशविपुलस्य । मध्ये अन्तराले । मध्यं अवलग्नम् । अस्ति नास्तीति मे संदेहः अद्यापि न निवर्तते । तस्यातिसूक्ष्मत्वादिति भावः । अत्र एतादृश-संशयस्य असंभवेपि तत्कल्पनात् मध्यकृशत्ववर्णनस्य अतिशयो भवति इति संशयातिशयोक्तिः ॥ २१७ ॥

निर्णयातिशयोक्तिमुदाहरति-- **निर्णेतुमिति** । हे नितम्बिनि प्रशस्त-नितम्बशालिनि । पयोधरभरस्य कुचविस्तारस्य स्थितिः अवस्थानं तस्याः । अन्यथा-नुपपत्त्यैव विनाश्रयं अवस्थानासंभवादेव । तव मध्यम् अवलग्नम् । अस्तीति निर्णेतुं शक्यम् । अत्र विस्तृतपयोधराणां निरवलम्बनस्थित्यनुपपत्त्या मध्यकल्पनाया अ-संभवितत्वेन तत्कल्पना । तया च मध्यस्य कृशत्वं सविशेषं वर्णितं भवति इति अतिशयोक्तिरियम् ॥ २१८ ॥

---

१ व्यक्तौ. ड, प. २ मध्यमस्तीति शक्यं. अ.

३ °था नोपपद्येत. ब, क, ड, प. ४ °स्थितिः ब, क, ड, प.

**अहो विशालं भूपाल भुवनत्रितयोदरम्[1] ।**

**माति मातुमशक्योपि यशोराशिर्यदत्र ते ॥ २१९ ॥**

**अलंकारान्तराणामप्येकमाहुः परायणम्[2] ।**

आश्रयाधिक्ये अतिशयोक्तिं दर्शयति—**अहो इति** । हे भूपाल भुवनत्रितयोदरं भुवनत्रितयाभोगः । विशालं विस्तृतः । अहो इति आश्चर्ये । कुतः एवं ३विस्तृतमिति चेत्तद्दर्शयति--**मातीति** । यद्यस्मात् । अत्र भुवनत्रितयोदरे । मातुं निवेशयितुम् । अशक्योपि ते यशोराशिः माति साकल्येन प्रविष्टो भवति । अत्र आश्रयीभूतस्य त्रिभुवनोदरस्य विशालताप्रतिपादनेन तत्स्थस्य यशोराशेरपि ६आधिक्यद्योतनादाधिक्यातिशयोक्तिरियम् । नव्यास्तु—

महतो यन्महीयांसावाश्रिताश्रययोः क्रमात् ।

आश्रयाश्रयिणौ स्यातां तनुत्वेप्यधिकं तु तत् ॥

९इत्यत्र अधिकालंकारं मन्यन्ते । विषयस्य **निगरणपूर्वकं** विषयिणोध्यवसानाच्चमत्कृतिविशेषेपि इमां अर्वाचीनाः स्वीकुर्वन्ति । यथा—

वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या

१२ सोपानालीमधिगतवती काञ्चनीमैन्द्रनीलीं ।

अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ

तत्रत्यानां सुलभममृतं संनिधानात् सुधांशोः ॥ इति ।

१५अत्र वाप्यादिशब्दैर्नाभिप्रभृतयो निगीर्णाः । विशेषप्रपञ्चस्तु प्रकाशे कुवलयानन्दे च द्रष्टव्यः । विस्तरभयादस्माभिर्विरम्यते ॥ २१९ ॥

अतिशयोक्तिं प्रशंसन्नुपसंहरति--**अलंकारान्तराणामिति** । वागीशः वाचस्पतिः तेन महितां पूजितां परमश्रेष्ठामितिभावः । अतिशयाह्वयां अति३शयोक्तिम् । इमां अलंकारान्तराणां न केवलं लोकसीमातिवर्तिनो विशेषस्य वर्णने एवेयम् मता । अपि तु विविधालंकाराणामपि । एकं परायणम् परमाश्रयम् । आहुः । तदुक्तं भामहेन--

६ इत्येवमादिरुदिता गुणातिशययोगतः ।

सर्वैवातिशयोक्तिस्तु तर्कयेत् तां यथागमम् ॥

---

१ भवन°. अ. २ °मप्याहुरेकं. अ.

वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ २२० ॥

॥ इत्यतिशयोक्तिचक्रम् ॥

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।**

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।

१२ यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ इति ।

अलंकारो नाम शब्दार्थयोर्वैचित्र्यम् । तच्च अतिशयोक्त्यधीनम् । अतः सर्वालंकारेषु सामान्यतः अतिशयोक्तिर्वर्तत एव । परं तत्तद्वैचित्र्यवैशिष्ट्येन तत्तदलंकारव्यप-
१५देशः । यत्र व्यपदेशो नास्ति तत्र सामान्यवैचित्र्यस्य सद्भावादतिशयोक्त्य-लंकृतिरस्त्येव । एवं च अतिशयोक्तिः सर्वालंकारबीजभूता इति सिद्धान्तः । तदुक्तम्——

१८ कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात् ।

प्रायेणामी अलंकारा भिन्ना नातिशयोक्तितः ॥ इति ।

अलंकारान्तराणामपि इत्यत्र अपिशब्देन अतिशयोक्त्युदाहरणेषु अलंकारान्तराणां
२१समुच्चयः सूचितः । तथा हि मल्लिका इत्यादौ सामान्यं स्तनयोर्जघनस्यापि इत्यादौ संदेहः निर्णेतुं शक्यमित्यादौ निश्चयः अहो विशालमित्यादौ अधिकम् एते अलंकाराः अन्यैरुक्ता ज्ञातव्या इति प्रेमचन्द्रशर्माणः । परमत्र आचार्य-
२४दण्डिना असंगृहीतानां सामान्यनिश्चयाधिकाद्यलंकाराणां संग्राहकः अपिशब्दः कथं स्यादिति न जानीमः । अतोऽयमपिशब्दः सामान्यतः अलंकारान्तरसूचकः इति भाति । २२० ॥

अथ उत्प्रेक्षां लक्षयति——**अन्यथैवेति** । चेतनस्य अथवा इतरस्य अचे-तनस्य । प्रस्तुतस्य । अन्यथैव अन्येनैव प्रकारेण उत्प्रेक्ष्यमाणप्रकारादन्यप्रकारेण
३स्वाभाविकत्वेन । स्थिता वृत्तिः विद्यमाना गुणक्रियास्वरूपा वृत्तिः । यत्र वैचित्र्ये । अन्यथा अन्यस्वरूपेण वास्तवरूपमपहाय अप्रस्तुतस्वरूपेण । उत्प्रेक्ष्यते संभाव्यते । तां उत्प्रेक्षां विदुः । उत्कटा प्रकृष्टा प्रस्तुतस्य ईक्षा उत्प्रेक्षा इति योगार्थः ।
६उक्तं हि प्रकाशे —— संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ( १०. १३७ ) । इति । उत्कटैककोटिकः संशयः संभावनम् । अप्रस्तुतकोटेरुत्कटत्वं च प्रस्तुत-

**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥ २२१ ॥**

**मध्यंदिनार्कसंतप्तः सरसीं गाहते गजः ।**

कोटिनिगरणेन । निगरणं हि क्वचित् प्रस्तुतस्यानुपादानेन क्वचिच्च तस्य तिर-
९स्करणेन । तदुक्तम्——

विषस्यानुपादानेप्युपादानेपि सूरयः ।

अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥ इति ।

१२अत्र आहार्यसंभावनमपेक्ष्यते तेन——

रामं स्निग्धघनश्यामं विलोक्य वनमण्डले ।

प्रायो धाराधरोयं स्यादिति नृत्यन्ति केकिनः ।

१५इत्यादौ नोत्प्रेक्षा । रूपके निश्चयेनावधारणात् संभावना नास्ति । अतो न तत्रोत्प्रेक्षा । संदेहे समकोटिकः संशयः वर्तते । अत्र तु अप्रस्तुतकोटिकः इति ततो भेदः । अत्र अलंकारसामान्यं वैचित्र्यमपेक्ष्यते एव । तेन नूनं अनेन १८स्थाणुना भाव्यम् इत्यत्र नायमलंकारः । यत्र उत्प्रेक्षाकारणं न विन्यस्यते तत्र सत्यामपि संभावनायामुत्प्रेक्षां न मन्यन्ते । यथा—लोकोत्तरप्रभावं त्वां मन्ये नारायणं परम् । इति । अत्र लोकोत्तरप्रभावस्य नारायणत्वव्याप्यतायाः अ-
२१संभवः । अनेन प्रायो नारायणेन भवितव्यम् इति केवलसंभावनायां नायमलं-कारो भवति । इयं च उत्प्रेक्षा मन्ये शङ्के इत्यादिबोधकपदानां सद्भावे वाच्या । अन्यथा व्यङ्ग्या इति बोध्यम् । इयं च अर्वाचीनैः बहुप्रकारत्वेन वर्णिता । परं २४गौरवभयादस्माभिस्ततो विरम्यते ॥ २२१ ॥

सामान्यलक्षणे चेतनस्येतरस्य वा इत्युक्तम् । तत्र चेतनगतां उत्प्रेक्षा-मुदाहरति——**मध्यंदिनेति** । दिनस्य मध्यं मध्यंदिनं तत्संबन्धी योर्कः तेन संतप्तः ३मध्याह्नसूर्यकिरणसंत्रस्त इति यावत् । गजः सरसीं गाहते अवतरति । सः मार्तण्डगृह्याणि सूर्यपक्षाश्रितानि । पदास्वैरिबाह्यापक्षेषु च इति ग्रहेः क्यप् । पद्मानि उद्धर्तुं उन्मूलयितुम् । उद्यतः संनद्धः । इति मन्ये शङ्के । अत्र सचेतनस्य ६गजस्य स्नानपानाद्यर्थं सरोवतरणं सूर्यवैरनिर्यातनार्थमिति कविना संभाव्यते ।

---

१ यत्तु. बपा.

मन्ये मार्तण्डगृह्याणि[1] पद्मान्युद्धर्तुमुद्यतः[3] ॥ २२२ ॥

स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् ।
तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२३ ॥

कर्णस्य भूषणमिदं ममायतिविरोधिनः[4] ।
इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते ॥ २२४ ॥

अतः उत्प्रेक्षा । अत्र केचित् प्रत्यनीकालंकारमुद्भाव्य संकरं ब्रुवते । प्रत्यनीकालंकारलक्षणं तु—

प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ॥ इति ।

परं नैतत् समञ्जसम् । आचार्यदण्डिना तस्यास्वीकारात् । अपरं च अत्र कविना तत्पक्षोद्धरणस्य संभावनामात्रेण कल्पितत्वेन प्रतीकारस्य तात्त्विकवर्णनं कवेः नाभिप्रेतम् । यत्र तु तत्पक्षापकारः वास्तवः कवेरभिप्रेतः तत्रैव सोलंकारः इति विचार्यम् ॥ २२२ ॥

उदाहरणे उत्प्रेक्षां योजयति—**स्नातुमिति** । स्नातुं पातुं बिसानि अत्तुम् । सर्वत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति तुमुन् । स्नानाय पानाय बिसभक्षणाय करिणः जलगाहनं जलावगाहः । तस्य सूर्यस्य यद्वैरं तस्य निष्क्रियाय निर्यातनाय । कविना उत्प्रेक्ष्य संभाव्य । वर्ण्यते । अयमत्राशयः । अस्मिन् पद्ये गजस्य स्नानपानाद्यर्थमवतरणं कविना सूर्यपक्षीयपद्मोद्धरणाय संभावितम् । तत्कारणं मध्यंदिनार्कसंतापः सोपि उपन्यस्तः । उत्प्रेक्षावाचको मन्ये इति शब्दः प्रयुक्तः । उत्प्रेक्षाविषयश्च सरोवगाहनं तदपि वर्णितम् । इति संपूर्णा उत्प्रेक्षासामग्री वर्तते ॥ २२३ ॥

अचेतनगतामुत्प्रेक्षामुदाहरति—**कर्णस्येति** । इदं कर्णोत्पलं मम नेत्रस्य आयतिः विस्तारः तस्य विरोधिनः प्रतिरोधकस्य । कर्णस्य भूषणं इति हेतोः । कर्णोत्पलं तव दृष्ट्या त्वन्नयनेन । विलङ्घ्यते स्वतेजसा अतिशय्यते । अत्र प्रायः-

---

१ मार्ताण्ड°. अ, क. २ न्याहर्तुम्. अ.
३ उत्सुकः. अ, कपा. ४ निरोधिनः. अ, क.

आपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम् ।
[1]स्पृश्यते वा [2]न वेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२५ ॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।

पदम् उत्प्रेक्षावाचकम् । आकर्णायतायाः दृष्टेः सौन्दर्यप्रभाभिः कमलव्यापनं स्वविरोधिकर्णभूषणस्य उत्सारणे कल्पितमिति उत्प्रेक्षा । विरोधकारिणं स्वायति-विरोधकारिणमिति ज्ञेयम् ॥ २२४ ॥

उदाहरणं व्याख्याति—**अपाङ्गेति** । अपाङ्गभागपातिन्याः नेत्रप्रान्त-गामिन्याः । दृष्टेः चक्षुषः । अंशुभिः नीलकिरणैः । उत्पलं कर्णनीलोत्पलम् । स्पृश्यते वा न वा स्पृष्टं भवेन्न वा । कर्णस्य विदूरत्वात् दृष्टेश्च नेत्रप्रान्तगामित्वादिति दृष्टिकिरणसंपर्कः असंभवी अपि कविना केवलं स्वकल्पनया तद्विषयत्वेन स्थिरीकृत्य चमत्कारप्रतिपिपादयिषया उत्प्रेक्षितः । पूर्वश्लोके चेतनस्य क्रिया उत्प्रेक्षाविषयीकृता अत्र तु अचेतनस्य गुणः उत्प्रेक्षाविषयीकृतः । प्रस्तुतस्वरूपस्य विषयत्वं यथा—

बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥

अत्र पलाशकुसुमानां वक्रलोहितत्वेन संबन्धेन निमित्तेन सद्यःकृतनखक्षततादात्म्य-संभावना उक्तविषया स्वरूपोत्प्रेक्षा । इवादीनामप्रयोगे गम्योत्प्रेक्षा यथा—त्वत् कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगामिति । विस्तरस्तु दर्पणादौ द्रष्टव्यः । ॥ २२५ ॥

मन्ये शङ्के ध्रुवं प्रायः इत्यादयः शब्दा उत्प्रेक्षावाचकाः । इवशब्दः उप-मावाचकः । अतः तत्प्रयोगे सर्वत्र उपमैव । तथैव उपमेये एव उपमानस्य उत्कट-कोटिकसंशये उत्प्रेक्षा इत्युभयमपि पक्षं दुदूषयिषुराह—**लिम्पतीति** । वर्षा-कालीनकृष्णपक्षीयनिशामुखवर्णनमेतत् । तमः अङ्गानि लिम्पतीव । नभः अञ्जनं कज्जलम् । वर्षतीव । इतीदमपि एतत् प्राचीनपद्यार्धम् । भूयिष्ठं वैपुल्येन । उत्प्रेक्षाया लक्षणेन अन्वितं युक्तम् । अत्र अचेतनस्य तमसः व्यापनरूपो धर्मः लेपनेन

1 स्पृश्येत. अ. 2 न वैवं तु. अ.

**इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥ २२६ ॥**

संभावितः । तथा तस्यैव तमसः अधःप्रसरणरूपो धर्मः नभःकर्तृकाञ्जनवर्षण-
रूपेण संभावितः । उभयत्रापि विषयस्य व्यापनाधःप्रसरणरूपस्य अनुपादानं
९समानम् । इयांस्तु भेदः । प्रथमोदाहरणे तमःकर्तृकाङ्गव्यापनं स्वतःसंभवि ।
द्वितीये नभःकर्तृकाञ्जनकर्मकाधःप्रसरणं कविकल्पितम् । इवशब्दः—दूरे वसन्
देवदत्त इव भाति अयम् इत्यादौ संभावनायां प्रसिद्धः । तथा च इयमुत्प्रेक्षैव
१२नोपमा । अत्र प्राचीनाः—लिम्पतिपदेन गौरयमितिवत् साध्यवसानलक्षणया उप-
मेयभूतं व्यापनं उपस्थितं भवति । एवं वर्षतिपदेन उपमेयभूताधःप्रसरणमिति ।
तच्च व्यापनमधःप्रसरणं च मलिनीकरणादिसादृश्यनिमित्तेन लेपनवर्षणरूपेण संभा-
१५वितम् इति उपात्तविषया क्रियास्वरूपोत्प्रेक्षा ॥ परे तु तमसः व्यापनरूपो
विषयः लेपनत्वेन संभावितः अधःप्रसरणविषयश्च नभःकर्तृकवर्षणेन इति उभय-
त्रापि विषयस्य अनुपादानमेव । तथा चेयं अनुपादानविषया स्वरूपोत्प्रेक्षा ।
१८उभयमतेपि उपमानेन उपमेयस्य संभावनं उत्प्रेक्षा इति सादृश्यमूलिकोत्प्रेक्षा इति
निश्चयः । तथा च एते

वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥
२१
इत्यत्र उत्प्रेक्षां न स्वीकुर्वन्ति । अत्र हि स्मितस्य संभावनोत्थापकत्वेपि जग-
द्विजयरूपविषयविषयिसाधारणत्वाभावः । आचार्यदण्डिनस्तु औपम्यमूलिकेव
२४उत्प्रेक्षा इति न कथयन्ति न वा तत् सूचयन्ति इति तेषां मतेन उपरिदर्शितो-
दाहरणे उत्प्रेक्षैव । एवमेव—

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् ।
२७ तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

इत्यत्र स्वरूपोत्प्रेक्षैव । तथाहि अत्र तरङ्गाग्रैः फेनचन्दनस्य संचारणं पेषणेन

---

१ इतः प्राक्— असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥
पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥
इति सार्धपद्यं अ पुस्तके दृश्यते ।

**केषांचिदुपमाभ्रान्तिरिवश्रुत्येह जायते ।**
**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥ २२७ ॥**

उत्प्रेक्षितम् । समुद्रोत्थितस्य चन्दनस्य समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं
१०च समुद्रोपान्तफेनचन्दनकृतलेपनत्वेन उत्प्रेक्ष्यते । उभयत्र क्रमेण समुद्रोपान्तगत-
फेनचन्दनपुञ्जीभवनं दिशां धवलीकरणं च निमित्तम् इति उत्प्रेक्षा । इत्यलं
पल्लवितेन ॥ २२६ ॥

इतःपरं अस्मिन् श्लोके उपमावादिनः खण्डनं सप्रपञ्चं निरूपयति—
**केषांचिदिति** । केषांचित् इवशब्दः संभावनायामपि वर्तते तथा नोपमानं
३तिङन्तेन इति तिङन्तस्य उपमानत्वनिषेधोऽस्ति इति अजानताम् । अत्र लिम्पती-
तिश्लोके । इवश्रुत्या इवशब्दश्रवणेन । उपमाभ्रान्तिः यथा कमलमिव मुखम्
इत्यादौ उपमा तद्वदत्रापि उपमा इति भ्रमः जायते । भ्रान्तिमुपापदयति **नोपमान-**
६**मिति** । तिङन्तेन तिङन्तशब्दप्रतिपाद्येन । न उपमानम् उपमानबोधो नास्ति ।
तिङन्तप्रतिपाद्यस्य साध्यत्वात् सिद्धस्यैव उपमानत्वादिति भावः । तदुक्तं—

सिद्धमेव समानार्थमुपमानं विधीयते ।
९ तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते । इति ।

तिङन्तार्थस्य तु उपमेयत्वम् अस्त्येव क्वचित् । यथा— ब्राह्मणवदधीते क्षत्रियः
इत्यादौ । तिङन्तसमभिव्याहृतस्य इवशब्दस्य संभावनाबोधकत्वमेव । रोदतीव
१२पठति नृत्यतीव गच्छति इत्यादौ नोपमा किंतु उत्प्रेक्षैव । आप्तभाषितम् आप्तः
भगवान् पतञ्जलिः तस्य भाषितम् । तदुक्तं भगवता पतञ्जलिना धातोः कर्मणः
इत्यादिसूत्रे ( ३·१·७ )—न तिङन्तेन उपमानमस्तीति । अत्र कैयटः—किंतु
१५तत्र संभावनार्थकः इवशब्दः इति । अयं भावः । यत्परा इवादिशब्दाः तदेव
उपमानम् इति आलंकारिकसिद्धान्तादत्रोपमास्वीकारे लिम्पतिः वर्षतिश्च उपमाने
स्यातां न तु तमो नभो वा । लिम्पतीत्यादेस्तिङन्तस्य तु उपमानत्वं भाष्यकारै-
१८र्निषिद्धम् । तच्च प्रमाणसिद्धमिव युक्तिसिद्धमपि । तथा हि—वाक्ये तिङन्तप्रति-
पाद्यस्य साध्यत्वमिति सर्वसंमतम् । सिद्धस्यैव च उपमानत्वम् इत्यपि निर्वि-
वादम् । अतः साध्यस्य उपमानत्वासंभवात् लिम्पतीत्यादीनि तिङन्तानि उपमानानि
२१भवितुं नैवार्हन्ति । तथा च तत्परः इवशब्दः नोपमावाचकः किंतु संभावना-

**उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया ।**

**लिम्पतेस्तमसश्चासौ धर्मः कोऽत्र समीक्ष्यते ॥ २२८ ॥**

**यदि लेपनमेवेष्टं लिम्पतिर्नाम कोपरः ।**

वाचकः इति अत्रोत्प्रेक्षैव युक्ता । इति प्रमाणयुक्तिपरिगृहीतेयमुत्प्रेक्षा इति ज्ञेयम् ॥ २२७ ॥

उपमानङ्गीकारे युक्त्यन्तरमपि भवतीति दर्शयति—**उपमानोपमेयत्वमिति** । उपमानोपमेयत्वम् उपमानोपमेयभावः । तुल्यधर्मव्यपेक्षया समानधर्मा-
३पेक्षया । भवति । अयं भावः । उपमानोपमेयशब्दौ हि संबधिनौ । तौ हि समानधर्मसंबन्धमपेक्ष्यैव सत्तां प्राप्नुतः । तथा हि सादृश्यप्रतियोगि उपमानम् अनुयोगि उपमेयम् । एवं च उपमानोपमेयत्वं तुल्यधर्मसापेक्षम् । तुल्यधर्मस्य
६अप्रतीतौ तन्नैव संभवति । अत्र प्रस्तुतोदाहरणे । लिम्पतेः लिम्पतीति तिङन्तार्थस्य । तमसश्च धर्मः समानधर्मः । कः समीक्ष्यते ज्ञायते न कोपील्यर्थः । उभयानुगतधर्मस्याप्रतीतेर्नात्रोपमालंकारः ॥ २२८ ॥

अन्यकल्पितं लेपनरूपं समानधर्मं दूषयति—**यदीति** । यदि लेपनमेवेष्टं तमोलिम्पत्यर्थयोः साधारणधर्मतया लेपनमेव इष्टम् । तमसः आवरकतया
३गौणलेपनत्वेपि धर्मयोः बिम्बप्रतिबिम्बभावेन ऐक्यात् साधारण्यं स्वीकृत्येति भावः । तर्हि लिम्पतिः लिम्पतिपदप्रतिपाद्यः उपमानरूपो धर्मी अर्थः कः । न कोपीत्यर्थः । वैयाकरणा हि भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि इति
६यास्कोक्त्या धात्वर्थक्रियायाः एव प्राधान्यं मन्यन्ते । तदुक्तम्—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।

फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ इति ।

९अस्यार्थः । देवदत्तो गच्छतीत्यादौ गमिधातोः फलम् उत्तरदेशसंयोगः । व्यापारस्तु तदनुकूलगमनात्मकः । एतदुभयार्थबोधकः गमिधातुः । अत्र स्मृतः इति वचनविपरिणामेन योज्यम् । आश्रये फलाश्रये कर्मणि व्यापाराश्रये कर्तरि च तिङ्-
१२प्रत्ययाः स्मृताः । कर्मणि प्रयोगे तिङ्प्रत्ययार्थः कर्म कर्तरि प्रयोगे च कर्ता । फले

---

१ को नु. अ, क.

**स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते ॥ २२९ ॥**
**कर्ता यद्युपमानं स्यान्न्यग्भूतोसौ क्रियापदे ।**

प्रधानं व्यापारः फलनिरूपितप्राधान्यवान् व्यापारः इति भावः । तिङर्थः कर्तृ-कर्मरूपः विशेषणं व्यापारस्येति शेषः । तथा च अत्रार्थः—तमःकर्तृकम् अङ्ग-१५कर्मकं लेपनं व्यापारः । एवं चात्र लेपनव्यापारस्य प्राधान्यात् तस्यैव धर्मित्वम् । ननु यथा आत्मा आत्मानं जानाति इत्यादिस्थले एकस्यैव कर्तृत्वकर्मत्वे तथा अत्रापि एकस्यैव लेपनस्य धर्मत्वधर्मित्वे स्याताम् । तथा च उपमा संगच्छेत १८इति चेन्न । अनुन्मत्तः विचारवान् । एकपदप्रतिपाद्यः एक एव पदार्थः धर्मः धर्मी च इति न भाषते । आत्मा आत्मानं जानातीत्यादौ भिन्नपदोपस्थित्या कर्तृत्व-कर्मत्वे एकार्थस्य स्याताम् । अत्र तु एकेनैव लिम्पति पदार्थेन धर्मिधर्मार्थ-२१कल्पनमनुचितमिति भावः । तथा च भाष्यम्—उच्चारित एव शब्दः अर्थस्य प्रापकः नानुच्चारितः इति । अतः ईदृशस्थले एकस्मिन्नेवार्थे धर्मिधर्मकल्पना न विद्वदनुसृता । एवं चात्र साधारणधर्मस्याप्रतीतेः नोपमा शङ्कितव्या । देवदत्त २४इव यज्ञदत्तः पचति इत्यत्र तु उपमा भवत्येव । भिन्नपदोपात्तस्यार्थस्य एकव्यापा-राश्रयत्वेपि विशेषणत्वोपपत्तेरिति भावः ॥ २२९ ॥

अत्र औपम्यसिद्धये तिङर्थः कर्ता एवोपमानं तमः उपमेयं लेपनं साधारणधर्मः अस्तु । तथा च निर्बाधा उपमा इति चेत् तत्राह—**कर्तेति** । कर्ता ३तिङन्तप्रतिपाद्यव्यापाराश्रयः । यदि उपमानं तमसः उपमानम् । स्यात् कल्पेत । तदपि न सम्यक् । यत् असौ व्यापाराश्रयः कर्ता क्रियापदेन लिम्पतिक्रियापदेन विशेष्यतया प्रतिपाद्ये व्यापारे न्यग्भूतः विशेषणतयान्वितः । वर्तते । तिङर्थस्तु ६विशेषणम् इति पूर्वोक्तसिद्धान्तात् । अयमत्राशयः । तमः अङ्गानि लिम्पति इत्यत्र लिम्पतिना साध्यवसानलक्षणया व्यापनमपि ग्राह्यम् । तस्य च कर्ता तमः । उपमानभूतश्च लिम्पतिकर्ता । तथा च लिम्पतिकर्तृसदृशतमःकर्तृकं ९व्यापनम् । लेपनव्यापनयोश्च बिम्बप्रतिबिम्बभावेन ऐक्यम् । अतः सुस्थेयमुपमा इति चेन्न । लेपनव्यापारे विशेषणतया अन्वितस्य कर्तुः उपमानसंबन्धेन अन्य-त्रान्वयायोगात् । एकविशेषणं नापरत्र स्वार्थं प्रत्याययति इति न्यायात् । उक्तं

१ चेत्युन्मत्तोपि. ब, डप.

**स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम् ॥ २३० ॥**

**यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः[1] ।**

१२च मञ्जूषायां नागेशभट्टैः—एकत्र विशेषणत्वेन गृहीतशक्तिकस्य ज्ञातस्य वा अपरत्र विशेषणत्वायोगः । अत एव राज्ञः पुरुषोऽश्वश्च इतिवत् राजपुरुषोऽश्वश्च इति न इति । एतदेव दर्शयति **स्वक्रियासाधनव्यग्रः** इति । स्वक्रिया स्वव्यापारः १५लेपनादिरूपः तस्य साधनं सिद्धिः विशेष्यतया बोधः तत्र व्यग्रः व्यापृतः उपसर्जनतामापन्न इत्यर्थः । अन्यत् अपेक्षितुं पदार्थान्तरं स्वप्रकारकान्वयबोधे विशेष्यत्वेन आकाङ्क्षितुम् । पदार्थान्तरविशेष्यकबोधे पुनः प्रकारीभवितुमित्यर्थः । १८नालं न समर्थः । अयं भावः । एकपदस्य विशेषणतया अन्यत्रान्वितस्य ततोन्यत्र उपमानतया अन्वयः देवदत्त इव यज्ञदत्तो हसति इत्यादिस्थले पदान्तरोपस्थाप्यकर्तरि पदसंसर्गमर्यादया भवति । परं यत्र भिन्नशब्देन उपादानं नास्ति २१कर्तुः तादृशतिङ्बोधितकर्तृस्थले एवमन्वयो भवितुं नार्हति । तस्मान्नात्रोपमेति भावः ॥ २३० ॥

नैयायिकैः अनुसृते प्रथमान्तविशेष्यकशाब्दबोधेपि नोपमेति कथयति— **यो लिम्पतीति** । यो लिम्पति अमुना तेन लेपनकर्त्रा । तुल्यं तमः लेपनकर्तृ३सदृशं तमः । इति शंसतः प्रथमान्तविशेष्यकशाब्दबोधेन एवमर्थं प्रदर्शयतः । मतेपीति अध्याहार्यम् । एवं शाब्दबोधं मन्वानस्य मतेपि अञ्जनीति पदं संबद्धं न भवति उपमेयगतलेपने अनुगतं न भवति । अतः उपमेये संबन्धाभावात् ६अञ्जकर्मकलेपनं समानधर्मो भवितुं नार्हति । तस्मात् प्रथमान्तविशेष्यकशाब्दबोधेपि समः साधारणः । गुणः धर्मः । मृग्यः अन्वेषणीयः । सः अञ्जलेपनरूपः उपमेये प्रतीतो न भवति । तं विना च उपमा नोपपन्ना । अत्रायमाशयः । ९उपमास्वीकारे लिम्पतीव तमोऽञ्जनीत्यस्य नैयायिकमते अञ्जवृत्तिफलजनकलेपनानुकूलकृतिमानिव तमः इति वाक्यार्थबोधः स्यात् । तथा च लेपनकर्तृतमसोरुपमानोपमेयभावः । तत्र प्रथमान्तविशेष्यकशाब्दबोधे अञ्जनीति पदं व्यापार१२विशेषणद्वारा उपमानभूतकर्तरि संबद्धमपि उपमेयभूततमसि तस्य संबन्धो दुर्घटः । एकविशेषणं नापरत्र स्वार्थं प्रत्याययति इति पूर्वोक्तन्यायादिति भावः ।

---

१ शंसिनः. कपा.

**अङ्गानीति न संबद्धं सोपि मृग्यः समो गुणः ॥ २३१ ॥**
**यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते ।**

तथा च अङ्गानीति पदस्य समानधर्माङ्गभूतस्य उपमेये अनन्वयात् अङ्गलेपनं
१५समानधर्मो न भवितुमर्हति । अतः क्रियाविशेष्यकशाब्दबोधवदत्रापि समानधर्मो
मृग्यः । अपिशब्दः पूर्वोक्तसमानधर्माभावसमुच्चायकः । अथवा मा भवतु उपमेय-
समानधर्मे अङ्गानीतिपदस्य संबन्धः । तद्विनैव अङ्गकर्मकलेपनकर्तेव तमोलेपनम्
१८इति बोधेपि उपमायाः सुवचत्वात् इति चेत् तदपि न समीचीनम् । यतः लेपन-
स्यापि स्वोत्पादककर्तरि विशेषणत्वेन अन्वितत्वात् उपमेये तदन्वयस्य दुरुपपा-
दत्वात् । तथा च यथा अङ्गानीति उपमेयांशे असंबद्धं तथा लेपनमपि असंबद्ध-
२१मेव । एवं च तत् समानधर्मो भवितुं नार्हति । अतश्च अङ्गानीति संबद्धं न भवति ।
तदर्थं तच्छून्यं केवलं लेपनमेव समानधर्मत्वेनाङ्गीकृतं चेत् तदपि उभयत्र
संबद्धं न भवति । अतः समानधर्मोपि मृग्यः । अत्र अपिशब्दः अङ्गासंबन्ध-
२४दोषसंग्राहकः । अत्र साधारणा हि गुणक्रियादयो धर्माः प्रथममुपमेयगतत्वेनैव
अन्वयबोधविषयतामापद्यन्ते पर्यालोचनया तु उपमानगतत्वेन प्रतीयन्ते इति
तेषां साधारण्यम् । प्रकृते तु उपमानगतत्वेन लेपनस्य अन्वयबोधः इति उपमान-
२७तावच्छेदकतया उपमानशरीरत्वमेव न तु उपमानोपमेययोः साधारणधर्मत्वमिति
विवेचनीयम् इति अनुपमात्वं दर्शयन्ति केचित् । यो लिम्पत्यमुना तुल्यं तम
इत्यपि संगतः । अङ्गानीति न संबन्धः सोपि मृग्यस्तमोगुणः । इति पाठेपि
३०अङ्गानीति न संबन्धः उपमेयेन सह संगतो न अतः समानधर्माभावात् सोपि
समानधर्मोपि तमोगुणः तमसानुसंबद्धो धर्मः मृग्यः अन्वेषणीयः इति अन्वयः ।
एतदुपपादनं तु पूर्ववदेव । अत्र अपिशब्दः लिम्पतेस्तमसश्चासौ धर्मः कोत्र
३३समीक्ष्यते । इति पूर्वोक्तदोषसंग्राहको ज्ञेयः ॥ २३१ ॥

साधारणधर्मस्य अप्रयोगेपि लुप्तोपमा भवति । तथा चात्र मा भवतु लेपनं
साधारणो धर्मः । साधारणधर्मोपादानं विनैव निष्पाद्यमानां लुप्तोपमामङ्गीकुर्मः ।
३इति चेत् तदपि नात्र संभवतीति कथयति—**यथेन्दुरिवेति** । यथा इन्दुरिव
ते वक्त्रम् इति उपमायां कान्तिः साधारणधर्मतया प्रतीयते वाचकाप्रयोगेपि
प्रसिद्धेन्दोरुपमानत्वादेव गम्यते । तथा लिम्पतेः लिम्पतीति उपमानात् । लेपात्

१ संबद्धः. अ; संबन्धः. कप.

**न तथा लिम्पते[1]र्लेपादन्यदत्र प्रतीयते ॥ २३२ ॥**

**तदुपश्लेषणार्थोयं लिम्पतिर्ध्वान्तकर्तृकः ।**

**अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥ २३३ ॥**

६अन्यत् उपमितिनिष्पादकं साधारणधर्मान्तरम् । न प्रतीयते । लेपनं तु क्रिया-विशेष्यकशाब्दबोधे उपमानमेव । प्रथमान्तविशेष्यकशाब्दबोधे उपमानोपसर्जनी-भूतम् । अतः साधारणधर्मो भवितुं नार्हति इति प्रपञ्चितमेव । तथा च ईदृश-९स्थले साधारणधर्मः न शब्दोपात्तः न वा उपमानप्रसिद्धया गम्यः । एवं च साधारणधर्माप्रतीतेर्नात्र पूर्णोपमा लुप्तोपमा वा । लुप्तोपमायाः स एव विषयः यत्र उपमानोपमेयगतं सादृश्यं लोकप्रसिद्धतया स्फुटं प्रतीतिपदवीमारोहति । यथा १२इन्दुरिव ते वक्त्रमित्यादौ । यत्र तु न प्रतीतिपदवीमारोहति न तत्र सा । अत्र लेपनकर्तृतमसोर्न कोपि समानधर्मः प्रतीतिपदवीमारोहति । अतो नोपमा ॥२३२॥

सिद्धान्तकथनेन विषयमुपसंहरति—**तदिति** । तत् तस्मादुपमाया अत्र अभावात् । अङ्गकर्मा अङ्गकर्मकः । ध्वान्तकर्तृकः उपश्लेषः लेपनं अर्थः यस्य सः ३एतादृशः । लिम्पतिः लिपिधात्वर्थः । पुंसा कविनिबद्धवक्त्रा । एवं व्यापनरूपविषय-निगरणेन । उत्प्रेक्ष्यते संभाव्यते । इति ईक्ष्यतां सूक्ष्मया दृशा निरूप्यताम् । अत्र प्रेमचन्द्रशर्माणस्तु—लिम्पतिः लिम्पतिपदप्रतिपाद्या लेपनक्रिया पुंसा कविनिबद्धेन ६वक्त्रा उत्प्रेक्ष्यते संभाव्यते इति इष्यतां अकामेनापि अङ्गीक्रियतामित्यन्वयः । ननु विषयाभावे विषयीभूतायाः तथाविधविशिष्टलेपनक्रियायाः कथमुत्प्रेक्षणी-यत्वम् । संशयविशेषरूपाया उत्प्रेक्षायाः कोटिद्वयविषयकत्वनियमात् । इति विषयं ९दर्शयन् विषयीभूतं लिम्पतिं विशिनष्टि **उपश्लेषणार्थ इति** । उपश्लेषणं तमःकर्तृ-कव्यापनम् अर्थः स्वविषयकोत्प्रेक्षायाः विषयो यस्य सः । अयमर्थः । प्रस्तुतोर्थ-स्तावद्विषयः । तत्र संभाव्यमानो अध्यवसीयमानो वा अप्रस्तुतोर्थो विषयी । १२प्रकृते तमःकर्तृकाङ्गव्यापनम् उत्प्रेक्षाविषयः । तादृशलेपनं विषयीति । ततश्चात्र प्रस्तुतं तमोव्यापनं तादृशलेपनत्वेनोत्प्रेक्ष्यते । न तूपमानेन तेन उपमीयते इति प्रत्यपादयन् । परमस्मिन् उपश्लेषणार्थविषये क्लिष्टकल्पना दृश्यते । अपरं च १५अनुपादानविषया स्वरूपोत्प्रेक्षा इयमिति सर्वैरङ्गीकृतम् । ततश्च विषयिणः उपा-

१ लिम्पतौ. ब, क, ड, प.

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ २३४ ॥**

॥ इत्युत्प्रेक्षाचक्रम् ॥

दानेन अध्यवसानेन विषयस्य स्वरूपे ज्ञायमाने उत्प्रेक्षायाः सिद्धौ तद्विषय-दर्शनाय इयान् प्रयत्नः अनुपयुक्तः एव । एतावत्प्रबन्धेन आचार्यदण्डिनो मते १८अत्र समानधर्मस्य प्रतीतिर्नास्तीति नोपमा किंतु प्रस्तुते अप्रस्तुतारोपरूपा उत्प्रेक्षा इति दर्शितम् । काव्यप्रकाशकारादयः संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ( ७०७ पत्रे ) इति उत्प्रेक्षायाः लक्षणं विधाय समेन उपमानेन इति २१व्याख्यानं च कृत्वा साधर्म्यमूलामेव तां वर्णयन्ति । तत् आचार्यदण्डिनः सिद्धान्त-स्य विरुद्धम् इति बोध्यम् ॥ २३३ ॥

इवशब्दः बाहुल्येन उपमावाचकः । संभावनावाचकस्तु दूरे वसन् देवदत्त इव भाति इत्यादिषु क्वचिदेवासौ दृष्टः । अतः तस्योत्प्रेक्षावाचकत्वम् उत्प्रेक्षावाचक-३मध्ये परिगणनेन दर्शयति—**मन्य इति** । व्यज्यते बोध्यते । एषां प्रयोगे उत्प्रेक्षा वाच्या अन्यथा गम्या इति पूर्वं कथितमेव । अत्र आदिशब्देन तर्कयामि संभावयामि जाने उत्प्रेक्षे इत्यादीनां संग्रहः । एतेषां कानिचदुदाहरणानि दर्श-६यामः—

यद्यनुष्णो भवेद्वह्निर्यद्यशीतं भवेज्जलम् ।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥
९ सर्वातिशयसौन्दर्यं शङ्के सत्यवतो मुखम् ।
येन सा मृगशावाक्षी सावित्री तरलीकृता ॥
तव निर्वर्ण्य यद्वर्णं स्वर्णं वर्णाय तादृशे ।
१२ त्वत्कोशगेहान्निर्गत्य तीर्थेषु वसति ध्रुवम् ॥
त्वदाननेन सादृश्यं प्राप्तुकामो निशाकरः ।
कलङ्कपङ्काभावाय नूनं मज्जति सागरे ॥
१५ रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः ।
भूमौ प्रतापयशसी सृष्टवान् सततोत्थिते ॥

**हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।**
**कारकज्ञापकौ हेतू तौ चानेकविधौ[1] यथा ।। २३५ ।।**

कस्तूरिकामृगाणामण्डाद्गुणगन्धमखिलमादाय ।
१८ यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ।।

इति ।। २३४ ।।

अथ क्रमप्राप्तं हेत्वाद्यलंकारं प्रशंसापूर्वकं लक्षयति —**हेतुश्चेति** । हेतुसूक्ष्मलेशाभिधानाः त्रयोलंकाराः । वाचाम् वागर्थस्य । उत्तमभूषणम् प्रधाना-
३लंकारः । भामहेन —

हेतुश्च सूक्ष्मो लेशोथ नालंकारतया मतः ।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ।। ( २·८६ )

६इति अलंकारत्रयं चमत्कृतिशून्यत्वेन प्रतिषिद्धमस्ति । समुदायाभिधानस्य वाक्यार्थस्य । वक्रोक्त्यनभिधानतः वक्रोक्तिः चमत्कृतिविशिष्टोक्तिः तस्य अनभिधानतः अनुल्लेखात् चमत्कृतिशून्यत्वादित्यर्थः । एते त्रयोलंकारा न भवन्ति
९इति तदाशयः । आचार्यदण्डिनो मते अत्र चमत्कृतिर्वर्तते अतः विशेषमभिधत्ते वाचामुत्तमभूषणमिति । लेशः उद्देशवाक्ये लवसंज्ञयाभिहितः । तत्र उद्देशवाक्यानुरोधेन प्रथमं हेतुप्रभेदान् दर्शयति । लक्षणं तु प्रसिद्धार्थानुयायि इति पुनः
१२नोक्तम् । तच्च आग्नेये —सिषाधयिषितार्थस्य हेतुर्भवति साधकः ( ३४४·२९ ) इति निरूपितमास्ति । भोजराजेनापि—क्रियायाः कारणं हेतुः ( ३·१२ ) इति दर्शितः । सोयं हेतुर्द्विविधः । कारकः ज्ञापकश्च इति । करोति निष्पादयति भाव-
१५मिति क्रियासंपादको हेतुः कारकः । ज्ञापयति बोधयति कारणान्तरनिष्पन्नं भावमिति च ज्ञापकः । अग्निः धूमस्य कारको हेतुः धूमश्चाग्नेः ज्ञापकः । अथवा मृदा घटं करोतीति कारकः । शास्त्रेण तत्त्वं जानातीति ज्ञापकः । उक्तं हि
१८भोजराजेन —

यः प्रवृत्तिं निवृत्तिं च प्रयुक्तिं चान्तरा विशन् ।
उदासीनोपि वा कुर्यात् कारकं तत् प्रचक्षते ।।
२१ द्वितीया च तृतीया च चतुर्थी सप्तमी च यम् ।
क्रियानाविष्टमाचष्टे लक्षणं ज्ञापकश्च सः ।। (३·१३१) इति ।

---

१ च नैक°. अ.

**अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।**
**उत्पादयति सर्वस्य[1] प्रीतिं मलय[2]मारुतः ॥ २३६ ॥**
**प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम् ।**
**अलंकारतयोद्दिष्टं निवृत्तावपि तत् समम् ॥ २३६ ॥**

तौ च कारकज्ञापकौ हेतू प्रवृत्तिनिवृत्त्यादिभेदेन तथा द्वितीयातृतीयादिविभक्ति-
२४दर्शितभेदेन । अनेकविधौ अनेकप्रकारौ । इति तदर्थः । एषामुदाहरणानि सरस्वतीकण्ठाभरणे द्रष्टव्यानि । अस्मिन्नेव हेत्वलंकारे काव्यलिङ्गानुमानयोः तथा कार्यकारणमूलार्थान्तरन्यासस्य च संग्रहो भवति इति ते न पृथक्तया दर्शिता
२७आचार्येण दण्डिना । अप्पय्यदीक्षितैः--

हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते ।
हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते ॥ इति ।

३०द्विप्रकारको हेत्वलंकारो निर्दिष्टः । तत्र प्रथमः अतिशयोक्त्यलंकारे अन्तर्भवति । द्वितीयश्च न चमत्कारावहः इति तदुभयमपि अलंकारतया न मन्यन्ते अपरे ॥ २३५ ॥

तत्र कारकहेतुमुदाहरति--**अयमिति** । आन्दोलिताः सलीलं व्याधूताः प्रौढानां चन्दनद्रुमाणां पल्लवाः येन सः । अनेन वायोः सौगन्ध्यशैत्यादयो धर्माः
३दर्शिताः । एतादृशो यो मलयमारुतः स सर्वस्य प्रीतिमुत्पादयति । अत्र मलयमारुतः प्रीत्युत्पादने कारकहेतुः । स च आन्दोलितप्रौढचन्दनद्रुमपल्लवः इति विशेषणेन सविशेषं चमत्कारमावहति । अतः एतादृशचमत्कृतिविशिष्टहेतूपादाने
६हेत्वलंकारः युक्त एव । यत्र च कारकं न चमत्कारावहं निर्दिष्टं तत्र नायमलंकारः । यथा गौश्चरतीति ॥ २३६ ॥

उदाहरणस्य अलंकारत्वं प्रतिपादयति--**प्रीत्युत्पादनेति** । अत्र अस्मिन् श्लोके । प्रीत्युत्पादनयोग्यस्य आह्लादप्रतीतिसमर्थस्य । रूपस्य वर्णनस्वरूपस्य ।
३उपबृंहणं वैचित्र्यजनकत्वेनोपन्यासः । अलंकारतया उद्दिष्टं निर्दिष्टः । वैचित्र्यस्य प्रतीयमानत्वात् अत्रालंकारता इष्टैवेति भावः । अयं हेतुः उत्पादनक्रियायां

---

१ लोकस्य. कपा. २ दक्षिण°. अक.

**चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।**

**पथिकानामभावाय पवनोयमुपस्थितः ॥ २३८ ॥**

**अभावसाधनायालमेवंभूतो हि मारुतः ।**

**विरहज्वरसंभूत[1]मनोज्ञारोचके[2] जने ॥ २३९ ॥**

दर्शितः । निवृत्तौ अपि क्रियानिवृत्तावपि हेतुनिर्देशे । तत् समम् क्रियाप्रवृत्ति-
६वदत्रापि हेत्वलंकार इति भावः ॥ २३७ ॥

निवृत्तौ उदाहरति--**चन्दनेति** । चन्दनारण्यम् चन्दनवनम् । आधूय मलयनिर्झरान् स्पृष्ट्वा । वाक्यद्वयेन सौरभ्यशैत्यसंपत्तिरुपात्ता । अयं पवनः पथि-
३कानां पान्थानां वियोगिनामित्यर्थः । अभावाय विनाशाय । उपस्थितः । कामो-
द्दीपकत्वात् तान् विशासितुं संप्राप्त इति भावः ॥ २३८ ॥

निवृत्तौ अलंकारत्वं संगमयति--**अभावेति** । एवंभूतः शैत्यसौरभ्यान्वितः । मारुतः विरहज्वरेण विरहसंतापेन । संभूतं जातम् । मनोज्ञे मनोहारिणि वस्तुनि
३अरोचकम् अरुचिर्यस्य तस्मिन् मनोज्ञवस्तुनि खिन्नस्येत्यर्थः । विरहज्वरसंभूत-
मदनाग्न्यातुरे जने इति पाठे तु विरहेण कान्ताया विरहेण ज्वरः संतापः तेन संभूतः यो मदनाग्निः मदनरूपः संतापातिशयविधायकोग्निः तेन आतुरे रुग्णे ।
६जने उपस्थितः सन् तेषाम् अभावसाधनाय सत्ताविरहसंपादनाय । अलं समर्थः । एवं भावविरहरूपेण क्रियानिवृत्तावपि हेतुः साधको भवति । यथा भावसंपादनाय हेतुः साधकः तथा अभावायेति भावः । तथा च उभयत्रापि अलंकारत्वं बोध्यम् ।
९केचित्तु क्रियानिवृत्तौ--

मुग्धे तव मुखामोदलोलुपो मधुरो भ्रमन् ।

कर्णिकाकमलं फुल्लमपि नाभिसरत्ययम् ॥

१२इति उदाजह्रुः । तथा मूले तु प्रथमोदाहरणं क्रियासाधकस्य द्वितीयमभावसाधकस्य इति च भेदं दर्शयामासुः । परम् उपक्रमानुरोधेन क्रियायाः उत्पत्तिनिवृत्ति-
प्रदर्शनायैव एतदुदाहरणयुगलमिति भाति ॥ २३९ ॥

---

१ °संताप°. क. २ मदनाग्न्यातुरे जने. ब, ड, प.

**निर्वर्त्ये च विकार्ये च हेतुत्वं तदपेक्षया ।**
**प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता ॥ २४० ॥**

वाक्ये तावत् केचन हेतवः क्रियार्थसंपादकाः केचन कर्मार्थसंपादकाः । तत्र क्रियार्थसंपादकेषु कारकज्ञापकमिति भेदद्वयं परिकल्प्य कारकस्य उत्पत्ति-३निवृत्तिप्रकारद्वयमभिधाय उदाहरणद्वयेन तद्दर्शितम् । इदानीं कर्मार्थसंपादकान् हेतून् प्रदर्शयितुमाह---**निर्वर्त्ये चेति** । निर्वर्त्ये विकार्ये च कर्मणि इति शेषः । तदपेक्षया निर्वर्त्यविकार्यकर्मापेक्षया । हेतुत्वं भवति तत्संपादनाय हेतवः भवन्ति । ६प्राप्ये कर्मणि तु प्रायः बाहुल्येन । क्रियापेक्षैव क्रियायाः एव अपेक्षा नान्यो हेतु-स्तत्रोपेक्षितो भवति । अतस्तत्र क्रियाया अपेक्षा एव हेतुता । क्रियैव हेतुर्भवती-त्यर्थः । अयमाशयः । प्राचीना वैयाकरणाः कर्मणः त्रैविध्यं दर्शयन्ति निर्वर्त्यं ९विकार्यं प्राप्यं चेति । तत्र निर्वर्त्यं पूर्वमसतः करणरूपम् अथवा अलक्षितस्य प्रकाशानुरूपम् । यथा पटं करोति पुत्रं प्रसूते इत्यादि । विकार्यं द्विविधं प्रकृते-रुच्छेदकं प्रकृतेर्गुणान्तराधायकं च । यथा काष्ठं भस्म करोति सुवर्णं कुण्डलं १२करोति इति । यत्र क्रियाकृतः परिणामो न दृश्यते न वानुमीयते तत् प्राप्यम् । यथा सूर्यं पश्यति ग्रामं गच्छति इति । अत्र सूर्यग्रामयोः क्रियाकृतविशेषो न दृश्यते । अर्वाचीनाः अनीप्सितमिति चतुर्थं भेदं कल्पयन्ति । यथा पापं त्यजति १५इति । तदेतदुक्तं वैयाकरणैः यथा---

यदसज्जायते पूर्वं जन्मना यत् प्रकाशते ।
तन्निवर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ।
१८ प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ॥
किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते ।
२१ दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते ॥ इति ।

तथा च निर्वर्त्यविकार्ययोः हेत्वोः पूर्वावस्थातो विशेषदर्शनात् तत्र अन्यहेतोरपेक्षा भवति । प्राप्ये तु पूर्वावस्थातः न कोपि विशेषो दृश्यते । अतः केवलक्रियापेक्षैव २४कर्मत्वसंपादिका भवति । सूर्यं पश्यति ग्रामं गच्छति इत्यादौ केवलक्रिययैव तेषां कर्मत्वसिद्धिः । कटं करोति इत्यादिषु तु भवति अन्यसाधनापेक्षा । अतः

हेतुर्निर्वर्तनीयस्य दर्शितः शेषयोर्द्वयोः ।
दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥ २४१ ॥
उत्प्रवालान्यरण्यानि वाप्यः संफुल्लपङ्कजाः ।
चन्द्रः पूर्णश्च कामेन[1] पान्थदृष्टेर्विषं[2] कृतम् ॥ २४२ ॥
मानयोग्यां करोमीति प्रियस्थानस्थितां[3] सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ २४३ ॥

निर्वर्त्ये च विकार्ये च तदपेक्षया तत्संपादनाय अन्यार्थस्य हेतुत्वं भवति तयो-
२७र्जन्यत्वात् । प्राप्ये तु क्रियैवापेक्ष्यते नान्यत् किमपि तस्य जन्यत्वाभावात् ।
अर्वाचीनैः स्वीकृते अनीप्सितेपि क्रियापेक्षैव ज्ञेया । स च हेतुर्निवृत्ति-
विषयः ॥ २४० ॥

**हेतुरिति** । निर्वर्तनीयस्य कर्मणः हेतुः दर्शितः । अयमान्दोलितेत्युदाहरणे ।
तत्र प्रीतिरूपकर्मणः निर्वर्तनीयत्वात् । शेषयोर्द्वयोः विकार्यप्राप्ययोः उदाहरण-
३द्वन्द्वं दत्वा उदाहरणेन हेतुं विशदीकृत्य । पश्चात् ज्ञापको हेतुः वर्णयिष्यते
वर्ण्यते ॥ २४१ ॥

विकार्यहेतुं दर्शयति—**उत्प्रवालानीति** । उद्गतानि प्रवालानि किसलय-
पल्लवादीनि येषु तानि । अरण्यानि वनानि । संफुल्लानि विकसितानि पङ्कजानि
३यासु ताः । वाप्यः दीर्घिकाः । पूर्णः पूर्णमण्डलः । चन्द्रः । एतत् सर्वं कामेन
पान्थदृष्टेः वियोगिनः नयनस्य । विषं कृतम् विषरूपेण परिणामितम् । दाहकत्वेन
विषभावमापादितमित्यर्थः । अत्र अरण्यादिषु विषरूपविकारत्वमारोपितमेव । तस्यैव
६चमत्कारित्वात् । अतः सुवर्णं कुण्डलं करोति इत्यादौ वास्तवविकारे नायमलं-
कारः ॥ २४२ ॥

प्राप्यहेतुमुदाहरति—**मानयोग्यामिति** । मानयोग्यां मानाभ्यासं मान-
सूचकाङ्गिकभावाभ्यासमिति भावः । करोमि इति अभिप्रेत्य । प्रियस्य स्थाने विषये
३स्थितां कल्पिताम् । सखीम् । बाला अनभ्यस्तमानशिक्षा अप्रगल्भा । भ्रुवोर्भङ्गेन जिह्मे
वक्रे अक्षिणी यस्याः सा । स्फुरितः अधरः अधरोष्ठः यस्याः सा । एतादृशी भूत्वा

---

१ कालेन. अक. २ °दृश्विषं. अ. ३ °स्थाने स्थितां. क.

[1]गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इतीदमपि साध्वेव कालावस्थानिवेदने ॥ २४४ ॥
अव[2]ध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसा[3]म् ।
देहोष्मभिः सुबोधं ते सखि कामातुरं मनः ॥ २४५ ॥
इति लक्ष्याः प्रयोगेषु रम्याँ ज्ञापकहेतवः ।

पश्यति । अत्र पश्यति क्रियया सखी न निष्पाद्यते न वा विक्रियते । अतः एतत् प्राप्यं कर्म । तद्विषयकदर्शनक्रियापेक्षयैव बालाया हेतुत्वम् । तच्च तादृशसकोपनिरीक्षणनादिभिरुपस्कृतं विशेषचमत्कारमावहति । अतः हेत्वलंकारः ॥ २४३ ॥

एवं कारकहेतुं सप्रपञ्चं निरूप्येदानीं ज्ञापकहेतुमुदाहरति—**गतोऽस्तमिति** । अर्कः अस्तं गतः । इन्दुः भाति प्रकाशते । वासाय निवासस्थानाय पक्षिणः यान्ति । कालावस्थाया कालविशेषस्य सायंकालस्येत्यर्थः । निवेदने ज्ञापने । साधु एव चमत्कारजनकतया अलंकारसंपादनाय पर्याप्तमेव । ज्ञाप्यं क्वचित् शब्दोपात्तं क्वचिच्च प्रतीयमानं भवति । अत्र प्रतीयमानम् । साध्वेव इति एवकारेण प्रतीयमाने ज्ञापकस्यानुपादानात् हेतोः कथं ज्ञापकता इति शङ्कामनेन निवारयति इति ज्ञेयम् । संप्रति सन्ध्यासमयो वर्तते इति वाक्ये न वैचित्र्यम् । उक्तप्रकारेण कथने एव वैचित्र्यमिति अलंकारता ॥ २४४ ॥

ज्ञाप्यस्य शब्दोपादाने ज्ञापकहेतुमुदाहरति—**अवध्यैरिति** । इन्दुपादानां चन्द्रकिरणानाम् । अवध्यैः अविनाश्यैः । चन्दनाम्भसां चन्दनोदकानां विलेपनानामित्यर्थः । असाध्यैः अप्रतिकार्यैः । देहोष्मभिः शरीरसंतापैः । हे सखि ते कामातुरं मदनपीडितम् । मनः सुबोधं सुखेन बोधो विकारबोधो यस्य तत् । एतादृशमस्तीति शेषः । अत्र च ज्ञाप्यं मनसः कामातुरत्वम् तच्छब्दोपात्तम् । ज्ञापकाश्च अप्रतिकार्या देहोष्माणः ॥ २४५ ॥

भावहेतुमुपसंहरति—**इतीति** । इति एवंप्रकाराः । प्रयोगेषु कवीनां

---

१ इदमर्धं अ पुस्तके नास्ति । २ अवन्ध्यैः. कप.
३ °म्भसा. अ. ४ सम्यग्. कपा.

अभावहेतवः केचिद्व्याह्रियन्ते[1] मनोहराः ॥ २४६ ॥

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।

अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ २४७ ॥

गतः कामकथोन्मादो गलितो यौवनज्वरः ।

क्षतो[2] मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥ २४८ ॥

निबन्धेषु । रम्याः वैचित्र्येण मनोहराः । ज्ञापकहेतवः लक्ष्याः अवबोद्धव्याः । केचित् मनोहराः अभावरूपा हेतवः व्याह्रियन्ते कथ्यन्ते । अभावश्च अनेन कविना चतुर्धा कल्पितः । प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावश्चेति ॥ २४६ ॥

अभावेषु प्रथमं प्रागभावमुदाहरति—**अनभ्यासेनेति** । विद्यानाम् आन्वीक्षिक्यादीनाम् । अनभ्यासेन अपरिशीलनेन । धीमतां विपश्चिताम् । असंसर्गेण परिचयाभावेन । अक्षाणां इन्द्रियाणाम् । अनिग्रहेण असंयमनेन । हेतुना । नृणां व्यसनं दुष्प्रवृत्तिः जायते । भगवता मनुना अष्टादशविधानि व्यसनान्युक्तानि । यथा—

मृगयाक्षो दिवा स्वापः परीवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
पैशून्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोपि गणोष्टकः॥ (७·४७-४८) इति ।

अत्र यावत् विद्यादीनामभावः तावत् व्यसनं भवत्येव इति विद्यादीनां प्रागभावस्य व्यसनं प्रति हेतुता ॥ २४७ ॥

प्रध्वंसाभावहेतुमुदाहरति—**गत इति** । कामकथाभिः य उन्मादः विषयेषु सङ्गाभिनिवेशः । स गतः । यौवनज्वरः तारुण्योष्मा । गलितः क्षीणप्रायः । मोहः ममत्वबुद्धिः । क्षतः नष्टः । तृष्णा विषयवासना । च्युता लुप्ता । अतः कारणात् पुण्याश्रमे पवित्राश्रमे चतुर्थाश्रमे इत्यर्थः । मनः कृतम् निश्चयः कृतः । अत्र उन्मादादीनां प्रध्वंसाभावः एव चतुर्थाश्रमस्वीकाराय हेतुत्वेनोपात्तः । अतः प्रध्वंसाभावहेत्वलंकारः ॥ २४८ ॥

---

१ °क्रियन्ते. क. २ हतः. अ; गतः. बडप.

**वनान्यमूनि न गृहाण्येता नद्यो न योषितः ।**
**मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥ २४९ ॥**
**अत्यन्तमसदार्याणामनालोचितचेष्टितम् ।**
**अतस्तेषां विवर्धन्ते[1] सततं सर्वसंपदः ॥ २५० ॥**
**उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी ।**

अन्योन्याभावहेतुमुदाहरति—**वनान्यमूनीति** । अमूनि चित्तैकाग्र्य संपादकानि । वनानि आश्रमारण्यानि । गृहाणि ममत्वादिभिः नानादुःखास्पदानि ३आवसथानि न । एताः विमलवारिधाराभिर्मनोहराः नद्यः । योषितो मनश्चाञ्चल्यो- त्पादकाः प्रमदाः न । इमे मधुरस्वभावाः मृगाः । दायादाः मत्सराक्रान्ताः संबन्धि- जनाः न । तत् एतत् त्रयमपि मे मानसं नन्दति संतोषयति । अत्र वनादीना- ६मन्योन्याभावेन मनःसंतोषः संसाधितः । अतः अन्योन्याभावहेत्वलंकारः । अत्र सादृश्यातिशयहेतुकाभेदप्रतीतिपूर्वकभेदप्रतीपादनस्यैव चमत्कारजनकत्वात् वन- गृहादीनां सादृश्यमस्त्येव । परं तु तद्विवक्षणान्नात्र निर्णयोपमा इति प्रेम- ९चन्द्रशर्माणः ॥ २४९ ॥

अत्यन्ताभावहेतुमुदाहरति—**अत्यन्तमिति** । आर्याणां सत्पुरुषाणाम् । अनालोचितचेष्टितं अविमृश्यकारित्वम् । अत्यन्तम् असत् सर्वथा अविद्यमानम् । ३कदापि अविमृश्य न ते व्यवहरन्तीत्यर्थः । अतः अविमृश्यताया अत्यन्ताभावात् । तेषां सर्वसंपदः ऐहिकामुष्मिकाः सर्वसमृद्धयः । सततं निरन्तरम् । विवर्धन्ते वृद्धिं प्राप्नुवन्ति । अत्र अनालोचितचेष्टितस्य अत्यन्ताभावः संपदां विवृद्धये हेतुत्वे- ६नोपन्यस्तः इति अत्यन्ताभावहेत्वलंकारः ॥ २५० ॥

एतावता भावप्रतियोगिकानां प्रागभावादिचतुर्णामभावानामुदाहरणानि दर्शितानि । इदानीं तु अभावप्रतियोगिकाभावस्य हेतुरूपतां दर्शयति—**उद्यानेति** । ३उद्याने स्थिता ये सहकाराः आम्राः तेषाम् । मञ्जरी अनुद्भिन्ना विकासमप्राप्ता न । अपि तु विकासपरिपूर्णा इत्यर्थः । अतः तन्मञ्जर्या उद्दीपकत्वात् । पथिकनारीणां प्रोषितभर्तृकाणाम् । सतिलः सलिलाञ्जलिः नीवापाञ्जलिः । देयः । तासां मरणमुप-

---

१ विवर्तन्ते. कपा.

देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥ २५१ ॥

६स्थितमिति भावः । अत्र मञ्जरीणामनुद्भेदाभावः मरणस्य हेतुत्वेनोपन्यस्तः । अतः अभावाभावहेत्वलंकारः । अन्येषामभावाभावानां उदाहरणानि सरस्वतीकण्ठाभरणे तट्टीकायां च दर्शितानि । तेषु प्रध्वंसाभावाभावो यथा––

९ पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनं
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः ।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
१२ यस्मै सोच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति ॥ (३.१५) इति ।

अत्र नारायणनाभिपङ्कजरूपस्यावासस्य उपघाताभावः विधेर्मनोनिर्वाणकारणं भवति । अतः प्रध्वंसाभावाभावहेतुरयम् । अन्योन्याभावाभावो यथा––

१५ अवनिरुदकं तेजोवायुर्नभः शशिभास्करौ
पुरुषः इति यत् केचिद्भिन्ना वदन्ति तनूस्तव ।
तदनघ वचोवैचित्रीभिर्निरावरणस्य ते
१८ विदधति पयःपूरोन्मीलन्मृषा मिहिरोपमाम् ॥

अत्र भिन्न इत्यन्योन्याभावमुपन्यस्य निरावरणस्य मृषेत्येताभ्यां निषेधः अन्योन्याभावाभावः स च मिहिरोपमात्वसाधकः । अतः हेत्वलंकारः । अत्यन्ताभावाभावो-
२१यथा––

न विद्यते यद्यपि पूर्ववासना
गुणानुबन्धि प्रतिभानमद्भुतम् ।
२४ श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ (काव्यादर्श १–१०४) इति ।

अत्र न विद्यते इत्यत्यन्ताभावमुपन्यस्य कमपीति प्रतिभासत्ताभिधानेन प्रतिषेधः ।
२७स च श्रुतयत्नाभ्यां वागुपासितव्या इत्युन्नीतार्थस्य हेतुः इति अत्यन्ताभावाभावहेत्वलंकारः । अत्यन्तमसदार्याणामनालोचितचेष्टितम् । इत्येतदपि अत्यन्ताभावाभावो दाहरणं भवति ॥ २५१ ॥

प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः ।
भावाभावस्वरूपस्य[1] कार्यस्योत्पादनं प्रति ॥ २५२ ॥
दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा ।
अयुक्तयुक्तकार्यौ[2] चेत्यसंख्याश्चित्रहेतवः ॥ २५३ ॥
तेमी प्रयोगमार्गेषु गौण[3]वृत्तिव्यपाश्रयाः ।
अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा ॥ २५४ ॥

अभावहेतुमुपसंहरति—**प्रागभावादीति** । इह प्रागभावादिरूपस्य प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावस्वरूपस्य । वस्तुनः विषयस्य । हेतुत्वम् भावाभावस्वरूपस्य कार्यस्य । तत्र भावरूपस्य अनभ्यासेन विद्यानाम् इत्यादिश्लोकत्रये अभावरूपकार्यस्य च उद्यानेति श्लोके । उत्पादनं प्रति निष्पत्तये । दर्शितमिति शेषः । उक्तोदाहरणेषु कारकहेतुत्वं दर्शितम् । ज्ञापकहेतोरुदाहरणानि ऊह्यानि ॥ २५२ ॥

कारकज्ञापकहेतू सप्रपञ्चं निरूप्य इदानीं चित्रहेतुप्रभेदान् दर्शयति—**दूरकार्य इति** । दूरं कार्यं यस्य स दूरकार्यः । तेन कार्येण सह जायते स तत्सहजः । कार्यात् अनन्तरं जातः कार्यानन्तरजः । अयुक्तं स्वभावविरुद्धं युक्तं स्वभावानुरूपं कार्यं ययोस्तौ च । इति एवंप्रकाराः । असंख्याः संख्यातीताः । चित्रहेतवः भवन्तीति शेषः ॥ २५३ ॥

कार्यात् विदूरस्य सहजस्य तदनन्तरजस्य वा कारणस्य कथं कारणत्वमिति शङ्कां परिहरति—**तेमीति** । तेमी पूर्वोक्ताश्चित्रहेतवः । गौणवृत्तिव्यपाश्रयाः सारोपगौणीलक्षणा व्यपाश्रयः अवलम्बनं येषां ते तादृशाः सन्तः । कारणतां प्राप्नुवन्ति इत्यर्थः । ते च प्रयोगमार्गेषु प्रबन्धरीतिषु । अत्यन्तसुन्दरा दृष्टाः । अतः तदुदाहृतयो दर्शयामः इत्यर्थः । यथेति अग्रिमोदाहरणप्रस्तावाय । अत्र गौणवृत्तिव्यपाश्रयत्वं क्वचित् कार्यस्यापि । यथा पश्चात् पर्यस्य इतिवक्ष्यमाणोदाहरणे रागसागरः इत्यत्र । तत्र हेतोर्गौणवृत्तित्वं परंपरयेति बोध्यम् । क्वचित् कार्यकारणयोरुभयोरपि गौणवृत्तिव्यपाश्रयत्वं भवति । यथा राज्ञां हस्तारविन्दानि इत्यत्र ।

---

१ °स्वभावस्य. अ. २ अयुक्तो युक्तकारी. कपा; °युक्तकार्यः. कपा. ३ गौणमार्ग°. अ; °व्यपाश्रयात्. कपा.

त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं[1] यदङ्गने ।
मुक्तं तदन्यतस्तेन सोऽप्यहं[2] मनसि क्षतः ॥ २५५ ॥
आविर्भवति नारीणां वयः पर्यस्तशैशवम् ।
सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः ॥ २५६ ॥

१एवं च गौणवृत्तिव्यपाश्रयात् इति पञ्चम्यन्तपाठः साधुः इति भाति । क्वचि साध्यवसानलक्षणायामपि हेतोश्चमत्कारिता । यथा आविर्भवति नारीणाम् इत्युदाहरणे ॥ २५४ ॥

तत्र कार्यस्य हेतोर्दूरदेशस्थस्य उदाहरणं दर्शयति—**त्वदिति** । हे अङ्गने शोभनगात्रि । त्वदपाङ्गाह्वयं त्वदपाङ्गसंज्ञकम् । अनेन अत्र सारोपा गौणी लक्षणा ३दर्शिता । जैत्रं जयशालि । अनङ्गास्त्रं अन्यतः मद्भिन्नपुरुषान्तरे । मुक्तं त्वयेति शेषः । तेन त्वदपाङ्गरूपमदनास्त्रेण सः लक्ष्यभूतः । अलक्ष्यभूतोहमपि च । मनसि हृदये । क्षतः विद्धः । अत्र अस्त्रस्य लक्ष्यवेधरूपकार्यं संनिहितम् अलक्ष्य-६वेधरूपं तु विदूरम् इति तादृशकार्यस्यात्र विदूरता । इति देशविदूरताया उदाहरणम् । कालविदूरताया यथा—

अनश्नुवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छनेन ।
९ अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ॥

इति । अत्र यौवनकार्यस्य बाल्ये एव करणाद्धेतोर्दूरकार्यता । इति सरस्वतीकण्ठाभरणे ( ३.१७ ) ॥ २५५ ॥

सहजहेतोरुदाहरणं दर्शयति—**आविर्भवतीति** । नारीणां पर्यस्तशैशवं निराकृतबाल्यम् । वयः यौवनमित्यर्थः । पुंसां कामिनाम् । विविधैः बहुप्रकारैः । अङ्ग-३जोन्मादविभ्रमैः अङ्गजः मनसिजः तेन कृतैः उन्मादविभ्रमैः मनोविकारविलासैः । सह एव आविर्भवति । अत्र मनोविभ्रमस्य यौवनं कारणं कार्यभूतेन तेन सहैव जायते इति कार्यस्य आशुभावप्रतिपादनाय वर्णितम् । तथा चात्र कार्यप्राक्क्षण-६वर्तित्वं विशेषविवक्षया कारणस्य अपह्नुतम् । तथा च अत्र विभ्रमाणां पश्चादुत्पद्यमानत्वं प्रागुत्पद्यमानत्वेनाध्यवसितमिति अध्यवसायव्यपाश्रयोत्र हेतुश्चमत्कारातिशयजनको न तु गौणव्यपाश्रय इति बोध्यम् इति प्रेमचन्द्रशर्माणः ॥ २५६ ॥

---

१ °मङ्गलास्त्रं. अ.   २ सोस्म्यहं. क.

**पश्चात् पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।**
**प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ २५७ ॥**
**राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ।**
**देव त्वच्चरणद्वन्द्वरागबालातपः[1] स्पृशन् ॥ २५८ ॥**
**पाणिपद्मानि भूपानां संकोचयितुमीशते ।**
**त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥ २५९ ॥**

कार्यानन्तरजहेतुमुदाहरति---**पश्चादिति** । किरणान् मरीचीः । पर्यस्य उत्क्षिप्य । चन्द्रमण्डलम् पश्चात् रागसागरोदीर्णानन्तरम् । उदीर्णमुदितम् । हरिणा-३क्षीणां रागसागरः कामाभिलाषसमुद्रः । प्रागेव चन्द्रमण्डलोदयात् पूर्वमेव । उदीर्णः उच्छलितः स्फीत इति यावत् । अत्र चन्द्रोदयस्य रागोद्दीपकत्वात् कारणत्वम् । तच्च कार्यभूतरागोदीर्णानन्तरं संभूतमिति कार्यानन्तरजत्वं हेतोर्बोध्यम् । एवं ६पौर्वापर्यव्यत्यासेन वर्णनं वैचित्र्यशालीति हेतुवैचित्र्यं बोध्यम् । वस्तुतस्तु अत्र चन्द्रमण्डलोदयरूपकारणस्य क्षिप्रकार्यस्य पश्चाद्भाविता पूर्वभावित्वेनाध्यवसिता । तेनात्राध्यवसायमूल एव चमत्कारातिशयः इति प्रेमचन्द्रशर्माणः ॥ २५७ ॥

अयुक्तकार्यं हेतुमुदाहरति---**राज्ञामिति** । देव त्वच्चरणयुगुलस्य रागः रक्तिमा स एव बालातपः मृदुसूर्यरश्मिः । राज्ञां हस्ता एव अरविन्दानि तानि । ३स्पृशन् कुतः कुड्मलीकुरुते मुकुलीकरोति । बालातपस्पर्शेन अरविन्दानां विकास एव भाव्यः न तु संकोचः । अतः अरविन्दसंकोचविधानम् बालातपस्य अयुक्त-मिति अयुक्तकार्योऽयं हेतुः । स च राजविषयकरतेः पोषकतया चमत्कारविषय-६त्वान्मनोरम इति ध्येयम् । अत्र हस्तारविन्दानां कुड्मलीकरणं प्रणामाञ्जलिरूपतया ज्ञेयम् ॥ २५८ ॥

युक्तकार्यमुदाहरति---**पाणिपद्मानीति** । त्वत्पादनखचन्द्राणां तव पद-नखान्येव चन्द्राः तेषाम् । कुन्दनिर्मलाः कुन्दकुसुमधवलाः । अर्चिषः कान्तयः । ३भूपानां पाणिपद्मानि हस्तकमलानि । संकोचयितुं प्रणामाञ्जलिविधायकत्वेन मुकुलीकर्तुम् । ईशते समर्था भवन्ति । अत्र चन्द्रार्चिषां पद्मनिमीलनं युक्तमेव

---

१ °रविबाला° ब, ड, प.

इति हेतुविकल्पानां[1] दर्शिता गतिरीदृशी ।

॥ इति हेतुचक्रम् ॥

इङ्गिताकारलक्ष्योर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः ॥२६०॥
कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेत्य[2] कान्तमबला लीलापद्मं न्यमीलयत् ॥ २६१ ॥

इति युक्तकार्योयं हेतुः । स च राजविषयकरतिपोषकतया सविशेषचमत्कारका-
६रीति बोध्यम् ॥ २५९ ॥

हेतुमुपसंहरति—**इतीति** । हेतोर्विकल्पानां प्रभेदानाम् । इदृशी एवंप्रकारा ।
गतिः पद्धतिः । दर्शिता निरूपिता । अनेन प्रकारेण अन्येपि हेत्वलंकारभेदा ज्ञेयाः
३इति भावः । ते च अहेत्वादयो सरस्वतीकण्ठाभरणतो ज्ञातव्याः । अत्रास्माभि-
र्विस्तरभिया न दर्शिताः । सूक्ष्मालंकारं निर्दिशति—**इङ्गितेति** । इङ्गितं स्वाभि-
प्रायसूचकः शरीरावयवव्यापारः । आकारः अन्तर्भावसूचको रूपादेरन्यथाभावः ।
६ताभ्यां लक्ष्यः अनुमेयः अर्थः प्रतिपाद्यविषयः । स च क्वचित् अभिलाषा-
द्यभ्यन्तरविषयः क्वचिच्च रहःक्रियमाणबहिर्विषयो वेति द्विधा । सौक्ष्म्यात् सूक्ष्म-
मतिवेद्यत्वात् साधारणपुरुषदुर्ज्ञेयत्वाच्च । सूक्ष्मः सूक्ष्माभिधः । स्मृतः । तथा च
९इङ्गिताकाराभ्यां सूक्ष्ममतिज्ञेयं अर्थस्य वर्णनं सूक्ष्मालंकारः इति लक्षणं संपन्नम् ।
प्रकाशकारादयस्तु—

कुतोपि लक्षितः सूक्ष्मोप्यर्थोन्यस्मै प्रकाश्यते ।
१२ धर्मेण केनचिद्यत्र तत् सूक्ष्मं परिचक्षते ॥ ( ८६६ पत्रे )

इत्याहुः । तथा च कुतोपि आकारादिङ्गिताद्वा लक्षितस्य सूक्ष्मार्थस्य तीक्ष्णमति-
संवेद्यार्थस्य केनचिद्भङ्ग्यन्तरेण यत् सूचनं स सूक्ष्मः इति तदभिप्रायः ॥२६०॥

इङ्गितलक्ष्यार्थमुदाहरति—**कदेति** । कदा कस्मिन् समये । नौ आवयोः ।
संगमः समागमः । भावि भविष्यति । इति आकीर्णे जनसंकुले स्थाने । वक्तुं प्रष्टु-
३मिति भावः । अक्षमम् असमर्थम् । नायकेन वाचा अपृष्टमपि तदीयमुखच्छायया

---

१ °विकल्पस्य. अ. २ अवेक्ष्य. अ.

पद्मसंमीलनादत्र सूचितो निशि संगमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥ २६२ ॥
मदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।
उद्दामरागतरला छाया कापि मुखाम्बुजे ॥ २६३ ॥
इत्यर्थनुद्भिन्नरूपत्वाद्रत्युत्सवमनोरथः ।
अनुल्लङ्घ्यैव सूक्ष्मत्वमभूदत्र व्यवस्थितः ॥ २६४ ॥

॥ इति सूक्ष्मचक्रम् ॥

तं प्रश्नमनुमीयेत्यर्थः । एतादृशं कान्तं नायकम् । अवेक्ष्य अबला सा नायिका । लीलापद्मं क्रीडाधृतकमलम् । अमीलयत् संकोचयामास ॥ २६१ ॥

उदाहरणं विशदयति—**पद्मेति** । अत्र अस्मिन् पद्ये । अङ्गजपीडितं मदनपरितप्तम् । प्रियम् आश्वासयितुं समाधातुम् । इच्छन्त्या नायिकया । पद्मसंमीलनात् । निशि रात्रौ । भावीति शेषः । संगमः सूचितः लक्षितः । अत्र पद्मनिमीलनरूपेङ्गितेन निशि संगमः भावीति प्रियाय सूक्ष्मतया सूचितम् इति सूक्ष्मालंकारः । तच्च सूचनं सहृदयचमत्कारि । अतः अस्यालंकारत्वं निर्बाधमेव ॥ २६२ ॥

आकारलक्ष्यार्थमुदाहरति—**मदर्पितेति** । गीतगोष्ठ्यां संगीतशालायाम् । मदर्पितदृशः मयि बद्धदृष्ट्याः । तस्याः नायिकायाः । मुखाम्बुजे उद्दामरागतरला उद्दामः मर्यादातिक्रान्तः यः रागः अनुरागः तेन तरला तेजोभासुरा । पूर्णानुरागसूचिकेत्यर्थः । कापि अनिर्वचनीया । छाया कान्तिः । अवर्धत । अत्र मुखच्छायावैलक्षण्यरूपाकारविशेषेण नायिकाया रत्युत्सवाभिलाषः सूक्ष्मतया दर्शितः । इति सूक्ष्मालंकारः ॥ २६३ ॥

उदाहरणे लक्षणं संगमयति—**इति इति** । इति एवं केवलं छाययैव सूक्ष्मरूपेण दर्शितत्वात् । अनुद्भिन्नरूपत्वात् स्फुटतया अप्रतीयमानत्वात् । सूक्ष्मत्वम् अनुलङ्घ्यैव अपरित्यज्यैव । रत्युत्सवमनोरथः व्यवस्थितः वर्णितः । अभूत् । अतः सूक्ष्मप्रकारेण मनोरथाविष्कारवर्णनात् सूक्ष्मालंकार इति भावः । अत्र केचित् । उद्दामरागतरला मुखच्छाया तावत् रत्युत्सवमनोरथस्यैवानुभाव इति न नियमः । विषयान्तरमनोरथादिनापि तत्संभवादित्यनैकान्तिकत्वान्न स्फुटतरं तादृशमनोरथं

१ पद्मस्य मीलनात्. कपा. २ त्वदर्पित°. क. ३ काचित्. अ. ४ इत्यसंभिन्न°. क.

**लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् ।**
**उदाहरण एवास्य रूपमाविर्भविष्यति ॥ २६५ ॥**

लक्षयति । लक्षयिता तु स्वीयविलक्षणसहृदयतासध्रीचीनया तया कथंचिल्लक्षयतीति सूक्ष्मत्वमेव रत्युत्सवविषयस्येत्याहुः ॥ २६४ ॥

क्रमप्राप्तं लवापरपर्यायं लेशं निरूपयति--**लेश इति** । लेशेन स्वल्पतया । निर्भिन्नं प्रकटीभूतं यद्वस्तुनो गोप्यविषयस्य रूपं स्वरूपं तस्य निगूहनम् ३संवरणम् । लेशः लेशनामालंकारः । केचित्तु लेशेन व्याजेन वस्तुरूपनिगूहनं लेशोलंकारः इति विवृण्वन्ति । तथा च कारणान्तरोत्पन्नस्य प्रकटीभूतस्य वस्तुनः कारणान्तरोत्पन्नत्वकथनेन तदाच्छादनं लेशः इति भावः । स च वस्तुरूपनिर्भेदः ६क्वचित् रोमादिगात्रविकारैः क्वचिद्वक्तुरनवधानतया संभवति । इमं नव्याः व्याजोक्तिं वदन्ति । तथा च प्रकाशकारः--व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् । इति । अप्पय्यदीक्षितवर्णिता छेकापह्नुतिरपि अस्यैव प्रभेदः । तल्लक्षणो-९दाहरणं तु--

छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यानिह्नवे ।
प्रजल्पन् मत्पदे लग्नः कान्तः किं न हि नूपुरः ॥ इति ।

१२अन्यान्यपि उदाहरणानि—

समये पयोधराणामपतितया नैव शक्यते स्थातुम ।
उत्कण्ठितासि बाले नहि नहि सखि पिच्छिलः पन्थाः ॥

१५यथा वा—

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किं मिलितः नहि नहि सखि हैमनः पवनः ॥ इति ।

१८ननु नास्त्यत्र लेशनिर्भिन्ननिगूहने कश्चिच्चमत्कार इति नायं अलंकारः । तदेतन्मतं निराकर्तुमाह-- **उदाहरणे इति** । अस्य अलंकारस्य । उदाहरणे एव रूपं चमत्कृतिस्वरूपम् । आविर्भविष्यति प्रकटीभविष्यति ॥ २६५ ॥

---

१ °वाक्येस्य, अ.

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।
अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम् ॥ २६६ ॥
आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।
अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम् ॥ २६७ ॥
इत्येवमादिस्थानेयमलंकारोऽतिशोभते ।
लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम् ॥ २६८ ॥

उदाहरणं दर्शयति—**राजेति**। रक्षकाः राजान्तःपुराधिकृताः। रोमोद्भेदेन रोमहर्षेण। मां राजकन्यानुरक्तं नृपकन्यकाभिलाषुकम्। अवगच्छेयुः जानीयुः। संभावनायां लिङ्। आः ज्ञातम्। आः इति स्मरणे। निगूहनप्रकारः कल्पित इत्यर्थः। अहो इति विस्मये। वनं शीतानिलम् शीतः अनिलः वायुर्यत्र तत्। शीतानलसंपर्केण रोमोद्गम इति भावः। अत्र शीतानलसंपर्केण रोमोद्गमस्य व्यवस्थापनात् अनुरागनिगूहनं संपादितम्। तच्च वैचित्र्यातिशालि इति युक्तमस्यालंकारत्वम्। निर्भिन्नवस्तुनिगूहनम् अनिष्टसंभावनया लज्जया वा भवति। अत्र अनिष्टसंभावनया। लज्जया तु अग्रिमोदाहरणे इति ज्ञेयम् ॥ २६६ ॥

लज्जया निगूहनात्मकं लेशमुदाहरति—**आनन्देति**। कन्यकां विवाहमण्डपे आगतां कन्यकाम्। दृष्ट्वैव मे आनन्दाश्रु कथं प्रवृत्तम्। एवं कन्यकादर्शनेन आनन्दाश्रुप्रवृत्तिः चित्तचाञ्चल्यसूचिका इति आशङ्क्य निगूहति। मे अक्षि नयनम्। वातोद्धूतेन पवनोत्क्षिप्तेन। पुष्परजसा कुसुमपरागेण। दूषितम् इति। अत्र आनन्दाश्रुणः पुष्परजोदूषिताक्षिजत्वप्रतिपादनेन निगूहनात् लेशालंकारः॥२६७॥

उदाहरण एवास्य रूपमाविर्भविष्यति इति प्रतिज्ञानुरोधेन उदाहरणं प्रदर्श्य तत्र वैचित्र्यं दर्शयन् उपसंहरति—**इत्येवमिति**। इत्येवमादिस्थाने एवंविधस्थले। अयमलंकारः लेशः। अतिशोभते चमत्कृतिविशेषमावहति। अतः परोक्तं लेशस्य अनलंकारत्वं न स्वीकर्तव्यमिति भावः। लेशस्य अपरं प्रकारं दर्शयति **लेशमिति**। एके पण्डिताः। लेशतः कृतां स्तुतिं वा निन्दां वा लेशं विदुः जानन्ति। तथा च स्तुतिमिषेण कृता निन्दा निन्दामिषेण कृता स्तुतिर्वा लेश

१ प्राव°. क्वा. २ शीताभिलम्बनं. अ. ३ इत्येवमादौ. अ.

इत्यर्थः। यथा लेशेन निर्भिन्नवस्तुनिगूहनाल्लेशालंकारः तथा लेशेन स्तुतिनिन्दा-
विधानेपि स एव अलंकारः उचितः। चमत्कृतौ लेशस्य प्राधान्यात्। एवं च
९व्याजस्तुत्यलंकारान्तराभ्युपगमनं न युक्तम्।

दोषस्य यो गुणीभावो दोषीभावो गुणस्य वा।
स लेशः स्यात् ततो नान्या व्याजस्तुतिरपीष्यते ॥

१२इति प्राञ्चः। अप्पयदीक्षितास्तु——

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्।
अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु।
१५ शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

इति लक्षणोदाहरणं प्रदर्श्य अग्रे आहुः। दण्डी त्वत्रोदाजहार——

युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः।
१८ रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥
चपलो निर्दयश्चासौ जनः किं तेन मे सखि।
आगः प्रमार्जनायैव चाटवो येन शिक्षिताः ॥ इति।

२१अत्राद्यश्लोके राज्ञो वीर्योत्कर्षस्तुतिः। कन्याया निरन्तरसंभोगनिर्विवर्तिषया दोष-
त्वेन प्रतिभासतामित्यभिप्रेत्य विदग्धया सख्या राजप्रकोपपरिजिहीर्षया स एव
दोषो गुणत्वेन वर्णितः। उत्तरश्लोके सखीभिरुपदिष्टं मानं कर्तुमशक्तयापि तद-
२४ग्रतो मानपरिग्रहानुगुण्यं प्रतिज्ञाय तदनिर्वाहमाशङ्कमानया सखीनामुपहासं
परिजिहीर्षन्त्या नायिकया नायकस्य चाटुकारितागुण एव दोषत्वेन वर्णितः।
न चाद्यश्लोके स्तुतिः निन्दापर्यवसायिनी द्वितीयश्लोके निन्दा स्तुतिपर्यवसायिनीति
२७व्याजस्तुतिराशङ्कनीया। राजप्रकोपपरिहारार्थमिह निन्दास्तुत्योरन्याविदिततया
लेशत एवोद्घाटनेन ततो विशेषादिति। वस्तुतस्तु इह व्याजस्तुतिसद्भावेपि न
दोषः। नहि एतावता लेशमात्रस्य व्याजस्तुत्यन्तर्भावः प्रसज्जते। तदसंकीर्ण-
३०योरपि लेशोदाहरणयोर्दर्शितत्वात्। नापि व्याजस्तुतिमात्रस्य लेशे अन्तर्भावः
प्रसज्जते। भिन्नविषयव्याजस्तुत्युदाहरणेषु——

कस्त्वं वानर रामचन्द्रभवने लेखार्थसंवाहको।
३३ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून् मृषा।

**युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।**
**रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥ २६९ ॥**

इत्यादिषु दोषगुणीकरणस्य गुणदोषीकरणस्य चाभावात् । तत्र अन्यगुणदोषाभ्यां अन्यत्र गुणदोषयोः प्रतीतेः । विषयैक्येपि––

३६ इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिः
दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्ता-
३९ न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥

इत्याद्युदाहरणेषु लेशास्पर्शनात् । तत्र हीन्दुलक्ष्मादीनां धवलीकरणाभावदोष एव गुणत्वेन न पर्यवस्यति किंतु परिसंख्यारूपेण ततोन्यत् सर्वं धवलितमित्यन्यो ४२गुणः प्रतीयते । क्वचिद् व्याजस्तुत्युदाहरणे गुणदोषीकरणसत्वेपि स्तुतेर्विषया-न्तरमपि दृश्यते । यथा––

सर्वदा सर्वदोसीति मिथ्या संस्तूयसे बुधैः ।
४५ नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥

अत्र हि वाच्यया निन्दया परिसंख्यारूपेण ततोन्यत् सर्वमर्थिनामभिमतं दीना-रादि दीयते इति स्तुत्यन्तरमपि प्रतीयते । एवं च येपूदाहरणेषु —कस्ते शौर्यमदो ४८योद्धुम् इत्यादिषु—गुणदोषादिषु गुणदोषीकरणादिकमेव व्याजस्तुतिरूपतया-वतिष्ठते तत्र लेशव्याजस्तुत्योः संकरोस्तु । इत्याहुः । जगन्नाथोपि––नचायम-लंकारः व्याजस्तुत्या उभयरूपया गतार्थ इति शङ्क्यम् । मुखप्रतिपादितार्थवैपरी-५१त्येन अत्र सर्वत्र पर्यवसानाभावात् इत्यादि प्रबन्धेनामुमेव सिद्धान्तं दर्शयामास इत्यलं पल्लवितेन ॥ २६८ ॥

स्तुतिव्याजेन निन्दारूपं लेशमुदाहरति––**युवैष इति** । एषः राजा युवा गुणवान् ऊर्जितः तेजस्वी । ते योग्यः समुचितः । पतिः भवितुमर्हति । यस्य मनः ३कामोत्सवादपि रणोत्सवे संग्रामविहारे । सक्तम् । स्वयंवरप्रसक्तां राजकन्यां प्रति तत्सख्या उक्तिरियम् । तेन मुखतः अतिवीरोयं व्रियतामिति रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि इत्यनेन स्तुत्यवगतावपि पर्यवसाने सर्वथा रणव्यग्रोयं

वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये[1] ।
कन्यायाः कल्पते भोगान् निर्विविक्षोर्निरन्तरम्[2] ॥२७०॥
चपलो निर्दयश्चासौ जनः किं तेन मे सखि ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥ २७१ ॥
दोषाभासो गुणः[3] कोपि दर्शितश्चाटुकारिता ।
मानं सखिजनोद्दिष्टं कर्तुं रागादशक्तया ॥ २७२ ॥

॥ इति लेशचक्रम् ॥

६नानेन ते पर्याप्तरतिसुखलाभः स्यादिति संभोगाभिलाषुकायाः निवेदनान्निन्दाया एव अवबोधो भवति । अतः स्तुतिमिषेण निन्दाविधानात् लेशालंकारः ॥ २६९ ॥

उदाहरणं विशदयति—**वीर्येति**। अस्मिन् पद्ये । निरन्तरं भोगान् निर्विविक्षोः सततभोगाभिलाषुकायाः । कन्यायाः भावनिवृत्तये भावः मनोरागः ३वरणाभिप्रायो वा तन्निवृत्तये । राज्ञः वीर्योत्कर्षस्तुतिः निन्दैव कल्पते निन्दात्वेन परिणमति ॥ २७० ॥

निन्दाव्याजेन स्तुतिमाह—**चपल इति** । मानपरिपालनमेव मनस्विन्या गौरवहेतुः । अतस्त्वया प्रेयसि स विधेय इति उपदिशन्त्याः सख्याः पुरतः ३प्रतिज्ञातमपि मानस्वीकारं तमनुष्ठातुमसमर्थाया स्वोपहासपरिजिहीर्षन्त्या नायिकाया उक्तिरियम् । हे सखि असौ मन्नायकरूपः जनः । चपलः चञ्चलस्वभावः । निर्दयश्च परपीडानभिज्ञतया दयाशून्यश्चास्ति । येन आगःप्रमार्जनायैव अपराध- ६निराकरणायैव । चाटवः प्रियालापाः । शिक्षिताः । अतः तेन भवतीभिरुपदिष्टेन मानेन । किम् । न किमपि प्रयोजनमित्यर्थः । सः चाटुप्रयोगचतुरः धृतमपि मानं शिथिलयतीत्यर्थः ॥ २७१ ॥

उदाहरणं विशदयति—**दोषाभास इति** । रागात् प्रियस्नेहात् । सखी-जनोद्दिष्टं सखीजनापेक्षितम् । सखीजनोपदिष्टमिति केचित् । मानं कर्तुं अनुष्ठा- ३तुम् । अशक्तया नायिकया चाटुकारतारूपः कोपि गुणः स्त्रीजनमनोहारी दोषा-भासः दोष इव आभासते स दोषाभासः । कृतः । दोषत्वेन निरूपित इत्यर्थः । अत्र निन्दाव्याजेन स्तुतिर्दर्शिता इति लेशः ॥ २७२ ॥

---

१ °निवर्तने. अ. २ निरन्तरान्. क. ३ गुणायेव. कपा.

**उद्दिष्टानां[1] पदार्थानामनूद्देशो[2] यथाक्रमम् ।**
**यथासंख्यमिति प्रोक्तं संख्यानं क्रम इत्यपि ॥ २७३ ॥**
**ध्रुवं ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः ।**
**स्नातुमम्भःप्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥ २७४ ॥**

**॥ इति क्रमः ॥**

हेतुः सूक्ष्मो लवः क्रमः इति क्रमप्राप्तं क्रममुदाहरति––**उद्दिष्टानामिति ।** उद्दिष्टानाम् प्रथमं कथितानाम् । पदार्थानां यथाक्रमम् उद्देशक्रमानुरूपमेव । अनूद्देशः ३पश्चादुक्तानां तत्संबन्धिनां कथनम् । यथासंख्यं तत्संज्ञकोलंकारः । पूर्वोक्तानां तद-नुरोधेन पश्चादुक्तैः पदार्थैः सहान्वयः यथासंख्यालंकार इति भावः । उद्देश-वाक्यगतस्य क्रमपदस्य संगतिं दर्शयति– **संख्यानं क्रम इत्यपीति ।** यथासंख्य ६एव **संख्यानक्रमपर्यायः** इत्यर्थः । तदुक्तं भामहेन—

यथासंख्यमथोत्प्रेक्षामलंकारद्वयं विदुः ।
संख्यानमिति मेधावी नोत्प्रेक्षाभिहिता क्वचित् ॥ (२.८८) इति ।

९अनेन मेधावी यथासंख्यं संख्यानमिति अभिधत्ते इति स्पष्टम् । भोजराजः यथासंख्यं क्रमशब्देन व्यवहरति ॥ २७३ ॥

यथासंख्यमुदाहरति—**ध्रुवं त इति ।** हे तन्वि स्नातुम् अम्भःप्रवि-ष्टायाः जलगतायाः । ते स्मितेक्षणमुखद्युतिः कुमुदोत्पलपङ्कजैः ध्रुवं निश्चयेन । ३चोरिता अपहृता । अत्र कुमुदानां श्वेतत्वं उत्पलानां नीलत्वं पङ्कजानां च आरक्तत्वं ज्ञेयम् । तेन साम्यप्रतीतिः । तथा च कुमुदेन स्मितद्युतिः उत्पलेन ईक्षणद्युतिः पङ्कजेन मुखद्युतिश्च चोरिता इति पूर्वक्रमानुरोधेन उत्तरत्र क्रमः इति ६यथासंख्यम् । अन्यदुदाहरणं यथा––

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च ।
९ तापं च संमदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ इति ॥ २७४ ॥

---

१ निर्दिष्टानां. अ. २ अनुद्देशो. क.

**प्रेयः प्रियतराख्यानं रसवद् रसपेशलम् ।**
**ऊर्जस्वि रूढाहंकारं युक्तोत्कर्षं च तत्त्रयम् ॥ २७५ ॥**

व्यङ्ग्यस्य संलक्ष्यक्रमासंलक्ष्यक्रमौ इति द्वौ भेदौ प्रागस्माभिर्निरूपितौ । तत्र संलक्ष्यक्रमाणां वस्त्वलंकाररूपव्यङ्ग्यानां वाच्यार्थस्य शोभाजनकतया समा- ३सोक्तिरूपकादिनाम्नालङ्कारत्वमुक्तम् । असंलक्ष्यक्रमाणां रसादिवाच्यानामपि वाच्योपस्कारेण अलंकारत्वमुचितमिति तदुपजीवि प्रेयोरसवदूर्जस्वि इत्यलंकारत्रयं दर्शयति--**प्रेय इति** । त्रयाणामसंलक्ष्यक्रमत्वरूपैकधर्मत्वात् एकत्र निवेशः । ६तेषु प्रियतरं भावाभिव्यक्त्या बोद्धव्यस्य प्रीत्यतिशयकरं वक्तुर्वा प्रीत्याधिक्य- सूचकमाख्यानं प्रेयः प्रेयोनामालंकारः । अतिशयेन प्रियत्वात् प्रेयः इत्यर्थः । भावाश्च देवतागुरुशिष्यद्विजपुत्रादावभिव्यज्यमाना रतिः तथा विभावानुभावाभ्यां ९व्यञ्जितः निर्वेदादित्रयस्त्रिंशद्भेदो भावः व्यभिचारिणो भावाश्च । उक्तं च प्रकाशे- रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः इति । देवादिविषयेत्य- प्राप्तरसावस्थोपलक्षणम् । तदुक्तं--

१२ रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोथवा ।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥ इति ।

आचार्यदण्डिनस्तु देवादिविषयकरतिभावव्यञ्जकमाख्यानं प्रेयोलंकारस्य विषय- १५तयाभिप्रेतमिति उदाहरणानुरोधादवगम्यते । एवं च कथनचातुरीवशेन व्यज्य- माना देवादिविषयिका रतिर्यत्र वाच्योपस्कारिका तत्र प्रेयोलंकारः इति लक्षणं निष्पन्नम् । तथा च रसपेशलं रसेन रत्यादिस्थायिभावरूपेण पेशलं सहृदयानन्द- १८जननमाख्यानं रसवदलंकारः । तथा रूढः अभिव्यक्तः अहंकारो गर्वः यत्र तादृशमाख्यानम् ऊर्जस्वि । आख्यानचातुर्येण प्रधानतयाभिव्यज्यमानो गर्वाख्यो व्यभिचारिभावः ऊर्जस्विनामालंकार इत्यर्थः । गर्वलक्षणं हि--

२१ गर्वोभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाविनयावज्ञादिकृत्तु सः ॥ इति ॥

**युक्तोत्कर्षं चेति** । युक्तः अलंकारव्यपदेशोपयुक्तः उत्कर्षः वाच्यशोभा यस्मात् २४तत् । तत्त्रयं तेषां प्रेयःप्रभृतीनां त्रयम् अलंकारव्यपदेशार्हं भवतीत्यर्थः । सादृश्यादयो वाच्यार्थशोभाजनकत्वाद्यथा उपमालंकारादयो भवन्ति तथा भावा-

दयोपि तेनैव कारणेन अलंकारव्यवहार्या भवितुं युक्ता इत्यर्थः । अत्र प्रसङ्गतः
२७रसभावानां किंचित् स्वरूपं दर्शयामः । तत्र विभावानुभावव्यभिचारिभिर्व्यञ्जितो
रतिहासशोकादिश्चित्तवृत्तिविशेषो रसः । तदुक्तम्—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
३० आनीयमानः स्वाद्यत्वं स्थायीभावो रसः स्मृतः ॥ इति ।

भरतोपि विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः । इत्याह । तत्र विभावाः
वासनारूपतया अतिसूक्ष्मरूपेण अवस्थितान् रत्यादीन् स्थायिभावापरपर्यायान्
३३विभावयन्ति आस्वादयोग्यतां नयन्ति ते ललनानायकचन्द्रिकावसन्तादयो ज्ञेयाः ।
तत्र ललनानायकौ आलम्बनविभावौ । चन्द्रिकावसन्तादयश्चोद्दीपनविभावाः इति
विवेकः । अनुभावाश्च रत्यादीन् स्थायिनो येनुभावयन्ति अनुभवविषयीकुर्वन्ति
३६ते अनुभावाः कटाक्षभुजाक्षेपरोमाञ्चप्रभृतयः । अथवा अनु रसोद्बोधानन्तर-
मुद्भवन्ति रसकार्यरूपा ते अनुभावा कटाक्षरोमाञ्चादयः । व्यभिचारिणस्तु
विशेषेण अभितः सर्वाङ्गव्यापितया रत्यादीन् स्थायिनः काये चारयन्ति संचार-
३९यन्ति मुहुर्मुहुरभिव्यञ्जयन्ति ते निर्वेदग्लानिशङ्कादयः त्रयस्त्रिंशत् ज्ञेयाः । तत्र
संयोगात् नाम विभावैरुत्पाद्योत्पादकरूपसंबन्धात् अनुभावैर्गम्यगमकभावरूप-
संबन्धात् व्यभिचारिभिश्च पोष्यपोषकभावरूपसंबन्धाच्च रसनिष्पत्तिर्नाम विभा-
४२वैरुत्पत्तिः अनुभावैरभिव्यक्तिः व्यभिचारिभिः पुष्टिश्च स्थायिनो भवन्ति इति
भट्टलोल्लटः । विभावादिभिः संयोगात् गम्यगमकभावरूपात् अनुमाप्यानुमापक-
भावरूपात् संबन्धात् रसस्य निष्पत्तिरिति श्रीशङ्कुकः । विभावादिभिः संयोगात्
४५भोज्यभोजकरूपसंबधात् रसस्य निष्पत्तिर्भुक्तिरिति भट्टनायकः । अभिनवगुप्त-
पादास्तु स्थायिनां विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूपात् संबन्धात्
विभावादीनां वा परस्परसंयोगात् मीलनात् रसस्य निष्पत्तिरभिव्यक्तिः इति सूत्रार्थं
४८विवृण्वन्ति । अयमेव चालंकारिकसंमतोर्थः । विस्तरस्तु काव्यप्रकाशे तट्टीकादौ
च द्रष्टव्यः । रसविशेषाश्च—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
५१ बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

इति भरतेनोपदिष्टाः । एषां स्थायिभावाश्च तेनैव कथिताः । यथा—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।

५४ जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ इति ।

स्थायित्वलक्षणं तु—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।

५७ आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥ इति ।

एवमेव पण्डितजगन्नाथोऽपि—

सजातीयविजातीयैरतिरस्कृतमूर्तिमान् ।

६० यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ॥ ( ३१ पत्रे )

इति लक्षणमाह । तत्र स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रति-स्थायिभावः । वागङ्गादिविकारदर्शनजन्मा चेतोविकासो हासः । पुत्रादिवियोग-६३मरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोकः । गुरुबन्धुवधादिपरमापराधजन्मा प्रज्वलनाख्यः क्रोधः । परपराक्रमदानादिस्मृतिजन्मा औन्नत्याख्यः उत्साहः । व्याघ्रदर्शनादिजन्मा परमानर्थविषयको वैक्लव्याख्यः चेतोविशेषः भयम् । कदर्य-६६वस्तुविलोकनजन्मा विचिकित्साख्यश्चित्तवृत्तिविशेषो जुगुप्सा । अलौकिकवस्तु-दर्शनादिजन्मा आश्चर्याख्यो विस्मयः । अनुभावास्तु—

अनुभावो विकारस्तु भावसंसूचनात्मकः ।

६९ स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ॥

अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ।

इयुक्तलक्षणाः । एषामुदाहरणानि विस्तरभयान्न प्रदर्श्यन्ते । रसगङ्गाधरादौ तानि ७२द्रष्टव्यानि । तत्र शृङ्गारस्य द्वौ प्रभेदौ संभोगो विप्रलम्भश्च इति । रतेः संयोगकाला-वच्छिन्नत्वे प्रथमः । वियोगकालावच्छिन्नत्वे द्वितीयः । संयोगवियोगौ च दम्पत्योः आवां संयुक्तवियुक्तौ इत्याकारिकौ अन्तःकरणवृत्तिविशेषौ ग्राह्यौ । तेन एकतल्प-७५शयनेऽपि ईर्ष्यादिसद्भावे विप्रलम्भवर्णनमुचितम् इति ज्ञेयम् । व्यभिचारिणो भावास्तु—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।

७८ आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रा विस्मृतिरेव च ॥

८१ त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
स्वप्नो विबोधोमर्षश्चाप्यवहित्थमथोग्रता ॥
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ।

८४ त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥

इति भरतेनोक्ताः । एतेषामपि लक्षणोदाहरणानि प्रकाशादौ द्रष्टव्यानि । प्रकाशकाराः—निर्वेदस्थायिभावोस्ति शान्तोपि नवमो रसः । इति शान्तं रसं स्वी-
८७कुर्वन्ति । निर्वेदो नाम नित्यानित्यवस्तुविचारजन्मा विषयविरागः । रसभावविवेचनविस्तारस्तु नाट्यशास्त्रे षष्ठसप्तमाध्याययोः ध्वन्यालोकादौ च द्रष्टव्यः । अत्रेदमवधार्यम् । उपर्युक्तभावेषु देवादिविषयकरतिभावस्य प्रेयोनामालंकारत्वम् । गर्वाख्य-
९०भावस्य च ऊर्जस्विनामालंकारत्वम् । अवशिष्टभावानां तथा रसाभासभावाभास भावशान्तिभावोदयभावसंधिभावशबलतानां च रसवदलंकारत्वं बोध्यम् । रसपेशलम् इत्यत्र रसपदस्य रस्यमानपरत्वात् भावानामपि रसपदेनैव संग्रहो ज्ञेयः ।
९३तथा चोक्तम्—

रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।
संधिः शबलता चेति सर्वेपि रसनाद्रसाः ॥ इति ।

९६आचार्यदण्डिनो मते अङ्गित्वेनाङ्गत्वेन वाभिव्यज्यमाना रसादयः अलंकारतां प्राप्नुवन्ति । उभयोरपि काव्यशोभाजनकत्वाविशेषात् । ननु अङ्गिनो रसादेरलंकार्यत्वात् कथमलंकारत्वम् । रसस्य प्राधान्येलंकार्यत्वम् तदन्यत्र चालंकारत्वमुक्तं
९९ध्वन्यालोकलोचनकारैः यथा—

प्रधानेन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ इति ।

१०२परं दण्डिनो मते शब्दार्थात्मकस्य काव्यस्यैवालंकार्यत्वेन तदुपस्कारकस्य व्यङ्ग्यमात्रस्य काव्यशोभाकरत्वेन अलंकारव्यपदेशे बाधाभावात् । काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते । इति अलंकारसामान्यलक्षणस्यात्रापि निर्बाधप्रवृत्तेः ।
१०५यदुक्तं विश्वनाथेन ध्वन्यालोकानुसारिणा—

रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।
गुणीभूतत्वमायान्ति यदालंकृतयस्तदा ॥
१०८ रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।
भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ॥ (१०.९५) इति ।

तत्र रसवत्प्रेयऊर्जस्विनां लक्षणं मूलकृतोक्तम् । प्रशाम्यदवस्था भावप्रशमः । सः
१११यत्र परस्याङ्गं तत्र समाहितालंकारः । भावस्य उद्गमावस्था भावोदयः । तस्य परा-
ङ्गत्वे भावोदयालंकारः । द्वयोर्विरुद्धयोर्भावयोः परस्परस्पर्धा भावसंधिः । तस्य
पराङ्गत्वे भावसन्धिरलंकारः । बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिर्भावमिश्रत्वम् ।
११४तस्य पराङ्गत्वे भावमिश्रालंकारः । रसस्य अङ्गित्वे अलंकार्यत्वमङ्गत्वेलंकारत्वमिति ।
तदेतत्प्रकाशकारादीनां मतं दूषयन्त आहुः प्रेमचन्द्रशर्माणः । अत्र ते नव्याः
प्रष्टव्याः । किं प्रधानतया प्रतीयमानस्य व्यङ्ग्यमात्रस्यैवालंकार्यत्वम् उत तथा-
११७भूतस्य रसादेरेवेति । तत्र न तावत् प्रथमः । समासोक्त्यप्रस्तुतप्रशंसापर्यायोक्तादौ
प्रधानतयैवाभिव्यज्यमानानां वस्त्वलंकाराणां तैरप्यलंकारत्वाभ्युपगमात् । न च
तत्र वाच्यार्थस्यैव प्रधानत्वं प्रतीयमानानां वस्त्वलंकाराणां त्वप्रधानत्वम् ।
१२०अप्रधानानां त्वलंकारत्वमुचितमेवेति वाच्यम् । तत्र तत्र व्यङ्ग्यानामेव प्राधान्य-
स्यानुभवसिद्धतयानपलपनीयत्वात् । नापि द्वितीयः । सामान्येन काव्यात्मकतया-
भ्युपगतानां वस्त्वलंकाररसादिव्यङ्ग्यानां मध्ये वस्त्वलंकाराणामलंकारत्वम् रसादी-
१२३नामेवालंकार्यत्वम् इति निर्वक्तुमयोग्यत्वात् । न च रसादिव्यङ्ग्यस्यैव प्रधानस्य
काव्यात्मकत्वादलंकार्यत्वं न वस्त्वलंकारयोः इति विश्वनाथोक्तमादरणीयम् ।

यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः ।
१२६ संध्याभ्रमं प्राप्तवतामकाण्डेप्यनङ्गनेपथ्यविधिं व्यधत्त ॥

इत्यादौ तेनापि अङ्गभूतेन शृङ्गारेणैव काव्यव्यवहाराभ्युपगमात् । संलक्ष्यक्रम-
व्यङ्ग्यरूपध्वनिभेदस्य सर्वैः आलंकारिकैरभ्युपगतत्वेन रसादेरेव काव्यात्मत्वप्रति-
१२९पादनस्य बहुशो दूषितत्वाच्च । तस्मात् व्यङ्ग्यतया विशिष्टानां वस्त्वलंकाराणां
रसादीनां काव्यशोभाजनकतयालंकारत्वं युक्त्यनुभवप्रतिपन्नमिति प्राचां सरणिरेव
साधीयसी इति आहुः । अत्र रसस्य अलंकार्यत्वम् पूर्वं च रसवद्वाचि इत्या-
१३२दिना गुणत्वमुक्तम् तत् कथमेकस्यैव गुणत्वमलंकारत्वं चेति शङ्कायाः समाधान-
मग्रे मूले एव स्फुटीभविष्यति ॥ २७५ ॥

अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा[1] भवेत् प्रीतिस्तवैवागमनात् पुनः ॥ २७६ ॥

इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः ।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः ॥ २७७ ॥

सोमः सूर्यो मरुद्भूमिर्व्योम होतानलो जलम् ।
इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव के वयम् ॥ २७८ ॥

प्रेय उदाहरति—**अद्येति** । गृहागतं भगवन्तं प्रति विदुरोक्तिरियम् । हे गोविन्द त्वयि गृहागते सति मदीयभवनं संप्राप्ते सति । अद्य मम या प्रीतिर्जाता । ३कालेन कालान्तरेण ! तवैवागमनात् पुनरपि त्वदागमनेनैव । एषा प्रीतिः अद्यतनी-सदृशी प्रीतिः । भवेत् भविष्यति । त्वयि गते त्वदितरसत्पुरुषागमनेन एवंविधा प्रीतिर्नैव भविष्यति इत्यर्थः । अत्र विदुरस्य भगवद्विषयकरतिभावः वाक्यभङ्ग्याभि-६व्यज्यमानः भगवतः प्रीत्यतिशयजनने वाच्यस्य शोभां पुष्णाति ॥ २७६ ॥

उदाहरणं संगमयति—**इत्याहेति** । इति पूर्वोक्तप्रकारम् । विदुरः युक्तं तद्भक्तेरनुरूपम् । आह । यतस्तस्य अन्यतः भगवदितरस्मात् । तादृशी धृतिः संतोषः । ३नास्ति । अथवा अन्यतः विदुरेतरे पुंसि । तादृशी धृतिः धैर्यम् । नास्ति । भक्तिमात्रेण केवलभक्त्या । न तु तच्छून्यैरुपचारैः इत्यर्थः । समाराध्यः हरिः ततः तस्माद्विदुरवचनात् । सुप्रीतः संतुष्टः । अभूत् । अत्र बोद्धव्यस्य भगवतः प्रीति-६करमेतदाख्यानमिति प्रेयोलंकारः । उद्योगपर्वस्थितस्य—

या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात् ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥

९इत्यस्य श्लोकस्य प्रतिरूपकोयं श्लोकः इति प्रेमचन्द्रशर्मादयः ॥ २७७ ॥

बोद्धुः प्रीतौ पूर्वमुदाहृतम् इदानीं वक्तृप्रीतावुदाहरति—**सोम इति** । हे देव सोमः चन्द्रः । सूर्यः । मरुत् वायुः । भूमिः । व्योम आकाशम् । होता यजमानः । ३अनलः अग्निः । जलम् च । इति रूपाणि एवंविधानि स्थूलानि अष्टौ रूपाणि । अति-क्रम्य विलङ्घ्य । त्वां सच्चिदानन्दैकमयम्—अणोरणीयान् महतो महीयान् इत्यादि-श्रुतिशतवर्णितं भगवन्तम् । द्रष्टुं साक्षात्कर्तुम् । के वयम् पामराः । वयं त्वत्स्वरूपा-

---

१ नैषा काले. बपा. २ वाक्यं. बपा.

इति साक्षात्कृते देवे राज्ञो[1] यद्रातवर्मणः[2] ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम्[3] ॥ २७९ ॥
मृतेति[4] प्रेत्य संगन्तुं यया मे मरणं मतम्[5] ।

६वलोकने आकलने वा न समर्थाः इत्यर्थः । एवं स्थिते यत्तव दर्शनं तत्र तवानुग्रह एव हेतुरिति भावः । अत्र केचित्—इति रूपाणि सोमादिस्थूलरूपा अष्टौ मूर्तीरतिक्रम्य सूक्ष्मस्वरूपेण वर्तमानं सच्चिदानन्दं त्वां द्रष्टुम् इति अति-
९क्रमणक्रियां भगवत एव वर्णयन्ति ॥ २७८ ॥

उदाहरणं विशदयति—इतीति । देवे महेश्वरे । साक्षात्कृते तपोभिः प्रत्यक्षीकृते । रातवर्मणः तत्संज्ञकस्य । राज्ञः नृपतेः । यत् प्रीतिप्रकाशनं महेश्वर-
३विषयकरतिभावसूचनम् । तच्च तदपि । प्रेयः इति अवगम्यताम् ज्ञायताम् । अत्र केवलभक्तस्यैव प्रीत्यभिव्यक्तिर्बोद्धव्या । सोमादिभिन्नस्य प्राकृतरूपगुणशून्यस्य निष्कलस्य परब्रह्मणः जन्यप्रीतेरभावात् न आराध्यगता प्रीतिरत्रास्तीति भावः ।
६रतिर्देवादिविषया इति भावलक्षणे आदिशब्देन मुनिनृपादीनां संग्रहः । तत्र देवविषयकरतेरुदाहरणं ग्रन्थाकृता दर्शितम् । मुनिनृपादीनां यथा—

हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
९ शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेपि योग्यताम् ॥

इयं हि नारदमुद्दिश्य भगवतः श्रीकृष्णस्योक्तिः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
१२ स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिमां प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ इति ।

१५अत्र पूर्वार्धे भूविषया उत्तरार्धे राजविषया रतिः। तत्र चाङ्गाङ्गिभावः ॥ २७९ ॥

रसवदलंकारं दिदर्शयिषुः रसेषु प्राथम्यात् सर्वजनाभिनन्दनीयत्वाच्च प्रथमं शृङ्गारमुदाहरति—मृतेति । वासवदत्तायाः दाहप्रवादेन परं दुःखितस्य

---

१ राज्ञोभूद्. अ. २ राजवर्मणः. ब, ड, प. ३ इत्यनु०. अ
४ मृतेभिप्रेत्य संगंतु. बपा, ५ वृत्तं. अ.

सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥ २८० ॥

प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।

३पुनस्तां प्राप्य हर्षस्य परां कोटिमुपगतस्य वत्सराजस्योक्तिरियम् । मृता अग्निदाहात् पञ्चत्वं गता इति हेतोः । यया वासवदत्तया सह । प्रेत्य परलोके संगन्तुम् संयोगं प्राप्तुम् । मे मया । मरणं मतं प्रार्थितम् । सा एव अवन्ती अवन्तिदेशोद्भवा ६वासवदत्ता । कथम् अत्रैव जन्मनि मया लब्धा । अत्र संभोगशृङ्गारः । तदुक्तं प्रदीपे––

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
९ दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥

अयं च विप्रलम्भानन्तरं वर्णितः पुष्टिमाप्नोति इत्यत्र विप्रलम्भानन्तरं वर्णितः । तदुक्तं––

१२ न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते ॥ इति ।

विप्रलम्भलक्षणम् प्रदीपे––

१५ भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ इति ॥

अयं च विप्रलम्भः पूर्वरागमानप्रवासकरुणात्मकतया चतुर्विधः । तत्र करुणा-१८त्मको । यथा––

यूनोरेकतरस्मिन् गतवति लोकान्तरे पुनर्लभ्ये ।
विमनायते यदेकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥इति॥२८०॥

नायिकाविषयकप्रीतेरत्रापि प्रतीयमानत्वात् कुतो नायं प्रेयोलंकारः इत्याह––**प्रागिति** । प्राक् पूर्वोदाहृतप्रेयोलंकारोदाहरणद्वये । प्रीतिः दर्शिता । ३संप्रयोगशून्या रतिः प्रीतिः । सा प्रेयोलंकारविषयीभूता इति तदलंकारे सा दर्शिता । तत्र हि भगवद्विषयका रतिः विभावादिभिरपरिपुष्टा अतः प्रीतिः । तदुक्तम्––

---

१ सैषावन्ती. ब, क; सैषा तन्वी. बपा, ड, प.

**रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥**

६ मनोनुकूलेष्वर्थेषु सुखसंवेदनं वचः ।
असंप्रयोगविषया सैव प्रीतिर्निगद्यते ॥ इति ।

संप्रयोगो नाम विभावादिभिः परिपोषः । स तु पूर्वोदाहरणे नास्ति इति तत्र ९प्रीतिः । अत्र तु तादृशः परिपोषो वर्तते इति रतिः । तदाह—**सेयं रतिरिति ।** सा तादृशी देवादिविषयकपूर्वदर्शितरतिसजातीया रतिः—रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् । इत्याद्युक्तलक्षणा । प्रकृते कान्ताविषयकानुराग इत्यर्थः । रूप-१२बाहुल्ययोगेन रूपस्य स्वरूपस्य बाहुल्यं विभावानुभावव्यभिचारिभावादिभिः परिपोषः तस्य योगेन संबन्धेन । शृङ्गारतां गता अलौकिकानन्दसंपादकत्वेन शृङ्गाररसत्वं प्राप्ता । अतः इदं वचः रसवत् रसवदलंकारः इत्यर्थः । अत्र १५वासवदत्ता विभावः । तदुक्तमधुरवचनसुहास्यादयो अनुभावा उन्नेयाः । हर्ष-विस्मयादयश्च व्यभिचारिणः । एभिः परिपोषं नीतो रत्याख्यः स्थायिभावः शृङ्गाररसतामापद्यते । शृङ्गारपदार्थस्तु—

१८ शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
पुरुषप्रमदाभूमिः शृङ्गार इति गीयते ॥ इति ॥

रसोद्बोधे विभावदयस्त्रयः समुदिता हेतुत्वं भजन्ते । यत्र तु कस्यचित् न्यूनता २१तत्र तस्याक्षेपात् समुदितत्वं बोद्धव्यम् । तदुक्तम्—

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ।
झटित्यन्यतमाक्षेपे तदा दोषो न विद्यते ॥ इति ।

२४तथा च—

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥

२७इत्यत्र केवलं मुग्धदयितामेघादिरूपाणामालम्बनोद्दीपनविभावानामेव वर्णनं न तु अनुभावव्यभिचारिभावानाम् । तथापि आक्षेपेण तत्कल्पनया समुदितत्वम् बोध्यम् । यत्र तु आक्षेपे क्लेशः तत्र तु दोष एव । तदुक्तं प्रकाशे—

३० परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥

निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।
सोयं दुःशासनः पापो लब्धः[1] किं जीवति क्षणम् ॥२८२॥
इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां[2] गतः ।
भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥ २८३ ॥
अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि संभवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः इति ॥ २८१ ॥

रौद्रमुदाहरति—**निगृह्येति** । येन दुःशासनेन । मम अग्रतः मामगणयित्वेत्यर्थः । कृष्णा द्रौपदी । केशेषु निगृह्य गृहीत्वा । आकृष्टा सोयं पापः दुःशासनः लब्धः मयेति शेषः । किं क्षणम् अत्यल्पकालमपि । जीवति नैव जीविष्यतीत्यर्थः ॥२८२ ॥

रौद्ररसत्वं विशदयति—**इतीति** । इति उक्तप्रकारेण । परां कोटिमारुह्य विभावादिभिः परिपुष्टिं प्राप्य । क्रोधः स्थायिभावः स च—प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः इत्युक्तलक्षणः । तैक्ष्ण्यस्य अपचिकीर्षायाः प्रबोधः उत्कटत्वं क्रोधः । तैक्ष्ण्यजनकचित्तवृत्तिविशेष इति यावत् । रौद्रात्मतां रौद्ररसत्वम् । गतः प्राप्तः । अत्र दुःशासनः आलम्बनविभावः । कृष्णाकेशकषर्णादिस्मरणमुद्दीपनविभावः । पाप इत्यधिक्षेपवचनमनुभावः । प्रतीयमानाश्च गर्वादयो व्यभिचारिणः । एतैः पुष्टिं प्रापितः क्रोधस्थायिभावः रौद्ररसत्वमापन्नः । तद्वर्णनपरमेतद्वचः रसवदलंकारालंकृतम् ॥ २८३ ॥

वीरमुदाहरति—**अजित्वेति** । सार्णवां अर्णवनेमिम् । उर्वीम् मेदिनीम् । अजित्वा शत्रुपराजयेन आत्मसादकृत्वा । विविधैः अश्वमेधप्रभृतिभिः मखैः । यज्ञैः । अनिष्ट्वा यजनमविधाय । अर्थिभ्यः याचकेभ्यः । अर्थं द्रविणम् । अदत्त्वा अनर्पितीय । अहं पार्थिवः पृथिव्या ईश्वरः । कथं भवेयम् । एतत्त्रितयशून्यस्य पार्थिवत्वं विडम्बनैवेति भावः । अत्र क्त्वान्तवाक्यत्रयेण क्रमेण युद्धधर्मदानविषयक उत्साहः प्रकटितः । तेन च अस्य नृपस्य युद्धवीरत्वं धर्मवीरत्वं दानवीरत्वं च वर्णितं भवति । दयावीरोदाहरणं यथा साहित्यदर्पणे—

---

१ दृष्टः. क. २ रौद्रत्वमागतः. अ.

अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ २८४ ॥

इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना ।

रसवत्त्वं गिरामासां[1] समर्थयितुमीश्वरः[2] ॥ २८५ ॥

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।

साधिशेते कथं तन्वी[3] हुताशनवतीं चिताम् ॥ २८६ ॥

इति कारुण्यमुद्रिक्तमलंकारतया स्मृतम् ।

९ शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत् किं भक्षणात् त्वं विरतो गरुत्मन् ॥
( १८१ पत्रे ) इति ।

१२अत्र गरुडस्य तृप्तिमपश्यतः जीमूतवाहनस्योक्तिरियं दयाया उत्साहातिशयं दर्शयति इति दयावीरः । एवं च युद्धवीरा रामार्जुनप्रभृतयः धर्मवीरा युधिष्ठिर-प्रभृतयः दानवीराः परशुरामबलिप्रभृतयः दयावीराश्च बुद्धजीमूतवाहनप्रभृतयः १५इति बोद्धव्यम् ॥ २८४ ॥

वीररसत्वं विशदयति---**इतीति** । इति पूर्ववर्णितप्रकारकः । उत्साहः । कार्यारम्भेषु संरम्भः । इत्यादिना उक्तलक्षणः । प्रकृष्टात्मा विभवादिभिः परिपुष्ट-३स्वरूपः । तिष्ठन् वीररसात्मना वर्तमानः । आसां गिरां रसवत्वं रसवदलंकारत्वम् । समर्थयितुं संपादयितुम् । ईश्वरः समर्थः । अस्ति इति शेषः । अत्र युद्धे विजेतव्याः शत्रवः धर्मे यज्ञाः दाने याचकाः आलम्बनविभावाः । सहायान्वेषणादयः प्रतीय-६माना अनुभावाः । हर्षधृतिस्मृत्यादयो व्यभिचारिणः । एतैरभिव्यक्तः उत्साह-रूपस्थायिभावः वीररसतां लभते ॥ २८५ ॥

करुणमुदाहरति---**यस्या इति** । यस्याः कोमलाङ्ग्याः कुसुमशय्यापि रुजाकरी पीडाकरी । भवतीति शेषः । सा तन्वी सुकुमारगात्री । हुताशनवतीं ३ज्वलनप्रदीप्ताम् । चितां कथं अधिशेते अध्यारोहति । अतिकष्टास्पदमेतदिति भावः ॥ २८६ ॥

करुणत्वं प्रकटयति—**इतीति** । इति एवं वर्णितम् । कारुण्यं करुणरस-

१ गिरां तासां. अ. २ समर्प॰. ब. ३ देवी. अ, बपा.

**तथा[1]परेपि बीभत्सहास्याद्भुतभयानकाः ॥ २८७ ॥**

**पायं पायं तवारीणां शोणितं पाणिसंपुटैः ।**
**कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥ २८८ ॥**

**इदमम्लानमाना[2]यां लग्नं स्तनतटे तव ।**

स्थायिभावः शोकः—इष्टनाशादिभिश्चेतोवैक्लव्यं शोकः उच्यते । इत्युक्तलक्षणः । उद्रिक्तं विभावादिभिः परिपुष्टं सत् । अलंकारतया रसवदलंकारत्वेन स्मृतम् । पूर्वमहर्षिभिरिति शेषः । अत्र विगतजीविता तन्वी आलम्बनविभावः । कुसुमशय्यादय उद्दीपनविभावाः । करुणवचनमनुभावः । कथमित्यनेन प्रतीयमानाश्चिन्तादयो व्यभिचारिणः । एतैः पुष्टिं नीतः शोकाख्यः स्थायिभावः करुणरसत्वं भजते । अथ अपरेपि पूर्वदर्शितशृङ्गारवीररौद्रकरुणरसवत् अन्येपि बीभत्सहास्याद्भुतभयानका रसाः सन्ति । तेषामपि स्वरूपं दर्शयाम इत्यर्थः । प्रस्ताववाक्यमेतत् ॥ २८७ ॥

बीभत्समुदाहरति—**पायं पायमिति** । अन्त्राणि पुरीततः भूषणानि येषां ते । कौणपाः राक्षसाः । कबन्धैः सह मृतानां शिरोविहीनक्रियायुतशरीरैः सह । तवारीणां शोणितं पाणिसंपुटैः हस्तपुटकैः । पायं पायं पीत्वा पीत्वा । नृत्यन्ति सप्रमोदं क्रीडन्ति । अत्र जुगप्सारूपस्थायिभावः । दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते । इति तल्लक्षणम् । तस्याः कौणपा आलम्बनविभावः । प्रतीयमाननिष्ठीवनच्छर्दनादयोनुभावाः । मोहापस्मारादयो व्यभिचारिणः । तैश्च परिपुष्टा सा बीभत्सरसत्वं भजते । बीभत्सश्चात्र राजविषयकरतौ गुणीभूतः । तादृशरतिश्च वर्णनीयप्रीतिकरत्वात् प्रेयोलंकारः । इति प्रेयोरसवतोः संकरः ॥ २८८ ॥

हास्यमुदाहरति—**इदमिति** । सखीनां पुरतो मानकथां कुर्वतीं रहसि च नायकेन सह कृतक्रीडां नायिकां प्रति तत्सख्या उपाहासोक्तिरियम् । अम्लानः म्लानिमप्राप्तः अस्मद्वचनैर्न न्यूनीभूत इत्यर्थः । तादृशः मानो यस्याः सा तस्याः । तव स्तनतटे स्तनप्रान्ते । लग्नं आसक्तम् । नवं न तु प्राचीनम् । नखपदं नखव्रणचिह्नम् । हे सखि उत्तरीयेण छाद्यतां आच्छाद्यताम् । मानिन्यास्ते नायकसंभोगसूचकं नखव्रणं झटिति आच्छाद्यताम् । अन्यथास्मत्पुरतो दर्शिता

१ अथापरे. क, २ °मालाया. अ, बपा.

**छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥ २८९ ॥**
**अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।**
**शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम् ॥ २९० ॥**
**इदं मघोनः कुलिशं धारासंनिहितानलम् ।**
**स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥ २९१ ॥**

मानकथा कथं यथार्था स्यात् इति परिहासोक्तिः । अत्र—वागादिविकृताच्चेतोविकासो हास इष्यते । इत्युक्तलक्षणः हासः स्थायिभावः । तादृशी कपटमानवती नायिका आलम्बनविभावः । नखक्षतमुद्दीपनविभावः । तादृशसोल्लुण्ठवचनान्यनुभावः । प्रतीयमाना अवहित्थादयो व्यभिचारिणः । एतैः परिपुष्टो हासस्थायिभावो हास्यरसतां भजते । अम्लानमानाया इत्यत्र अम्लानमालाया इति पाठो दृश्यते । स तु न सरसः ॥ २८९ ॥

अद्भुतमुदाहरति—**अंशुकानीति** । एषां नन्दनशाखिनां कल्पवृक्षाणाम् । प्रवालानि कोमलपत्राणि । अंशुकानि वसनानि । पुष्पं हारादिभूषणम् । शाखाश्च मन्दिराणि गृहाणि । चित्रम् एतत् विस्मयास्पदम् । अत्र—विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात् । इत्युक्तलक्षणस्य विस्मयस्थायिभावस्य दिव्यनन्दनशाखिनः आलम्बनविभावाः । तेषामंशुकादिमत्त्वगुणमहिमा उद्दीपनविभावः । प्रतीयमानाः स्तम्भखेदादयोनुभावाः । तथैव वितर्कादयश्च व्यभिचारिणः । एभिः परिपुष्टो विस्मयोऽद्भुतरसत्वं भजते ॥ २९० ॥

भयानकं दर्शयति—**इदमिति** । मघोनः महेन्द्रस्य । इदं धारासंनिहितानलं धारासु निशितमुखेषु संनिहितः अनलः यस्य तत् । एतादृशं कुलिशं वज्रमस्तीति शेषः । यस्य स्मरणं दैत्यस्त्रीगर्भपाताय असुराङ्गनागर्भस्रंसनाय । कल्पते प्रभवति । तत्स्मरणेन दैत्याङ्गनानां गर्भाः भयेन च्युता भवन्तीत्यर्थः । अत्र—रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम् । इत्युक्तलक्षणस्य भयस्थायिभावस्य मघवा आलम्बनविभावः । कुलिशमुद्दीपनविभावः । गर्भपातादयोनुभावाः । प्रतीयमाना आवेगसंमोहादयश्च व्यभिचारिणः । एतैः परिपुष्टो भयस्थायिभावः भयानकरसत्वं भजते । अष्टौ नाट्ये रसाः स्मृताः इत्युक्त्यनुरोधेन एते अष्टौ रसाः प्रदर्शिताः । शान्ताख्यो नवमो रसः श्रव्यकाव्ये दृश्यते । तल्लक्षणं प्रकाशे—

---

१ द्रवं. अ.

निर्वेदस्थायिभावोस्ति शान्तोपि नवमो रसः । इति । अन्यत्रापि--

न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।

१२ रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥ इति ।

तदुदाहरणं--

अहौ वा हारे वा कुसुमशयने वा दृषदि वा

१५ मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।

तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः ।

कदा पुण्येरण्ये शिव शिव शिवेति प्रलपतः ॥ इति ।

१८अत्र हि मिथ्यात्वेन परिभाव्यमानं निखिलं जगदालम्बनम् । तपोवनाद्युद्दीपनम् । अहिहाराद्योः समदर्शनमनुभावः । मतिधृतिहर्षाः व्यभिचारिभावाः । एतैः निर्वेद-स्थायिभावः शमस्थायिभावो वा परिपोषं गतः शान्तरसत्वेन पर्यवस्यति । केचित् २१पुनः भक्तिरसमन्यं स्वीकुर्वन्ति । जगन्नाथपण्डितराजस्तु ( ४५ पत्रे ) कथमेते एव रसाः । भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य २४दुरपह्नवत्वात् । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः । न चासौ शान्तरसे अन्तर्भावमर्हति । अनुरागस्य वैराग्यविरुद्धत्वात् । उच्यते । भक्तेर्देवादिविषय-रतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः ।

२७ रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।

भावः प्रोक्तस्तदाभासा ह्यनौचित्यप्रवर्तिताः ॥

इति हि प्राचां सिद्धान्तात् । न च तर्हि कामिनीविषयाया अपि रतेर्भावत्वमस्तु ३०रतित्वाविशेषात् । अस्तु वा भगवद्भक्तेरेव स्थायित्वम् कामिन्यादिरतीनां च भावत्वं विनिगमकाभावादिति वाच्यम् । भरतादिमुनिवचनानामेवात्र रसभावत्वादि-व्यवस्थास्थापकत्वेन स्वातन्त्र्यायोगात् । इति एवं केवलभरतवचनप्रामाण्येन ३३भक्तिरसं भावत्वेन सोमन्यत । परं शाण्डिल्यवर्त्मानुगा भक्तिरसं स्वीकुर्वन्त्येव । तदुक्तं भगवद्भक्तिचन्द्रिकामृतरसोल्लासे--

परत्वानासङ्गं जनयति रतिर्या नियमतः

३६ परस्मिन्नेवास्मिन् समरसतया पश्यत इमम् ।

**वाक्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रसः ।**
**इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥ २९२ ॥**

**॥ इति रसवच्चक्रम् ॥**

**अपकर्ताहमस्मीति हृदि ते मा स्म भूद्भयम् ।**

परप्रेमाढ्येयं भवति परमानन्दमधुरा
परा भक्तिः प्रोक्ता रस इति रसास्वादनचणैः ॥ इति ।

तथा रसाभासभावाभासादयोपि रसनाद्रसाः । तेषां सद्भावे रसवदेवालंकारः । तत्र अनौचित्येन प्रवृत्तौ रसभावौ रसाभासभावाभासौ । भावोदयादीनां स्वरूपं पूर्वमेव कथितम् । तेषामुदाहरणान्यपि कुवलयानन्दादिषु द्रष्टव्यानि ॥ २९१ ॥

प्रथमपरिच्छेदे गुणनिर्वचनप्रसङ्गे मधुरं रसवद्वाचि इत्यनेन रसवत्त्वस्य माधुर्यगुणत्वमुक्तम् । इह चालंकारत्वम् । तत्र क उभयोर्भेद इति दर्शयति— **वाक्यस्येति** । माधुर्ये मधुरगुणे । वाक्यस्य अग्राम्यता ग्राम्यतादोषाभावसमानाधिकरणालंकारत्वमित्यर्थः । सैव योनिर्व्यञ्जिका यस्य सः दर्शितः—

कामं सर्वोप्यलंकारः रसमर्थे निषिञ्चति ।
तथाप्यग्राम्यतैवेनं भारं वहति भूयसा ॥

इति कथितः । इह रसवदलंकारे तु । गिरां वाचाम् । अष्टरसायत्ता शृङ्गाराद्यष्टरसाधीना । रसवत्ता रसवदलंकारवत्ता । स्मृता । अयं भावः—ग्राम्यत्वाभावसमानाधिकरणरसव्यञ्जकालंकारादिमत्त्वस्य माधुर्यगुणत्वं पूर्वमुक्तम् । इह तु केवलरसानामेवालंकारत्वमुक्तम् । अतो न माधुर्यरसवत्तयोरभेदः इति ज्ञेयम् । अत्र अष्टेत्यनेन आचार्यदण्डिनः शान्तो रसो नाभिप्रेत इति सूच्यते ॥ २९२ ॥

ऊर्जस्विनं दर्शयति—**अपकर्ताहमिति** । समराङ्गणात् धावमानं प्रति कस्यचित् उक्तिरियम् । अहं ते अपकर्ता अस्मि अपकारम् आचरिष्यामि । इति भयं ते हृदि मा स्म भूत् मा भवतु । मे खड्गः विमुखेषु जातु कदाचिदपि प्रहर्तुं न वाञ्छति । तदुक्तं मनुना —

नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥( ७.९३ ) इति ।

---

१ वाच्यस्य, कपा. २ °योनेः. क. ३ माधुर्यं. क.

विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥ २९३ ॥
इति मुक्तः परो युद्धे निरुद्धो दर्पशालिना ।
पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम् ॥ २९४ ॥

॥ इत्यूर्जस्वि ॥

अत्र—

गर्वो मदप्रभावश्रीविद्यासत्कुलजन्मभिः ।
९ अवज्ञा सविलासाङ्गदर्शनाविनयादिकृत् ॥

इत्युक्तलक्षणो गर्वरूपो व्यभिचारिभावः स्थायिभावमुत्साहमाच्छाद्य उद्रिक्ततया प्रकाशते इति ऊर्जस्विनामालंकारः । अयं च—व्यभिचारी तथाञ्जितः इति १२प्रकाशकृदुक्तेर्भाव एव । ऊर्जः बलं तत्प्रकाशनादूर्जस्वि इति नाम्नात्र व्यवह्रियते। अत्राहुः प्रेमचन्द्रशर्माणः—यत्र त्वयमेव गर्वरूपव्यभिचारिभावः स्थायिनि उत्साहे निलीयते तत्र वीरो रसः । स च पूर्वोक्तरसवन्नाम्ना व्यपदिश्यते । यथा—

१५ क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
१८ किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

अत्र पादत्रयेणोद्रिक्ततया व्यज्यमानेोऽपि गर्वश्चतुर्थपादव्यङ्ग्यस्य रामजयोत्साहाख्यस्थायिभावस्य कुक्षौ विलीयते । अत एवेदं प्रकाशकारेण वीररसोदाहरण- २१त्वेनोपन्यस्तम् । तस्मादयं रसवदलंकार एव । नव्यास्तु रसाभासो भावाभासो वा रसान्तरादेरङ्गत्वमापन्नः सन् ऊर्जस्व्यलंकारो भवतीत्याचक्षते । तन्न रुचिरम् । तथात्वे ऊर्जस्विसंज्ञाया अन्वर्थतानुपपत्तेः । अलंकारसंज्ञानां तथात्वस्यैव नियमात् । २४इति ॥ २९३ ॥

उदाहरणं विशदयति—इतीति । दर्पशालिना अहंकारवता । केनापि पुंसा वीरेण । एवमुक्त्वा युद्धे निरुद्धः पराजितः । परः शत्रुः । मुक्तः गन्तुमनुज्ञातः । ३तत् तस्मात् । अयं ऊर्जस्व्यलंकारो ज्ञेयः । एवमादिकम् यथा अत्र वीररसाव्यभिचारी गर्वः ऊर्जस्वित्वेनोक्तः तथा अन्यरसाव्यभिचारी गर्वः ऊर्जस्वी भवति इत्यर्थः ॥ २९४ ॥

---

१ एवमुक्त्वा, ब, क, ड, प.

अर्थमिष्टमनाख्याय साक्षात् तस्यैव सिद्धये ।
यत् प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते ॥ २९५ ॥

पर्यायोक्तं लक्षयति—अर्थमिति । इष्टं प्रतिपादनाभिलषितम् । अर्थं साक्षात् वाचकशब्देन । अनाख्याय अप्रतिपाद्य । तस्यैव इष्टार्थस्यैव । सिद्धये सचम-
३त्कारप्रतिपत्तये । यत् प्रकारान्तराख्यानम् प्रकारान्तरेण चातुर्यद्योतकभङ्गिविशेषेण आख्यानं व्यञ्जनया द्योतनम् । तत् पर्यायोक्तम् पर्यायेण तदर्थकशब्दान्तरेण विव-क्षितार्थस्योक्तत्वात् पर्यायोक्तम् । कथ्यते इति शेषः । पर्यायता च शब्दानामेकार्थ-
६प्रतिपादकता । सा च एकयैव वृत्त्येति न नियमः । वृत्त्यन्तरेणापि तदर्थप्रति-पादकत्वे पर्यायतानपायात् । तथा च विवक्षितमर्थं साक्षात् तद्वाचकपदेन अकथयित्वा वैचित्र्यविशेषाय प्रकारान्तरेण तत्कथनं पर्यायोक्तम् । वाच्यार्थस्य
९व्यञ्जनया प्रतिपादनं पर्यायोक्तमित्यर्थः । अत्र व्यञ्जनया वाच्यार्थस्यैवाभिधानम् । ध्वनौ तु न वाच्य एवार्थो विषयः इति ततो भेदः । अपरं च अत्र व्यङ्ग्यार्थः अतिस्फुटतया न तथा अतिशेते यथा उक्तिवैचित्र्यमिति नास्य ध्वनित्वं नापि
१२गुणीभूतव्यङ्ग्यत्वं किंतु चित्रकाव्यमेवैतत् । प्रेमचन्द्रशर्माणस्तु—विवक्षितार्थश्च क्वचित् वाच्यार्थनियतसंबन्धित्वात् वक्त्रादिवैशिष्ट्यप्रतीतिमन्तरेणापि झटिति प्रयुक्तशब्देन व्यज्यते क्वचिच्च वाच्य एव प्रकारान्तरेण व्यज्यते इत्यस्य द्वौ भेदौ ।
१५एवमस्य व्यङ्ग्यमूलकेभ्योलंकारेभ्यः भेदो बोद्धव्यः । तेषु निरुक्तरूपत्वाभावात् । न च—

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
१८ ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

इत्यादौ वाच्यव्यङ्ग्ययोर्गमनागमनयोर्नियतसंबन्धित्वात् कथमाक्षेपादस्य भेद इति वाच्यम् । वाच्यनियतसंबन्धिनोपि गमनाभावरूपव्यङ्ग्यस्य वक्तृवैशिष्ट्य-
२१पर्यालोचनया त्वयि गतेहं मरिष्यामीति द्वितीयार्धव्यङ्ग्यपर्यालोचनया च प्रतीय-मानत्वेन झटिति व्यज्यमानत्वाभावात् । तत्र प्रथमस्योदाहरणं दशत्यसौ परभृतः इत्यादि ग्रन्थकृता दर्शयिष्यते । द्वितीयस्य यथा—

२४ यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ इति ।

अत्र शक्रैरावणौ मानमदमुक्तौ इति व्यङ्ग्यम् । तदेव च प्रकारान्तरेण वाच्य-

दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥ २९६ ॥
संगमय्य सखीं यूना संकेते तद्रतोत्सवम् ।
निर्वर्तयितुमिच्छन्त्या कयाप्यपसृतं ततः ॥ २९७ ॥

॥ इति पर्यायोक्तम् ॥

किंचिदारभमाणस्य कार्यं दैववशात् पुनः ।

मिति । केचित्तु पर्यायोक्तेस्मिन् द्वयोरेव वाच्यव्यङ्ग्ययोः प्रस्तुतत्वम् । समासोक्तौ वाच्यस्यैव प्रस्तुतत्वम् । अप्रस्तुतप्रशंसायां व्यङ्ग्यस्यैव प्रस्तुतत्वमित्येषां मिथो भेद इत्याहुः । तत्तु प्रसिद्धोदाहरणविरुद्धमित्युपेक्षितम् ॥ २९५ ॥

पर्यायोक्तमुदाहरति—**दशतीति** । असौ परभृतः कोकिलः । सहकारस्य आम्रस्य । मञ्जरीं दशति आस्वादनेन विनाशयति । अहं तं वारयिष्यामि निवारयामि । युवाभ्यां स्वैरं स्वच्छन्दं सविश्रम्भमिति भावः । आस्यतां स्थीयताम् । अत्र अन्यजनसांनिध्यं सुरतोत्सवप्रतिबन्धकमिति नायिकानायकयोः संनिधानात् सख्या अपसरणमिष्टम् । तत् अहं गमिष्यामि इत्युक्तौ वक्त्र्या अवैदग्ध्यं दर्शयेत् । अतः परभृतवारणमिषेण तत् कृतमिति चमत्कारातिशयः । अतः पर्यायोक्तम् । केचित्तु अत्र परभृतशब्देन नायकः मञ्जरीशब्देन नायिका तत्संभोगप्रतिबन्धिका च अहम् इति शब्देन सूच्यते अतः पर्यायोक्तमिति वर्णयन्ति । परं तन्न रुचिरम् । तथात्वे वाच्यार्थस्य अप्रस्तुतत्वेन लक्षणासंगत्यापत्तेः । युवाभ्यां स्वैरमास्यताम् इत्यस्य सरसत्वाननकूलत्वाच्चेति ज्ञेयम् ॥ २९६ ॥

प्राकरणिकार्थबोधं विना लक्षणसमन्वयोत्र दुर्घट इति तं दर्शयति—**संगमय्येति** । यूना नायकेन । सह सखीं नायिकाभूताम् । संकेते संकेतस्थाने । संगमय्य संयोज्य । तद्रतोत्सवं तदुभययोः रतोत्सवं सुखविलासम् । निर्वर्तयितुं स्वगमनेन सविश्रम्भं संपादयितुम् । इच्छन्त्या कयापि चतुरया सख्या । ततः तस्मात् स्थानादपसृतम् ॥ २९७ ॥

समाहितं लक्षयति—**किंचिदिति** । किंचित् कार्यम् आरभमाणस्य

१ प्रवर्त°. अ. २ दैवबलात्. कपा.

**तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥ २९८ ॥**

**मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।**

समुचितकारणेन संपादयितुमुद्यतस्य । दैववशात् अकस्मादेव । तस्य कार्यस्य यत् ३साधनं संपादकसाधनान्तरं तस्य समापत्तिः संप्राप्तिः । तत् समाहितमाहुः । दैववशेन कारणान्तरोदयेनारब्धकार्यस्य सौकर्येण समाधानं समाहितमित्यर्थः । अर्वाचीनास्तु अमुं समाधिमाहुः । भावशान्तिं तु समाहितमित्याहुः । अत्र ६साधनपदं साधनान्तरपरं तत एव वैचित्र्योद्भवात् । तदाह प्रकाशकारः— समाधिः सुकरं कार्यं कारणान्तरयोगतः । इति । दैववशादिति न नियमपरम् बुद्धिपूर्वककारणान्तरावलम्बनेन कार्यसंपत्तावपि अस्य सद्भावात् । तदुक्तं ९भोजराजेन—

कार्यारम्भे सहायाप्तिर्दैवादैवकृतेह या ।

आकस्मिकी बुद्धिपूर्वोभयी वा तत् समाहितम् ॥ (३.३४) इति ।

१२उदाहृतं च—

कल्पान्ते शमितत्रिविक्रममहाकङ्कालदण्डस्फुर-

च्छेषस्यूतनृसिंहवक्त्रनखरप्रोतादिकोलामिषः ।

१५ विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ

कर्षन् धीवरतां गतः स्यतु जगन्मोहं महाभैरवः ॥ इति ।

अत्र प्रलयसमये महेश्वरेण समापयितुमुपक्रान्तानां त्रिविक्रमादीनां योयं तद्भुद्रा १८बडिशादिना मत्स्यकूर्मयोराकर्षणप्रकारः स भगवता भैरवेण बुद्धिपूर्वकमुपकल्प्यमानो दैवात् तथाभूतैरेव तैः संपद्यते इति बुद्धिपूर्वेयं दैवकृता सहायाप्तिः इति । विस्तरस्तु जिज्ञासुभिः तत्रैव द्रष्टव्यः ॥ २९८ ॥

समाहितमुदाहरति—**मानमस्या इति** । अस्या मानिन्याः । मानं निराकर्तुं अपसारयितुम् । पादयोः पतिष्यतः नमस्यतः प्रणंस्यतः । मे मम । उपकाराय ३दिष्ट्या सुदैवेन । एतत् घनगर्जितम् उदीर्णम् उद्भूतम् । अत्र माननिराकरणाय प्रणामतत्परस्य दैवादुदीर्णघनगर्जितेन तस्य अतीवोद्दीपकत्वात् माननिराकरणसंप्राप्तिः इति समाहितालंकारो विज्ञेयः । मानिन्याः माननिराकरणसाधनेषु ६प्रणामः एकतमोस्ति । तदुक्तम्—

उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥ २९९ ॥

॥ इति समाहितम् ॥

आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्[1] ।
उदात्तं नाम तं प्राहुरलंकारं मनीषिणः ॥ ३०० ॥

सामं भेदं च दानं च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात् ॥ इति ।

९परं नतिर्नैव निश्चयेन कार्यसंपादिका । तया मानभङ्गाभावे उपेक्षादेः कर्तव्यत्वेनोपदिष्टत्वात् । घनगर्जितं तु एकान्तेन फलोपधायकं तस्यातीवोद्दीपकत्वात् । तथा चात्र संशयितोपायेन माननिरासाय प्रवृत्तस्य नायकस्य निश्चितोपायसंपत्त्या १२कार्यस्य सौकर्येण लाभः इति ज्ञेयम् ॥ २९९ ॥

उदात्तं लक्षयति—**आशयस्येति** । आशयस्य अभिप्रायस्य मनोव्यापारविशेषस्येति यावत् । विभूतेः संपत्तेर्वा । अनुत्तमम् अलौकिकमित्यर्थः । ३यन्महत्त्वं आधिक्यम् । वर्ण्यते तं मनीषिणः उदात्तम् अलंकारम् आहुः इत्यन्वयः । तथा च प्रस्तुतस्य अलौकिकं महाशयत्वं विभूतिमत्त्वं वा यत् वर्ण्यते स उदात्तो नामालंकारः इति भावः । परे तु प्रस्तुतस्याङ्गत्वेन वर्ण्यमानं महतां चरितमपि ६उदात्तं मन्यन्ते । तदुक्तम् प्रकाशकृता—महतां चोपलक्षणम् इति । उदाहरणं च—

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ इति ।

९अत्र प्रस्तुतस्य दण्डकारण्यस्य तदुत्कर्षाय महतो रामस्य अङ्गत्वेन वर्णनं कृतमित्युदात्तालंकारः । यथा वा—

नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
१२ अमूं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥इति।

अत्र प्रस्तुतस्य समुद्रस्याङ्गत्वेन लोकसंहर्तुर्भगवतः शयनं वर्णितमिति उदात्तालंकारः । एतच्च प्रस्तुतस्य माहात्म्यातिशयसंसूचकत्वात् लोकातिगामिविभूति- १५वर्णनरूपमेवेति दण्डिना न अत्र पृथक्तया लक्षितम् इति ध्येयम् ॥ ३०० ॥

---

१ अनुत्तरम्. अ.

गुरोः शासनमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्यभारेप्यविक्लवः ॥ ३०१ ॥
रत्नभित्तिषु[1] संक्रान्तैः[2] प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥ ३०२ ॥
पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम् ।
सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः[3] ॥ ३०३ ॥

॥ इत्युदात्तम् ॥

महाशयत्ववर्णनरूपमुदात्तमुदाहरति—गुरोरिति । यः राघवः रावणस्य त्रिभुवनैकवीरस्य राक्षसाधिपस्य शिरसामुच्छेदरूपं यत् कार्यम् तस्य भारः कार्यगुरुता तस्मिन् अपि । अविक्लवः अव्याकुलः । स गुरोः पितुः । शासनं राज्यत्यागपूर्वकवनगमनरूपामाज्ञाम् । अत्येतुं अतिक्रमितुम् । न शशाक । अत्र रावणवधरूपमहाकार्यकरणसमर्थोपि राघवः यत् राज्यभ्रंशकरं गुरुनिदेशमत्येतुं न शशाक । तेन अस्य लोकसीमातिवर्ति महाशयत्वं प्रतीयते इति उदात्तालंकारः ॥ ३०१ ॥

विभूतिमहत्त्वरूपमुदात्तमुदाहरति—रत्नेति । आञ्जनेयेन अञ्जनासूनुना हनुमता । रत्नभित्तिषु रत्नखचितभित्तिषु । संक्रान्तैः प्रतिफलितैः । प्रतिबिम्बशतैः स्वीयप्रतिबिम्बानां शतैः । वृतः लङ्केश्वरः लङ्काधिपो रावणः । कृच्छ्रात् कष्टेन । ज्ञातः। प्रतिबिम्बशतवृतत्वं कृच्छ्रतया ज्ञानस्य हेतुः । अत्र प्रतिबिम्बग्राहिरत्नखचितभित्तिवर्णनेन राक्षसराजस्यालौकिकविभूतिमत्त्वं प्रतीयते इत्युदात्तालंकारः ॥ ३०२ ॥

उदात्तमुपसंहरति—पूर्वत्रेति । पूर्वत्र गुरोः शासनम् इत्युदाहरणे । आशयस्य राममनोवृत्तेः माहात्म्यम् अलौकिकमहत्त्वम् । अत्र रत्नभित्तिषु इत्युदाहरणे । अभ्युदयस्य संपदभ्युदयस्य गौरवं महत्त्वम् । सुव्यञ्जितं स्पष्टं प्रकटीकृतम् । इति हेतोः । अदः एतत् । उदात्तद्वयं[4] प्रोक्तम् । अस्माभिरिति शेषः । अयं भावः। विषयद्वैविध्येन वैचित्र्यस्य द्वैविध्यात् द्विप्रकारः स दर्शितः इति ॥ ३०३ ॥

---

१ °स्तम्भेषु. कपा. २ संक्रान्त°. अ, कपा.
३ °व्यकम्. बपा, क. ४ द्वितयं पुनः. कपा.

**अपह्नुतिरपह्नुत्य किंचिदन्यार्थदर्शनम् ।**

**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥ ३०४ ॥**

अपह्नुतिं संलक्ष्योदाहरति—**अपह्नुतिरिति** । किंचित् किमपि प्रकृतस्य गुणक्रियादिरूपं धर्मम् । अपह्नुत्य अपलप्य असत्यातया निरूप्येत्यर्थः । अन्यार्थस्य ३धर्मान्तररूपारोप्यमाणार्थस्य । दर्शनं सत्यत्वेन कथनम् । अपह्नुतिः तन्नामालंकारः ।

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।

एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥

६इति तत्त्वापह्नवरूपकविषयपरिहारार्थं किंचिदित्यस्य गुणक्रियादिरूपोर्थः स्वीक्रियते । तथा च प्रकृतं धर्मिणं निषिध्य धर्म्यन्तरारोपः तत्त्वापह्नवरूपकम् गुणक्रियादिरूपं धर्ममपलप्य धर्मान्तरारोपे अपह्नुतिरित्यनयोः भेदः । अन्ये तु तत्त्वा९पह्नवरूपकं नैव मन्यन्ते । तेषां मते किंचिदपह्नुत्य कस्यचित् प्रदर्शनम् अपह्नुतिरलंकारः । अपह्नुत्य इत्यनेन रूपकातिशयोक्त्योः व्युदासः । तत्र कस्यचिन्निषेधाभावात् । किंचिदपह्नुत्य इत्येतावन्मात्रोक्तौ आक्षेपालंकारेतिव्याप्तिः । तन्निरासाय १२अन्यत् साध्यत इति । संदेहे संशयः अत्र तु निश्चयः इति ततो भेदः । उत्प्रेक्षायां संभावना अत्र तु आहार्यारोपः इत्युभयोर्भेदः । इयं च द्विविधा शाब्दी आर्थी चेति । यत्र नञादिशब्दैः प्रकृतनिषेधस्तत्र शाब्दी । कपटार्थकपरिणामा१५र्थकशब्दोपादाने मयट्प्रत्ययान्तोपादाने चार्थी । आर्थ्याः अन्येपि विविधाः प्रकाराः सन्ति ते उदाहरणतः स्फुटीभविष्यन्ति । तत्र कपटार्थशब्दोपादाने यथा—उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् । १८इति । एवं—धूमं दधत् प्रकटलाञ्छनकैतवेन । इति । मयटा यथा—तारामयास्तत्र च फेनभङ्गाः । इति । एवमेव—

अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः

२१ स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।

यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे

शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ इति ।

२४अत्र वपुःशब्देन रोमावलिनिषेधः । आचार्यदण्डिनो मते एतान्युदाहरणानि

चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः ।
सेयमग्निमयी सृष्टिर्मयि शीता परान् प्रति ॥ ३०५ ॥
शैशिर्यमभ्युपेत्यैव परेष्वात्मनि कामिना ।
औष्ण्यप्रकाशनात्[1] तस्य सेयं[2] विषयनिह्नुतिः ॥ ३०६ ॥
अमृतस्यन्दिकिरणश्चन्द्रमा नामतो[3] मतः ।

तत्त्वापह्नवरूपकस्य ज्ञेयानि । धर्मिणि धर्म्यन्तरारोपात् । उदाहरणं दर्शयति— **न पञ्चेति** । स्मरः पञ्चेषुः पञ्चसंख्यापरिमितबाणो न । पञ्चेषुभिः सकलविश्वस्यैतदशपीडाजननासंभवात् । अतस्तस्य पत्रिणां बाणानां सहस्रं सहस्रसंख्यात्वमस्तीति शेषः । अत्र स्मरस्य पञ्चेषुत्वधर्मं प्रतिषिध्य सहस्रेषुरूपधर्मान्तरारोपात् अपह्नुतिः ॥ ३०४ ॥

विषयापह्नुतिमुदाहरति—**चन्दनमिति** । चन्दनं कृष्णागरुः । चन्द्रिका ज्योत्स्ना । तथा मन्दः दक्षिणश्च गन्धवाहः मलयानिल इत्यर्थः । सेयं मयि विरहिणि । अग्निमयी सृष्टिः अग्निवन्मां संतापयतीत्यर्थः । अतोऽग्निवन्मया प्रतीयते । परान् प्रति मदन्यान् प्रति । शीता शीतला । किलेति स्वासंमतिद्योतनार्थम् ॥ ३०५ ॥

उदाहरणं विशदयति—**शैशिर्यमिति** । अत्र कामिना परेषु स्वभिन्नेषु । चन्दनादीनां शैशिर्यं शिशिरतां शैत्यमिति यावत् । अभ्युपेत्यैव अङ्गीकृत्यैव । तस्य शैत्यस्य । आत्मनि औष्ण्यप्रकाशनात् संतापकतया दाहारोपणात् । सेयं विषयापह्नुतिः । अयं भावः । अत्र चन्दनादीनां निषेध्यारोप्यधर्मयोः शैत्यतापकत्वरूपयोः व्यवस्थितविषयत्वप्रतिपादनादियं विषयापह्नुतिः । अत्र उष्णत्वर्णनेन शैत्यनिषेधो व्यङ्ग्य इति बोध्यम् ॥ ३०६ ॥

स्वरूपापह्नुतिं दर्शयति—**अमृतेति** । चन्द्रमाः अमृतस्यन्दिनः किरणाः यस्य तादृशः सः । नामतः केवलं संज्ञात्वेन न तु अर्थवत्त्वेन । मतः । अयं भावः । चन्द्रमा इत्यस्य योगार्थः चन्दयति अमृतस्यन्दिकिरणैराह्लादयति इति चन्द्रः । स्फायितञ्चि इति चदिधातो रक्प्रत्ययः । चन्द्रः सन् मस्यति परिणमते इति

---

१ प्रदर्शनात्. कपा. २ सैषा. क.

३ नास्य नामतः. अ क, नामतो मतः. बपा.

अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥ ३०७ ॥

इति चन्द्रत्वमेवेन्दौ निवर्त्यार्थान्तरात्मता ।

उक्ता स्मरार्तेनेत्येषा स्वरूपापह्नुतिर्मता ॥ ३०८ ॥

उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता ।

चन्द्रमाः । अथवा चन्द्रम् अमृतं तदिव मीयते असौ इति चन्द्रमाः । एवं च चन्द्रमस्शब्दस्य यौगिकार्थो आह्लादकरूपः । स तु प्रसिद्धचन्द्रमसि नास्ति । विरहिणो मम संतापकत्वात् । अतः विधौ चन्द्रमःशब्दः केवलरूढिबलात् मण्डप-कुशलादिवत् बोद्धव्यः । न तु कुम्भकारादिवत् यौगिकः । एवं चन्द्रमसः अमृतस्यन्दिकिरणैराह्लादकत्वं निषिध्य आरोप्यार्थं दर्शयति—अन्य इति । अयं चन्द्रमाः । अन्यः अर्थात्मा पदार्थस्वरूपः । आह्लादकभिन्नधर्मविशिष्टः इत्यर्थः । किं धर्मविशिष्टः इत्याह विषेति । विषनिष्यान्दिन्यः दीधितयः किरणाः यस्य तादृशः । एवं चात्र धर्मनिषेधपूर्वकधर्मान्तरारोपादपह्नुतिः ॥ ३०७ ॥

उदाहरणं विशदयति—इतीति । केनचित् स्मरार्तेन मदनपीडितेन । इति एवंप्रकारेण । इन्दौ चन्द्रत्वं आह्लादकस्वरूपत्वम् । निवर्त्य निषिध्य । अर्थान्तरात्मता विषनिष्यन्दिदीधितिस्वरूपवत्ता । उक्ता आरोपिता । अतः एषा स्वरूपापह्नुतिर्बोद्धव्या । स्वं रूप्यते अनेन इति स्वरूपं नैसर्गिकगुणक्रियादिधर्मः । तन्निषेधपूर्विकेयमिति स्वरूपापह्नुतिः ॥ ३०८ ॥

अपह्नुतिमुपसंहरति—उपमेति । उपमायाः सादृश्यस्य अपह्नुतिः उपमापह्नुतिः । सा पूर्वमुपमासु उपमालंकारभेदेषु दर्शिता । प्रतिषेधोपमाख्यया दर्शिता इत्यर्थः । तदुदाहरणं हि—

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।

कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ इति ।

अत्र हि चन्द्रप्रतियोगिकं सादृश्यं प्रतिषिध्य सादृश्यमूलगुणातिशयस्थापनमार्थम् । अतः इयमुपमापह्नुतिः । अत्र औपम्यमूलभूतगुणातिशयसंस्थापिकेयमपह्नुतिः

---

१ निह्नुत्य. क. २ अर्थान्तरात्मना. अ, बपा; कपा.

३ उक्तं. बपा; कपा. ४ °नेत्यादि. अ.

इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः ॥ ३०९ ॥

॥ इत्यपह्नुतिः ॥

श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।

औपम्यचारुताया विकासयित्री इति तदङ्गभूता । औपम्यचारुता तु प्रधाना इति ९उपमाभेदे तस्याः परिगणनमिति ज्ञेयम् । तत्त्वापह्नवरूपकं तु अपह्नुतेर्भिन्नविषयमिति पूर्वं दर्शितमेव । अन्ये केचन उपमापह्नुतिः इत्यत्र उपमाशब्देन उपमारूपकयोः अनतिभेदात् रूपकं गृह्णन्ति । तथा च उपमारूपकं नाम १२तत्त्वापह्नवरूपकम् उपमासु रूपकभेदेषु दर्शितमिति अर्थं दर्शयन्ति । तद्रहस्यं तु अपह्नुतौ आर्थः आरोपः न युक्तः शाब्दारोपे एव चमत्कृतेर्भानात् इति स्यात् । परमस्मिन् पक्षेपि उपमाशब्दस्य रूपकार्थः न सरसः । इति उभयत्रापि किंचि-१५द्वैकल्यं दृश्यते इति सुधीभिर्विचारणीयम् । इति अनया दिशा । अपह्नुतिभेदानां विस्तरो लक्ष्येषु उदाहरणविशेषेषु । लक्ष्यः स्वयमूहनीयः । उपमापह्नुतितत्त्वापह्नुतिवत् अलंकारान्तरोत्पत्तिहेतवः अपह्नुतिभेदा अवगन्तव्याः । तत्र उत्प्रेक्षापह्नुति-१८र्यथा—

अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः ।
अप्राप्य मानमङ्गे विगलति लावण्यपूर इव ॥ इति ॥

२१एवमन्येपि प्रकाराः बोध्याः इति प्रेमचन्द्रशर्माणः ॥ ३०९ ॥

इदानीं क्रमप्राप्तं श्लेषं लक्षयति—**श्लिष्टमिति** । अनेकार्थम् अभिधावृत्त्या अनेकार्थप्रतिपादकम् । एकरूपान्वितम् एकेन अर्थभेदेपि अभिन्नप्रयत्नो-३च्चार्येण रूपेण अन्वितं युक्तं समानवर्णरूपमित्यर्थः । वचः वाक्यम् । श्लिष्टं श्लेषालंकारयुक्तम् । इष्टं कविभिरिति शेषः । वक्रोक्तिरूपेषु प्रायः सर्वेष्वपि अलंकारेषु श्लेषः चारुतासंपादकतया कविभिरभिलषित इत्यर्थः । तदग्रे कथयिष्यति ।

६ श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ।
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥ (२·३६३) इति ।

श्लेषश्च एकतावभासहेतुः संबन्धविशेषः । स चात्र शब्दयोरेकप्रयत्नोच्चार्यरूपः । ९अर्थयोस्तु अर्थनियामकानां प्रकरणादीनामभावात् एकप्रयत्नोच्चार्यशब्देन एककाल-

**तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥ ३१० ॥**

बोध्यत्वरूपः। अन्ये तु शब्दयोर्जतुकाष्ठन्यायेन अर्थयोस्तु एकवृन्तगतफलद्वयन्यायेन श्लेष इत्याहुः। ननु अर्थभेदेन शब्दभेदः इति नियमात् कथमेकस्यैव शब्दस्य अनेकार्थ-
१२त्वमिति चेत् तथाविधाकारैरपरैः शब्दैः श्लिष्टतयेति निश्चिनुमः। अयं च श्लेषः शब्दपरिवृत्तिसहत्वासहत्वेन अर्थशब्दभेदेन द्विधेति अर्वाचीना मन्यन्ते। प्राचीनास्तु उभयत्रापि शब्दस्य अर्थद्वयप्रतीतिमाधायैव वैचित्र्यजनकतया प्रधानतः अर्थसापेक्ष-
१५तया अर्थशून्यकेवलशब्दवैचित्र्ये अलंकारत्वाभावादयमर्थालंकार एव इति जानन्ति। एतच्च अनेकार्थत्वम् अभिधावृत्त्या युगपदनेकार्थप्रतिपादकत्वम्। तच्च शक्तिसंकोचकानां संयोगादीनामभावे एव संभवति। यत्र तु संयोगादिभिरभिधायाः
१८निश्चयः तत्र युगपदर्थद्वयप्रतीतेरभावान्न श्लेषः। तत्राप्रकृतस्यार्थस्य ध्वनिरेव। संयोगादयश्चोक्ता हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
२१ अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति।

२४एते संयोगादयः नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे संदेहे तदपकरणद्वारा विशेषार्थनिर्णायका इति संक्षिप्तार्थः। तत्र संयोगादीनामुदाहरणानि सवत्सा धेनुरानीयताम् इत्यादीनि परमलघुमञ्जूषातो ज्ञेयानि। विस्तरभयान्नात्र लिख्यन्ते।
२७अर्थस्यानेकत्वं च क्वचिद्वस्तुतः क्वचिदेकरूपत्वेपि अनेकसंबन्धित्वात्। तत्र आद्ये शब्दश्लेषः द्वितीयेर्थश्लेषः इति नव्याः। अर्थश्लेषो यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
३० अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥ इति।

अत्रोन्नतिरधोगतिश्चैकैव। परं तु सा संबन्धिभेदात् भिन्नत्वेन प्रतीयते। अत्रापि संबन्धिभेदेनोन्नत्यधोगत्योरनेकत्वात् तद्वाचकपदयोरप्यनेकत्वमिति स्वमते लक्षण-
३३समन्वयः। इति प्रेमचन्द्रशर्माणः॥ श्लेषस्य द्वैविध्यमाह—**तदिति**। शक्यतावच्छेदकस्य विभिन्नत्वेपि एकप्रत्ययप्रकृतिसमासघटितत्वेन अभिन्नानि पदानि यस्मिन् तत् अभिन्नपदम्। तथा भिन्नानां प्रकृतिप्रत्ययादिभिर्भिन्नानां पदानां
३६सुप्तिङन्तानां प्रायो बाहुल्यं यत्र तत्। तथा च अभिन्नपदवाक्ये अभङ्गश्लेषः

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य[1] हृदयं मृदुभिः करैः ॥ ३११ ॥
दोषाकरेण संबध्नन्नक्षत्रपथवर्तिना ।
राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते ॥ ३१२ ॥

प्रायः भिन्नपदवाक्ये च सभङ्गश्लेषः । सभङ्गश्लेषः एव समधिकचमत्कारकारी इति कविभिः विशेषतः प्रयुज्यते । अतः प्रायःपदोपादानम् इति केचित् । प्रकाश-३९कारादयः श्लेषविशेषं शब्दश्लेषं वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदादष्टधा मन्यन्ते । तत्र वर्णश्लेषो यथा—विधौ शिरःस्थे कुटिले कुतः श्रीः । इति । अत्र विधुविधिशब्दयोरुकारेकारयोः श्लेषः । एवमादीनि प्रत्ययादिश्लेषो-४२दाहरणानि प्रकाशादिभ्यो ज्ञातव्यानि ॥ ३१० ॥

तत्राभिन्नपदश्लेषमुदाहरति—**असाविति** । उदयं प्रतापोन्नतिम् उदयाचलं च । आरूढः । कान्तिमान् कमनीयाकृतिः तेजस्वी च । रक्तमण्डलः अनुरक्त-३प्रकृतिमण्डलः रक्तबिम्बश्च । राजा नृपः चन्द्रश्च । मृदुभिः अनुद्वेगकरैः शीतलैश्च । करैः राजग्राह्यभागैः किरणैश्च । लोकस्य हृदयं हरति चित्तमाकर्षति । अत्र प्रक-रणादिनियामकाभावात् द्वावपि नृपचन्द्रौ वाच्यौ । उदयादिपदानि च प्रकृति-६प्रत्ययभेदशून्यत्वादभिन्नानि इति अभङ्गश्लेषोयम् ॥ ३११ ॥

भिन्नपदश्लेषमुदाहरति—**दोषाकरेणेति** । प्रदोषः रजनीमुखम् अथवा प्रकृष्टाः दोषाः यस्मिन् स प्रदोषः मदनः प्रकृष्टक्रोधलोभमोहादिदोषवान् नृपश्च ३प्राकरणिकः । दोषाकरेण दोषायाः निशाया करः निशाकर इत्यर्थः पक्षे दोषा-णामाकरः खनिः तेन । तथा नक्षत्रपथवर्तिना नक्षत्रमार्गे आकाशे वर्तते इति तथोक्तेन । क्षत्रपथे क्षत्रोचितशौर्याद्याचारे न वर्तते तेन । राज्ञा चन्द्रमसा केन-६चिन्नृपविशेषेण च । संबध्नन् संबन्धं प्राप्नुवन् सन् । अप्रियं प्रियाविरहितं द्वेष्यं च । माम् इत्थं एवम् । किं न बाधते अपि तु बाधत एव । अत्र दोषाकरादि-पदानां प्रकृतिप्रत्ययभेदेन भिन्नार्थप्रतिपादकत्वात् सभङ्गश्लेषोयम् । राज्ञेत्यत्र तु ९अभङ्गः । अत्र सभङ्गश्लिष्टपदानां बाहुल्यात् सभङ्गश्लेषः । अत एव लक्षणे प्रायः

---

१ सर्वस्य. अ.

उपमारूपकाक्षेपव्यतिरेकादिगोचराः ।
प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥ ३१३ ॥
अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोपरः ।
विरुद्धकर्मा[1] चास्त्यन्यः श्लेषो नियमवानपि ॥ ३१४ ॥

पदोपादानं सार्थकमिति ज्ञेयम् । अर्वाचीनास्तु सभङ्गाभङ्गरूपं तृतीयभेदं परिकल्प्य तस्येदमुदाहरणं मन्वते । तन्मते सभङ्गश्लेषोदाहरणं तु—

१२ पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ इति ।

अत्र श्लिष्टानि सर्वाण्यपि पदानि सभङ्गानि इति सभङ्गश्लेषोयम् ॥ ३१२ ॥

प्रधानभूतं श्लेषं सप्रकारं प्रदर्श्य अलंकारान्तरस्याङ्गत्वेन तस्य चारुतासंपादकत्वं दिदर्शयिषुराह-–**उपमेति** । उपमारूपकाक्षेपव्यतिरेकाद्यलंकारेषु ३गोचराः विषयीभूताः । श्लेषाः प्रागेव तत्तदलंकारोदाहरणेषु । दर्शिताः । इदानीं केचन अपरे अन्यालंकाराङ्गभूताः । दर्श्यन्ते । तत्र—

शिशिरांशुप्रतिद्वन्द्वि श्रीमत् सुरभिगन्धि च ।
६ अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥

इति श्लेषोपमादौ अर्थश्लेषः । बालेवोद्यानमालेयं सालकाननशोभिनि । इति समानोपमायां शब्दश्लेषः । एवम्—

९ राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥

इति श्लिष्टरूपके शब्दश्लेषः । तथा—-

१२ अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥

इत्याक्षेपे द्विविधः श्लेषः । साधारणधर्मप्रयोगवति व्यतिरेकेपि एवमेव श्लेषो द्रष्टव्यः। १५आदिना अर्थान्तरन्याससमासोक्त्यादीनां परिग्रहः ॥ ३१३ ॥

कथयितव्यान् भेदानुद्दिशति—**अस्तीति** । सुगमम् ॥ ३१४ ॥

---

[1] विरुद्धधर्मा. कपा.

नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि ।
तेषां निदर्शनेष्वेव रूपमाविर्भविष्यति ॥ ३१५ ॥
वक्राः स्वभावमधुराः शंसन्त्यो रागमुल्बणम् ।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान् ॥३१६॥
मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः ।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥३१७॥

**नियमेति** । तेषां निर्दिष्टानामेषामित्यर्थः । निदर्शनेषु उदाहरणेषु । रूपं स्वरूपम् । आविर्भविष्यति प्रकटीभविष्यति ॥ ३१५ ॥

अभिन्नक्रियाश्लेषमुदाहरति––**वक्रा इति** । कान्ताभिः प्रियाभिः । प्रेषिताः क्षिप्ताः नायकानयनार्थं प्रेषिताश्च । वक्राः तिर्यक्प्रसारिण्यः वक्रोक्तिनिपुणाश्च । स्वभावमधुराः स्वाभाविकमनोहराः मधुरस्वभावाश्च । उल्बणम् अत्यन्तं प्ररूढम् । रागं लौहित्यम् अनुरागं च । शंसन्त्यः सूचयन्त्यः कथयन्त्यश्च । दृशः नयनानि दूत्यश्च । प्रियान् कर्षन्ति आवर्जयन्ति । अत्र वक्रादिविशेषणानां श्लिष्टत्वं दृग्दूतीनां च कर्षणरूपैकक्रियायामन्वयः । श्लेषस्य एकक्रियत्वं च स्वाश्रयीभूतविशेषणानां विशेष्ययोः दृग्दूत्योरेककर्षणक्रियावत्त्वात् परंपरया बोध्यम् । अत्र––

विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।
कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥

इति वक्ष्यमाणस्वरूपायाः तुल्ययोगितताया निर्वाहकत्वादयं श्लेषः तुल्ययोगिताङ्गभूतः । अपरे तु एकक्रियया वाक्यद्वयदीपनात् क्रियादीपकस्याङ्गभूतोयमित्याहुः ॥ ३१६ ॥

अविरुद्धक्रियाश्लेषमुदाहरति––**मधुरेति** । कोकिलागिरः आकर्ण्यन्ते । असितेक्षणाश्च श्लिष्यन्ते । उभे अपि श्लिष्टविशेषणैर्वर्णयति । मधुराः स्वरमाधुर्यशालिन्यः माधुर्याख्यनायिकालंकारयुक्ताश्च । माधुर्यं च––सर्वावस्थाविशेषेषु माधुर्यं रमणीयता । इत्युक्तप्रकारकम् । रागवर्धिन्यः उद्दीपकत्वेन प्रणयाविष्कारेण च अनुरागं वर्धयन्त्यः । कोमलाः कर्णमधुराः मृदुगात्र्यश्च । मदकला वसन्त-

१ रूपव्यक्ति. कपा. २ यत्र. अ.

रागमादर्शयन्नेष वारुणीयोगवर्धितम् ।
[1]तिरोभवति घर्मांशुरङ्गजस्तु[2] विजृम्भते ॥ ३१८ ॥
निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता ।
शरेष्वेव नरेन्द्रस्य मार्गणत्वं च वर्तते ॥ ३१९ ॥

६प्रारम्भे मदोन्मत्ताः सौभाग्याद्यवलेपविकारवत्यश्च । उक्तं च मदलक्षणं यथा—मदो विकारः सौभाग्ययौवनाद्यवलेपजः । इति । अत्राकर्णनाश्लेषणक्रिययोरेककालीनत्वसंभवेनाविरोधः । श्लेषस्य अविरुद्धक्रियासंबन्धश्च स्वाश्रयविशेषणविशे-९ष्ययोः कोकिलालापासितेक्षणयोः कर्मत्वेन संबन्धात् तत्संबन्धेन परंपरया बोध्यः । अत्रापि श्लेषस्य तुल्ययोगिताङ्गत्वं ज्ञेयम् ॥ ३१७ ॥

विरुद्धक्रियं श्लेषमुदाहरति—**रागेति** । एषः पुरो दृश्यमानः । घर्मांशुः सूर्यः। तिरोभवति अस्ताचलं गच्छति । अङ्गजस्तु मदनस्तु । विजृम्भते उद्योतते । उभौ ३अपि श्लिष्टविशेषणेन वर्णयति—**रागमिति** । वारुणी पश्चिमदिक् तस्याः योगेन संबन्धेन वर्धितं स्फीतम् । रागं लौहित्यम् । आदर्शयन् । पक्षे वारुणी मदिरा तस्याः योगः सेवनं तेन वर्धितम् । रागं अनुरागम् । आदर्शयन् । अत्र तिरोभवनविजृम्भ-६णक्रिये परस्परविरुद्धे । श्लेषस्य तत्र संबन्धः पूर्ववत् परंपरया ज्ञेयः । अत्र तुल्ययोगितालंकारः प्रधानतया वर्तते ॥ ३१८ ॥

सनियमश्लेषमाह—**निस्त्रिंशत्वमिति** । अस्य नरेन्द्रस्य । असौ खड्गे एव नतु मनसि । निःस्त्रिंशत्वम् निर्गतः त्रिंशतः अङ्गुलिभ्यः इति निस्त्रिंशः त्रिंशद-३ङ्गुल्यधिकपरिमाणत्वम् निर्दयत्वम् च । धनुष्येव वक्रता आकर्षणेन असरलता प्रतिकूलता च । मार्गणत्वं शरत्वं याचकत्वं च । शरेषु एव न तु प्रजासु । वर्तते इति सर्वत्रान्वेतव्यम् । अत्र प्रतिवाक्यं एवकारेण द्वितीयार्थानां व्यवच्छिन्नत्वात् ६अयं नियमवानर्थश्लेषः । अत्र—अनेन च परिसंख्यायाः परिपोषः । ग्रन्थकृता अस्वीकृतापि परिसंख्या स्फुटवैचित्र्यादङ्गीकार्येति टीकाकाराः । वयं तु नियमश्लेषेणैव तस्याः सर्वस्य विषयस्याक्रमणात् किं परिसंख्येति नामान्तराश्रयणे ९प्रयोजनमस्तीति न जानीमः । दर्श्यन्ते केचनापरे इति अङ्गाङ्गिरूपस्य उभय-

---

१ परामवति. अ, परापतति. कपा. २ °जश्च. बपा.

पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति ।
अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि ॥ ३२० ॥
महीभृद्भूरिकटकस्तेजस्वी नियतोदयः ।
दक्षः प्रजापतिश्चासीत् स्वामी शक्तिधरश्च सः ॥ ३२१ ॥
अच्युतोऽप्यवृषच्छेदी राजाप्यविदितक्षयः ।

स्यापि श्लेषस्य दर्शनं प्रतिज्ञातमवबोद्धव्यम् । तथा चात्र आचार्यमतेन अङ्गी श्लेषः एव न परिसंख्याङ्गभूत इति विचारणीयम् ॥ ३१९ ॥

नियमाक्षेपरूपोक्तिश्लेषमुदाहरति—**पद्मानामेवेति** । त्वयि रक्षति सति । पद्मानामेव दण्डेषु कण्टकः न तु प्रजासु । कण्टकः तीक्ष्णाग्रावयवविशेषः क्षुद्रशत्रुश्च । नियमश्लेषमाक्षिपति—**अथवेति** । रागिमिथुनस्य अनुरक्तकामिनोः आलिङ्गनेषु अपि । कण्टकः रोमाञ्चः । दृश्यते । अत्र पद्मानामेव इति सनियमश्लेषस्य अथवेत्यादिना आक्षेपः । अतः नियमाक्षेपरूपोक्तिश्लेषः । स च एकत्र निहितस्य कण्टकस्य वाक्यद्वयोद्दीपनात् प्रधानस्य दीपकस्याङ्गमिति ध्येयम् ॥३२०॥

अविरोधिश्लेषमुदाहरति—**महीभृदिति** । स नृपः । महीभृत् महीं बिभर्तीति महीभृत् पृथ्वीधारकः पर्वतश्च । भूरिकटकः बहुस्कन्धावारः विशालनितम्बश्च अस्ति । तथा स तेजस्वी प्रतापवान् सूर्यश्च । नियतोदयः सततोन्नतिशाली नियतोद्गमश्च । तथा दक्षः निपुणः प्रजापतिविशेषश्च । प्रजापतिः प्रजापालकः सृष्टिकर्ता च । तथा स्वामी प्रभुः कार्तिकेयश्च । शक्तिधरः प्रभावोत्साहमन्त्रशक्तिसंपन्नः आयुधविशेषवांश्च । अस्ति । अत्र महीभृत् भूरिकटकः तेजस्वी नियतोदयः दक्षः प्रजापतिः स्वामी शक्तिधरः इति श्लिष्टपदयुगलानामविरोधित्वादविरोधिश्लेषः । स एव चात्र प्रधानः ॥ ३२१ ॥

विरोधिश्लेषमुदाहरति—**अच्युतेति** । अच्युतः सन्मार्गात् अभ्रष्टः विष्णुश्च । अपि अवृषच्छेदी वृषः धर्मः तन्नामासुरश्च तं न च्छिनत्तीति तथोक्तः । राजापि राजा नरपतिः चन्द्रश्च अपि । अविदितः अज्ञातः क्षयः संपत्क्षीणता राजयक्ष्मा च येन तादृशः । देवः राजा सुरश्चापि । अविबुधः विबुधः विगतपण्डितः देवश्च न भवतीति तथोक्तः । शंकरः कल्याणकरः हरश्चापि । अभुजङ्ग-

देवोप्यविबुधो जज्ञे शंकरोप्यभुजङ्गवान् ॥ ३२२ ॥

॥ इति श्लेषचक्रम् ॥

गुणजातिक्रियादीनां यत्तु[1] वैकल्यदर्शनम् ।

६वान् भुजङ्गः षिङ्गः सर्पश्च तद्वान् तद्विशिष्टः न भवतीति अभुजङ्गवान् । जज्ञे इति सर्वत्र वाक्येषु योजनीयम् । अत्राच्युतादिपदानां द्वितीयार्थे विष्णवादौ वृषोच्छेद्यादिद्वितीयपदार्थस्याभावो विरुद्धः इति विरोधिश्लेषोयम् । अयं च विरोधा- ९भासस्याङ्गम् । सरस्वतीकण्ठाभरणे तु भिन्नाभिन्नकारकरूपेणास्य भेदौ प्रदर्शितौ । तत्र भिन्नकारको यथा--

गतिर्वेणी च नागेन वपुरूरू च रम्भया ।

१२ औष्ठौ पाणी प्रवालैश्च तस्यास्तुल्यत्वमाययुः ॥ इति ।

तस्या नायिकायाः गतिः गमनं वेणी केशरचना च नागेन हस्तिना सर्पेण च समा । अत्र प्रथमार्थे नागशब्देन धर्मधर्मिणोरभेदोपचारान्नागगतिर्गृह्यते । तस्या वपुः १५शरीरम् ऊरुद्वयं च रम्भया अप्सरोविशेषया कदल्या च । तस्या औष्ठौ पाणी च प्रवालैः विद्रुमैः नवपल्लवैश्च । तुल्यत्वमाययुः । अत्र वर्णनीययोस्तुल्यत्वं श्लेषप्रभावाल्लभ्यते । सोयमनेककर्तृत्वाद्भिन्नकारकः । अभिन्नकारकः श्लेषो यथा—

१८ कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।

यांति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ इति ॥

हे कलभाषिणि मधुरवचने । तव दृष्टिः कस्य विश्वसनीयत्वं विश्वासार्हतां । याति । २१न कस्यापि इत्यर्थः । तदेवोपपादयति—**कृष्णेति** । कृष्णा श्यामा अर्जुना श्वेता अनुरक्ता प्रान्तलोहिता च । कर्णावलम्बिनी कर्णपर्यंतगामिनी । पक्षे कृष्णे श्रीहरौ अर्जुने मध्यमपाण्डवे च अनुरक्ता अनुरागवती । कर्णपक्षपातिनी च । अतः २४विरुद्धपक्षद्वयाश्रितत्वात् कथं सा विश्वसनीया स्यात् । स चायमेककर्तृकत्वादभिन्नकारकः श्लेषो भवति । एवं प्रभेदविशेषा अन्येभ्य आकरग्रन्थेभ्यो बोद्धव्याः। विस्तारभियोपरम्यतेस्माभिः ॥ ३२२ ॥

क्रमप्राप्तां विशेषोक्तिं लक्षयति—**गुणजातीति** । विशेषः वर्णनीयत्वेन

---

१ यत्र. ब, यत्तद्. अ.

**विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ ३२३ ॥**

**न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।**

प्रस्तुतस्य वीर्याद्यतिशयः तस्य । दर्शनाय अवगमाय । गुणजातिक्रियादीनां आदि-
३शब्देन द्रव्याणां च । यत्तु वैकल्यदर्शनं कार्यसिद्धौ निष्फलत्वप्रतिपादनम् । सा
विशेषोक्तिः इष्यते । विशेषाय गुणादिवैकल्योक्तित्वाद्विशेषोक्तिरिति अवयवार्थः । स
च न स्वरूपनिर्धारणाय अपि तु भेदावगमायेति ज्ञेयम् । पदार्थमात्रवैकल्ये अस्याः
६स्वरूपत्वात् । अतिशयोक्तौ प्रस्तुतस्य वीर्याद्यतिशयदर्शनसद्भावेपि गुणादीनां
वैकल्यं न प्रतिपाद्यते इति ततोस्या भेदः । एवकारेण विशेषदर्शनाभावे नायमलंकारः
इति सूच्यते । सरस्वतीकण्ठाभरणेपि एतदेव लक्षणं स्वीकृमम् । इदमेव लक्षणं
९च—एकगुणहानकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः । (४·३·२३) इति वामनेन
स्थिरीकृतम् । विशेषदर्शनायैवेत्यनेन विभावनातः भेदो दर्शितः । तत्र हि
प्रधानतया कारणान्तरं स्वाभाव्यत्वं वा विभावनीयम् न प्रस्तुतस्यातिशयो वाच्यः ।
१२इह तु गुणादिप्रतिषेधेन प्रस्तुतस्यातिशयोपेक्षितः । नव्यास्तु—विशेषोक्तिर-
खण्डेषु कारणेषु फलावचः । इति विशेषोक्तिमाहुः । अत्राहुः प्रेमचन्द्रशर्माणः—
नव्यास्तु सत्यपि कारणे कार्याभावः विशेषोक्तिरित्याहुः । तत्रालंकारसंज्ञानामन्व-
१५र्थतयैव प्राचीनैः प्रयुक्तत्वेन हेतुसमानाधिकरणकार्याभाववर्णने विशेषप्रतीतेर-
भावाद्विशेषोक्तिसंज्ञाभ्युपगमे हेतुः प्रष्टव्यः । न च विशेषो वैचित्र्यं तच्च सत्यपि
कारणे कार्याभावोपनिबन्धे विद्यते एवेति विशेषोक्तिसंज्ञाया अन्वर्थतैवेति वाच्यम् ।
१८अलंकारमात्रस्यैव वैचित्र्यात्मकत्वेनोपमादावपि विशेषोक्तिसंज्ञायाः प्रसङ्गात् ।
अथ सति हेतौ कार्याभावप्रतिपादनजन्यं स्फुटं प्रतीयमानमपि वैचित्र्यं त्वयापि
कथं संज्ञान्तरेणालंकारतया न संगृहीतमिति चेन्नैवम् । तत्रास्माकमतिशयोक्ते-
२१रभ्युपगमात् । कार्यकारणपौर्वापर्यविपर्ययवदत्राप्यतिशयोक्त्यभ्युपगमस्यौचित्यात् ।
तस्मात् गुणादिवैकल्यवर्णने वर्णनीयस्य विशेषकथनमेव विशेषोक्तिरिति युक्त-
तरमिति ॥ ३२३ ॥

तत्र गुणवैकल्यविशेषोक्तिं दर्शयति—**न कठोरमिति** । पुष्पधन्वनः
मदनस्य । आयुधं अस्त्रम् । न कठोरं न वा तीक्ष्णं निशितम् ।

अरविन्दमशोकं च चूतं च नवमल्लिका ।
३ नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥

तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३२४ ॥
न देवकन्यका नापि गन्धर्वकुलसंभवा ।
तथाप्येषा तपोभङ्गं विधातुं वेधसोप्यलम् ॥ ३२५ ॥
न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ।
न च रक्ताभवद्दृष्टिर्जितं[1] च[2] द्विषतां कुलम्[3] ॥ ३२६ ॥

इति पुष्पमयत्वादिति भावः । तथापि अमुना कामेन । भुवनत्रयं जितमेवासीत् । ६अत्र मदनस्य वीर्यातिशयप्रदर्शनाय तदस्त्रस्य काठिण्यादिगुणवैकल्योक्तिः इति विशेषोक्तिः । नात्र कारणान्तरविभावनायां स्वाभाविकत्वविभावनायां वा तात्पर्यमतो न विभावनाप्रसक्तिः । एवं च विनोपकरणं क्रियानिष्पादकतया कर्तुरुत्कर्षप्रतिपादनं उपकरणगतकठोरतीक्ष्णगुणवैकल्येन प्रदर्शितमिति गुणवैकल्यविशेषोक्तिरियम् ॥ ३२४ ॥

जातिवैकल्ये विशेषोक्तिं दर्शयति—**न देवेति** । एषा देवकन्यका न । गन्धर्वकुलसंभवा गन्धर्ववंशजापि न । तथापि वेधसः ब्रह्मणोपि । तपोभङ्गं विधातुम् अलं समर्था । अत्र देवत्वगन्धर्वत्वजातिनैरपेक्ष्येण ब्रह्मणोपि तपोभङ्गसामर्थ्यवर्णनेन नायिकाया रूपातिशयः प्रतीयते । देव्यो गन्धर्व्यश्च तपोभङ्गविधानसमर्थाः इति पुराणप्रसिद्धिः । अत्र वर्णनीयाया जातिवैकल्येन विशेषो दर्शितः इति जातिवैकल्यविशेषोक्तिः ॥ ३२५ ॥

क्रियावैकल्यविशेषोक्तिं दर्शयति—**न बद्धेति** । भ्रुकुटिः भ्रूभङ्गः । न बद्धा । दशनच्छदः अधरः । न स्फुरितः । दृष्टिरपि रक्ता ताम्रा । नाभवत् । तथापि हे वीर त्वया द्विषतां अरीणाम् । कुलं जितम् । बलमिति पाठे शत्रुसैन्यं जितमित्यर्थः । अत्र बन्धनादयः क्रियाः । तद्वैकल्येन शत्रुजयो वर्णितः । तेन लीलया शत्रुजयो विहितः इति विशेषः स्फुटीभूतः । अतः क्रियावैकल्यविशेषोक्तिरियम् । अत्र केचित्—बन्धनं स्फुरणं च क्रिया रक्तत्वं तु गुणः । अतः क्रियागुणवैकल्ययोरत्र संकरः । शुद्धक्रियावैकल्योदाहरणं तु—

---

१ ध्वस्तं. अ. कपा. २ तत्. अ.
३ बलम्. ब, डप.

**न रथा न च मातङ्गा न हया न च पत्तयः ।**
**स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ३२७ ॥**
**एकचक्रो रथो यन्ता विकलो विषमा हयाः ।**
**आक्रामत्येव तेजस्वी तथाप्य[1]र्को नभस्तलम् ॥ ३२८ ॥**

नोपभोगो न वा दानं बन्धूनां भरणं न वा ।
९ तथापि गुरुतां धत्ते नृणां संरक्षितं धनम् ॥ इति ।

अत्रोपभोगादिक्रियामात्रवैकल्यमिति वदन्ति ॥ ३२६ ॥

द्रव्यवैकल्यविशेषोक्तिं दर्शयति—**न रथा इति ।** न रथाः न च मातङ्गाः हस्तिनः । न हयाः अश्वाः । न च पत्तयः पदातयः । एवम्—हस्त्यश्वरथ-पादातं सेनाङ्गं स्याच्चतुर्विधम् । इति चतुरङ्गबलवियुक्तयापि स्त्रीणां अपाङ्गदृष्ट्यैव तिर्यक्कटाक्षेणैव । जगतां त्रयं जीयते । अत्र रथादिजयसाधनद्रव्याणामभावेपि जगत्त्रयविजयः केवलया दृशा विहितः । तेन च दृशां मोहनसामर्थ्यविशेषः प्रती-यते इति द्रव्यवैकल्यविशेषोक्तिः ॥ ३२७ ॥

हेतुविशेषोक्तिं दर्शयति—**एकचक्र इति ।** रथः एकचक्रः यन्ता सारथिः । विकलः चरणविकलः । अश्वाः विषमाः सप्तसंख्याकाः इत्यर्थः। सप्ताश्वा नव दन्तिनः इति सप्ताश्वानां राजतन्त्रे निषेधः इति रत्नदर्पणव्याख्यायां रत्नेश्वरः । तथापि तेजस्वी अर्कः रविः । नभस्तलं विस्तीर्णमाकाशम् । आक्रामति । अत्र रथादिद्रव्या-णामङ्गवैकल्येन द्रव्यवैकल्यम् । तत्प्रतिपादनेन विकलसाधनोपि रविर्जगत्त्रयमा-क्रामतीति विशेषसामर्थ्यदर्शनात् विशेषोक्तिः । तत्र च तेजस्वीति हेतुबोधकपद-विन्यासेन न तेजस्विनः अङ्गीकृतार्थसाधने उपकरणपरतन्त्रा भवन्तीति विशेषस्य परिपोषो भवति इति हेतुविशेषोक्तिरियम् । भोजराजस्तु न रथा न च मातङ्गा इति द्रव्यवैकल्यविशेषोक्तिः एकचक्रो रथो यन्तेति वैकल्यवद्द्रव्यविशेषोक्तिरिति भेदद्वयं कल्पयति । तथैव अवैकल्यदर्शनेनापि क्वचिदप्युपपद्यते इति जातिगुण-क्रियादीनामवैकल्येपि क्वचिदियं भवतीति मत्वा उदाहरति—

---

१ तथाप्येको. अ. २ जगत्त्रयम्. अ, कपा.

**सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात् ।**
**अयमेव क्रमोन्येषां भेदानामपि कल्पने ॥ ३२९ ॥**

**॥ इति विशेषोक्तिचक्रम् ॥**

**विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।**[1]

१२ अयं तया रथक्षोभादंसेनांसो निपीडितः ।
एकः कृती शरीरेस्मिञ् शेषमङ्गं भुवो भरः ॥

अत्र तया स्पृष्टोंसः पुण्यवान् तया चास्पृष्टं शेषमङ्गं मे निरर्थकम् इति योयम-
१५वैकल्यदर्शनेपि विशेषस्तेनैषा हेतुमत्यपि हेतुमता विशेष्यमाणा यथोक्ता विशेषो-
क्तिर्भवतीत्याह ॥ ३२८ ॥

उदाहरणं निरूपयति—**सैषेति** । तेजस्वीति विशेषणात् हेतुगर्भविशे-
षणादिति भावः । एषा विशेषोक्तिः हेतुविशेषोक्तिः । अन्येषामपि भेदानां
३विशेषोक्तिप्रकाराणाम् । अयमेव क्रमः अयमेव मार्गः । तथा च यथात्र हेत्वलंकार-
संबद्धा विशेषोक्तिस्तथालंकारान्तरसंबद्धापि ऊहनीया । तथा च—भवन्ति यत्रौ-
षधयो रजन्याममतैलपूराः सुरतप्रदीपाः । द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।
६इयं ह्यकमला लक्ष्मीः । इत्यादयो रूपकसंबद्धा विशेषोक्तयो ज्ञेयाः ॥ ३२९ ॥

क्रमप्राप्तां तुल्ययोगितां लक्षयति—**विवक्षितेति** । विवक्षिताः प्रस्तुत-
गतत्वेन वक्तुमिष्टाः ये गुणाः तैरुत्कृष्टाः अधिकाः ये तैः सह । स्तुतिनिन्दार्थः
३स्तुत्यर्थं निन्दार्थं वा । कस्यचित् प्रस्तुतस्य स्तुत्यस्य वा तैर्गुणैः समीकृत्य यत्
कीर्तनं कथनम् । सा तुल्ययोगिता मता इति अन्वयः । अत्र बहुवचनमविवक्षितम् ।
द्वाभ्यामेकेन वा समीकरणेपि अस्याः सद्भावात् । तथा विवक्षितगुणोत्कृष्टैरप्रस्तुतैरे-
६वेति न नियमः ।

कटाक्षा मधुरालापा विलासास्ते च ते शुभे ।
जगज्जये प्रवृत्तस्य कन्दर्पस्य महद्बलम् ॥

---

१ गुणोत्कर्षैः. बपा.

**कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ३३० ॥**
**यमः कुबरो वरुणः सहस्राक्षो भवानपि ।**

९इत्यत्र कटाक्षालापविलासादीनां प्रस्तुतत्वे तस्याः सद्भावात् । प्रस्तुतयोरेव अप्रस्तुतयोरेव वा एकधर्माभिसंबन्धे तुल्ययोगिता प्रस्तुताप्रस्तुतयोरेकधर्माभिसंबन्धे दीपकमिति अर्वाचीनमतं न दण्डिनोभिमतम् । धर्माभिसंबन्धरूपवैचि-
१२त्र्यस्य सर्वत्र तुल्यत्वात् । एवं तर्हि दीपकं निर्विषयं स्यादिति चेन्न । अस्मन्मते वाक्यान्तरीयपदस्यानुषङ्गादिना स्वार्थद्वारा वाक्यान्तरार्थोद्दीपकत्वस्यैव दीपकालंकारत्वात् । तदुक्तम् --

१५ जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना ।
सर्ववाक्योपकारश्चेत् तदाहुर्दीपकं यथा ॥ ( २·९७ ) इति ।

अनेनैव लक्षणेन दीपकसंज्ञाया अन्वर्थता भवति । वामनेपि-- विशिष्टेन
१८साम्यार्थमेककालक्रियायोगस्तुल्ययोगिता ( ४·३२६ ) इति सूत्रेणेदमेव लक्षणमङ्गीकरोति । भोजराजोपि तथैव । उपमायां वाच्यार्थस्य व्यङ्ग्यार्थस्य वा साम्यप्रतीतिः शाब्दी । इह तु सर्वेषां समकक्षतया शाब्दबोधविषयत्वात् पर्यवसाने सादृश्य-
२१प्रतीतिरित्यनयोर्भेदः ।

दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥

२४इत्यादितुल्ययोगोपमायामपि ( २·४९ ) व्यञ्जनयोपस्थितस्यापि सादृश्यस्य वृत्तिवेद्यत्वेन शाब्दबोधाभ्युपगमात् । व्यञ्जनाया वृत्तित्वं च सर्वालंकारिकसंमतम् । तुल्ययोगितायां तु साम्यं न वृत्तिवेद्यं किंतु पर्यवसानगम्यम् । तेन नोभयोः
२७संमर्दः । एवं च विवक्षितगुणशालित्वेन अप्रस्तुतैः सह प्रस्तुतस्य स्तुतिनिन्दार्थं तादृशगुणान्वयित्वकीर्तनेन या प्रशंसा निन्दा वा सा तुल्ययोगिता । केचित्तु तुल्ययोगितायां स्तुतिनिन्दयोः प्राधान्यम् सादृश्यं तु उपसर्जनीभूतम् तुल्ययोगो-
३०पमायां तु सादृश्यं प्रधानम् इति ततोस्या भेद इति मन्यन्ते ।। ३३० ॥

तत्र स्तुतितुल्ययोगितामुदाहरति--**यम इति** । यमः कुबेरः वरुणः

---

१ स्मृता. अ.

बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥ ३३१ ॥
संगतानि मृगाक्षीणां तडिद्विलसितानि च ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ ३३२ ॥

॥ इति तुल्ययोगिता ॥

सहस्राक्षः इन्द्रः । तथा भवान् । अनन्यविषयां अनन्यगामिनीम् । लोकपाल ३इत्याकाराम् । श्रुतिं ख्यातिम् । बिभ्रति धारयन्ति । अत्र लोकपालस्वरूपो गुणः प्रस्तुतनृपे विवक्षितः । तेन च गुणेनोत्कृष्टैर्यमादिभिः समानताख्यापनेन राज्ञः स्तुतिः । अतः स्तुतिरूपा तुल्ययोगिता ॥ ३३१ ॥

निन्दातुल्ययोगितामुदाहरति—**संगतानीति** । मृगाक्षीणां संगतानि समागमाः । तथा तडिद्विलसितानि विद्युदुन्मेषितानि च । स्वयम् स्वस्यानुरागेण । ३ताभिः घनारब्धान्यपि घनं निबिडं निरन्तरभावः तेन आरब्धानि अनुष्ठितान्यपि । पक्षे घनैः मेघैः स्वयम् आरब्धानि अपि । क्षणद्वयं क्षणादूर्ध्वमपरमपि क्षणम् । न तिष्ठन्ति कुतो दीर्घकालावस्थानमिति भावः । अत्र प्रसिद्धचपलस्वभावया विद्युता ६सह स्त्रीणां संगमस्य चपलता समकक्षीकृत्योच्यते । तेन च निन्दावगमः स्पष्टो भवति । अतः निन्दातुल्ययोगिता । सा चात्र घनारब्धानि इति श्लेषानुप्राणितया समधिकचमत्कारं भजते । सरस्वतीकण्ठाभरणे—

९ अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि ।
स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वे तुल्ययोगिताम् ॥ ( ४·५५ )

इति मतान्तरेण तुल्ययोगिता लक्षितास्ति । तत्र स्तुत्यर्थायाः उदाहरणं यथा—

१२ आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥

अत्र रामस्य राज्याभिषेकवनगमनयोः पितुरादेशेन तुल्यरूपतया स्तुतिः प्रतीयते १५इति स्तुतिरूपा तुल्ययोगिता । निन्दार्था यथा—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥

---

१ बिभर्ति. अ. २ °तान्यपि. अ.

**विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।**
**विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥ ३३३ ॥**
**कूजितं राजहंसानां वर्धते मदमञ्जुलम् ।**

१८अत्र यः परशुना छिनत्ति योमुं मधुसर्पिषा सिञ्चति यो वा गन्धमाल्याभ्यामर्चति तं प्रति तुल्यमेव निम्बस्य कटुत्वम् इति समासोक्त्या तदुपमेयस्य निन्दा प्रतीयते इति निन्दार्था तुल्ययोगितेयम् । विस्तरस्तु तत एव द्रष्टव्यः ॥ ३३२ ॥

अथ विरोधं लक्षयति—**विरुद्धानामिति ।** विशेषस्य प्रस्तुतगतोत्कर्षस्य दर्शनाय प्रतिपादनायैव । विरुद्धानां परस्परैः सहानवस्थानवतां परस्परसामानाधि-३करण्यशून्यानामित्यर्थः । पदार्थानां यत्र वैचित्र्ये संसर्गदर्शनं सहावस्थानं सामाधिकरण्यप्रतिपादनमित्यर्थः । सः विरोधमूलत्वाद्विरोधालंकारः स्मृतः । यथेति उदाहरणोपन्यासाय । तत्र प्ररूढविरोधो दोषाय अप्ररूढश्चालंकाराय । प्ररोहश्च ६बाधबुद्ध्यानभिभूतत्वम् । बाधबुद्ध्याभिभूतत्वं च अप्ररोहः । तथा च विरुद्धानां नाम वस्तुतः विरोधाभावेपि मुखतः विरुद्धत्वेन प्रतिभासमानानाम् इत्यर्थः । तदुक्तं प्रकाशकृता—विरोधः सोविरोधेपि विरुद्धत्वेन यद्वचः । इति । पदार्थानां ९जातिगुणक्रियाद्रव्याणाम् । तेषु जात्या जातिगुणक्रियाद्रव्यैः चतुर्भिर्विरोधः गुणस्य गुणक्रियाद्रव्यैः त्रिभिः क्रियायाः क्रियाद्रव्याभ्याम् द्रव्यस्य द्रव्येणेति प्रकाशोक्तदशप्रकारो विरोधो ज्ञेयः । अयं शब्दश्लेषनिबन्धश्चेद्विरोधाभास उच्यते । इति प्रेम-१२चन्द्रशर्माणः । वामनस्तु विरुद्धाभासत्वं विरोधः इति सूत्रयित्वा ( ४·३·१२ )-

पीतं पानमिदं त्वयाद्य दयिते मत्तं ममेदं मनः
पत्राली तव कुङ्कुमेन रचिता रक्ता वयं मानिनि ।
१५ त्वं तुङ्गस्तनभारमन्थरगतिर्गात्रेषु मे वेपथु-
स्त्वन्मध्ये तनुता ममाधृतिरहो प्रेम्णो विचित्रा गतिः ॥

इत्युदाजहार । एष च अपिशब्दप्रयोगे वाच्योन्यथा व्यङ्ग्यः ॥ ३३३ ॥

तत्रादौ क्रियाविरोधमुदाहरति—**कूजितमिति ।** राजहंसानां मदमञ्जुलं

---

१ विरोधसाधना°. कपा, अ; विरोधदर्श°. क.

क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥ ३३४ ॥

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ।
रागेण पुनरा[1]क्रान्तं जायते जगतां मनः ॥ ३३५ ॥

तनुमध्यं पृथुश्रोणि र[2]क्तौष्ठमसितेक्षणम् ।
नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥ ३३६ ॥

मदेन मनोरमम् । कूजितं वर्धते । मयूराणाम् उत्क्रान्तम् अपगतं सौष्ठवं मनोहारित्वं ३यस्मात् तत् । तादृशं कूजितं क्षीयते ह्रासमेति । अत्रैकस्मिन् शब्दरूपे कर्तरि विरुद्धयोर्वृद्धिक्षयरूपक्रिययोः संबन्धप्रतिपादनेन विरोधः । संबन्धिभेदेन शब्दयो-भिन्नत्वेन तत्प्रशमः । तेन च एवंविधवृद्धिक्षयकारितया शरत्कालस्य माहात्म्यं ६स्फुटं प्रतीयते इति अलंकारतास्य ॥ ३३४ ॥

वस्तुगतगुणविरोधं दर्शयति—**प्रावृषेण्यैरिति** । प्रावृषेण्यैः प्रावृषि भवैः जलधरैः । अम्बरं दुर्दिनायते श्यामलं भवतीत्यर्थः । जगतां जगति स्थितानां ३जनानाम् । मनः रागेण अनुरागेण लौहित्येन च । आक्रान्तं व्याप्तम् जायते । अत्रानुरागस्य लौहित्येनाध्यवसानात् श्यामत्वलौहित्यगुणयोरेकजलधरसंभवरूप-संसर्गकीर्तनं विरोधः । तस्य अनुरागरूपार्थान्तरेण परिहारः । तेन च वर्षासमयस्य ६विशेषः प्रतीयते इति वस्तुगतगुणविरोधोयं ज्ञेयः ॥ ३३५ ॥

अवयवगतगुणविरोधं दर्शयति—**तनुमध्यमिति** । स्त्रीणां कामिनीनाम् । तनुमध्यं कृशावलग्नम् । पृथुश्रोणि विशालनितम्बम् । रक्तौष्ठम् असितेक्षणं कृष्ण-३नयनम् । नतनाभि निम्ननाभि । उन्नतस्तनं तुङ्गकुचम् । वपुः कं पुरुषं न हन्ति न पीडयति । सर्वमेव पीडयतीत्यर्थः । अत्र तनुत्वविशालत्वयोः रक्तत्वासितत्वयोः नतत्वोन्नतत्वयोः गुणयोर्विरोधः । आश्रयीभूतावयवभेदेन च परिहारः । तेन ६वर्णनीयायाः नायिकायाः विशेषः प्रतीयते । अतः अवयवगतगुणविरोधोयम् । केचित्तु बहूनां गुणयुग्मानां विरोधोपन्यासे वैचित्र्यातिशयः इति ज्ञापनाय तादृश-गुणविरोधप्रदर्शनायैतदुहारणमिति मन्यन्ते ॥ ३३६ ॥

---

१ पुनरुत्सिक्तं. बपा. २ रक्तोष्ठम्. क.

**मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम् ।**
**अपि ते रूपमस्माकं तन्वि तापाय कल्पते ॥ ३३७ ॥**
**उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।**
**उदश्रयन्ति पान्थानामस्पृशन्तोपि लोचने[1] ॥ ३३८ ॥**
**कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।**
**याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ ३३९ ॥**

विषमविरोधमुदाहरति--**मृणालेति** । हे तन्वि ते रूपम् मृणालमिव शीतले बाहू यस्य तत् । रम्भा कदली तत्सदृशौ ऊरू यस्य तत् । पद्ममिव उत्पले ३इव च मुखम् ईक्षणे च क्रमेण यस्य तत् । एतादृशशीतलवस्तुतुल्यमपि अस्माकं तापाय संतापाय । कल्पते । विरहिण उक्तिरियम् । अत्र कारणगुणाः कार्यगुणा-नारभन्ते इति न्यायवित्समयानुरोधेन शीतलरूपात् कारणात् शीतलं कार्यं ६भवितुमर्हति न तु संतापः इति विषमविरोधः । समवायिकारणे स नियमः न तु निमित्तकारणे इति परिहारः । अनेन च नायिकायाः सौन्दर्यातिशयो वर्णितो भवति इति विषमविरोधालंकारः ॥ ३३७ ॥

असंगतिविरोधमुदाहरति--**उद्यानेति** । उद्यानमारुतेनोद्धूताः चूतानाम् आम्राणां चम्पकानां च रेणवः परागाः । पान्थानां पथिकानाम् । लोचने ३अस्पृशन्तोपि उदश्रयन्ति उद्गतबाष्पे कुर्वन्ति । अत्र स्पर्शनाभावेपि बाष्पोद्गम इति परस्परमसंगतेरयमसंगतिर्नाम विरोधः । तत्प्रशमनं च स परागाणामुद्दीपकतयेति ज्ञेयम् । अनेन च नायकस्योत्कण्ठातिशयः सूच्यते ॥ ३३८ ॥

श्लेषमूलं विरोधमुदाहरति--**कृष्णार्जुनेति** । हे कलभाषिणि मधुरवचने । ते दृष्टिः कृष्णार्जुनयोरनुरक्तापि कर्णावलम्बिनी राधेयानुसारिणी । कृष्णा असिता ३अर्जुना श्वेता अनुरक्ता प्रान्तप्रदेशे आरक्तापि कर्णावलम्बिनी कर्णप्रान्ताश्रयिणी । कस्य विश्वसनीयत्वं याति । विरुद्धपक्षद्वयाश्रयणादिति भावः । इति द्वितीयार्थः । अत्र कृष्णार्जुनानुरक्तायाः कर्णावलम्बनं विरुद्धमिति क्रियाविरोधः । द्वितीयार्थेन

---

१ लोचनं. अ.

इत्यनेकप्रकारोयमलंकारः[1] प्रतीयते ।

॥ इति विरोधचक्रम् ॥

अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु[2] या स्तुतिः ॥ ३४० ॥

६तत्परिहारः । अयं च विरोधः श्लेषमूलकः इति श्लेषविरोधः । तेन दृष्टेः सौन्दर्यं प्रतीयते ॥ ३३९ ॥

विरोधमुपसंहरति —इत्यनेकेति । एवमयलंकारः अनेकविधः प्रतीतिविषयो भवति । तथा च भोजराजेन ग्रथितविरोधः उदाहृतोस्ति यथा—

३ दिग्वासा यदि तत् किमस्य धनुषा शस्त्रस्य किं भस्मना
भस्मस्याथ किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ।
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
६ भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेस्थिशेषं वपुः ॥ २९० पत्रे इति ।

अत्र दिग्वासस्त्वादीनामुत्तरोत्तरग्रथनादन्योन्यासंगतादयं ग्रथितनामा विरोधभेदः । अधिकविरोधो यथा—

९ एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावद्वा ददृशे स तैः ॥ इति ।

अत्रैकस्य दाशरथेरनेकसंख्यैर्यातुधानैर्यत् समरकर्म तत्र तैरस्य तावद्वा दृश्यमानत्वे-
१२नैकसंख्याविरुद्धमाधिक्यं गम्यते । इत्ययमधिकाख्यो विरोधः इति । विस्तरस्तु भोजप्रणीते सरस्वतीकण्ठाभरणे द्रष्टव्यः ॥ उत्तरार्धेन अप्रस्तुतप्रशंसां लक्षयति—**अप्रस्तुतेति** । अप्रक्रान्तेषु षष्ठ्यर्थे सप्तमी । अप्रस्तुतानामित्यर्थः । या स्तुतिः
१५प्रस्तुतस्य निन्दार्थमिति शेषः । सा अप्रस्तुतप्रशंसा । अप्रक्रान्तेषु इति बहुवचनमविवक्षितम् । तेन द्वयोरेकस्य वा अप्रस्तुतस्य स्तुतावपि एषा भवति । अप्रक्रान्तेप्सितस्तुतिरिति पाठे अप्रस्तुतस्य ईप्सिता प्रस्तुतनिन्दार्थमभीष्टा स्तुति-
१८रिति स एवार्थः । नव्यास्तु अप्रस्तुतात् वाच्यात् प्रस्तुतप्रतीतौ अप्रस्तुतप्रशंसा प्रस्तुतात् वाच्यात् अप्रस्तुतप्रतीतौ समासोक्तिः इति विषयविभागेनालंकारद्वयमाहुः। अयमाचार्यदण्डी तु अप्रस्तुताद्वाच्यात् प्रस्तुतस्य प्रतीतौ समासोक्तिः अप्रस्तुत-

---

१ अलंकारोतिशोभते. बपा. २ अप्रक्रान्तेप्सितस्तुति. बपा.

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥ ३४१ ॥
सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ।
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ॥ ३४२ ॥

॥ इत्यप्रस्तुतप्रशंसा ॥

२१प्रशंसया प्रस्तुतस्य निन्दा अप्रस्तुतप्रशंसा इति विषयविभागेनालंकारद्वयं स्वीकरोति । आचार्यमते अप्रस्तुतप्रशंसेति संज्ञाया अन्वर्थता भवति । अन्ये तु समासोक्तौ वाच्यव्यङ्ग्ययोरुपमानोपमेयभावः अप्रस्तुतप्रशंसायां तु व्यङ्ग्यार्थस्य २४निन्दा इति भेदं दर्शयन्ति । तदपरे न सहन्ते । यतः सुखं जीवन्ति हरिणा इत्युदाहरणे वयमधन्या इति वैधर्म्येण औपम्यमस्तीति सोयं समासोक्तिविषयः स्यात् । सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते इति ग्रन्थकर्त्रा कृतेनोदाहरणविवरणेन २७संज्ञाया अन्वर्थताङ्गीकारे ग्रन्थकर्तुः स्वारस्यं दृश्यते । तथा च अप्रस्तुतप्रशंसायामप्रस्तुतस्य प्रशंसैवापेक्षिता भवति । न तु उक्तिमात्रे सा भवितुमर्हति इति निष्कर्षः ॥ ३४० ॥

अप्रस्तुतप्रशंसामुदाहरति—**सुखमिति** । अपरसेविनः परसेवाविमुखाः । हरिणाः अयत्नसुलभैः सुखसाध्यैः । तृणदर्भाङ्कुरादिभिः अन्नैः भोज्यैः । वनेषु सुखं ३जीवन्ति । सेवानिर्विण्णस्योक्तिरियम् ॥ ३४१ ॥

उदाहरणं संगमयति—**सेयमिति** । अत्र एतदुदाहरणे । राजानुवर्तनक्लेशनिर्विण्णेन सेवायाः श्ववृत्तित्वादिति भावः । तदुक्तं मनुना—सेवा श्ववृत्तिराख्याता ३तस्मात् तां परिवर्जयेत् । इति । मनस्विना सेयम् अप्रस्तुतैव मृगवृत्तिः प्रशस्यते । एवकारेण प्रस्तुताप्रस्तुतयोः प्रशंसायां नायमलंकारः इति गम्यते । तथाहि—

६ याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला ।

---

१ अर्थैः. बपा; कपा. २ °जलदर्भा°. बपा.

**यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता[1] ।**
**दोषाभासा गुणा एव लभन्ते ह्यत्र[2] संनिधिम् ॥ ३४३ ॥**
**तापसेनापि रामेण जितेयं भूतधारिणी ।**

इत्थं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग् वारिधीनां जनुः ॥

अत्राप्रस्तुतस्य मार्गसरसः प्रस्तुतस्य दातुश्च प्रशंसा इति नेयमप्रस्तुतप्रशंसा किंतु समासोक्तिरेव ॥ ३४२ ॥

व्याजस्तुतिं लक्षयति--**यदीति** । यदीति यदर्थेऽव्ययम् । निन्दन्निव यत् स्तौति असौ व्याजस्तुतिः स्मृता । व्याजेन निन्दाछलेन व्यञ्जनया प्रतीयमाना स्तुतिः व्याजस्तुतिः इति अवयवार्थः । अत्र इवशब्देन निन्दायाः वास्तवत्वं निराकृतम् । अत्र दोषाभासाः दोषा इव आभास्यमाना न तु स्वरूपतो दोषाः । एतादृशा गुणाः एव संनिधिं सांनिध्यं समुपवेशमित्यर्थः । लभन्ते प्राप्नुवन्ति । निन्दन्निव स्तौतीति स्तुवन्निव निन्दति इत्यस्याप्युपलक्षकम् । तथा च निन्दाव्याजेन स्तुतिः स्तुतिव्याजेन निन्दा च व्याजस्तुतिरिति पर्यवसितम् । उभयत्र वैचित्र्यस्य समानत्वात् । द्वितीयप्रभेदे व्याजरूपा स्तुतिः इति समासः । उक्तं च प्रकाशकारेण--व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा । इति । निन्दया स्तुतेरुदाहरणानि अग्रे मूले एव दर्शितानि । स्तुत्या निन्दायास्तु प्रकाशे---

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थपरोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहाय्यकं यन्मरोः ॥

इति । अत्र समुद्रस्य स्तुत्या निन्दाप्रतिपादनं चमत्कारं दर्शयति इति व्याजस्तुतिः ॥ ३४३ ॥

व्याजस्तुतिमुदाहरति---**तापसेनेति** । तापसेन तपस्विना चतुरङ्गसैन्यशून्येनेति ध्वनिः । रामेण परशुरामेण । इयं भूतधारिणी पृथ्वी जिता । त्वया

---

१ मता. अ. २ तत्र. अ.

त्वया राज्ञापि सैवेयं जिता मा भून्मदस्तव ॥ ३४४ ॥
पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।
राजन्निक्ष्वाकुवंश्यस्य[1] किमिदं तव युज्यते ॥ ३४५ ॥
भुजङ्गभोगसंसक्ता[2] कलत्रं तव मेदिनी ।
अहंकारः परां कोटिमारोहति कुतस्तव ॥ ३४६ ॥
इति श्लेषानुविद्धानामन्येषां[3] चोपलक्ष्यताम् ।

राज्ञापि चतुरङ्गसाधनसंपन्नेनापि । सैवेयं तावती एव न तु अधिका । जिता । अतः पृथ्वीजये तव मदः गर्वः । मा भूत् मा भवतु । अत्र साधनशून्येन रामेण जितायाः भूमेः साधनसंपन्नेन विहितो जयो न प्रस्तुतस्य राज्ञः स्तुतये इति आपाततो निन्दा प्रतीयते । तया च निन्दया भगवदवतारभूतेन महादेवाल्लब्धपरशुना भार्गवेण या पृथ्वी जिता सा तावती एव त्वया मानवेन जिता इति महती स्तुतिः गम्यते इति व्याजस्तुतिः ॥ ३४४ ॥

अलंकारान्तरसंबद्धेयं चमत्कारातिशयाय भवतीति अर्थश्लेषमूलां तामुदाहरति—**पुंस इति** । हे राजन् त्वया पुराणात् आद्यात् । जरठाच्चेति ध्वनिः । पुंसः श्रीः लक्ष्मीः संपच्च । आच्छिद्य आकृष्य । परिभुज्यते । इक्ष्वाकुवंश्यस्य यत्र रामादयः परदारान् मातृवदपश्यन् तादृशवंश्यस्य तादृशवंशोत्पन्नस्येत्यर्थः । तव इदं श्रियोपहरणम् । किं युज्यते । आदिपुरुषादाकृष्टायाः लक्ष्म्याः परिभोग इक्ष्वाकुवंश्यस्य ते न समुचितः इति मुखतः प्रतीतया निन्दया प्रभूतास्ते संपदः इति स्तुतिः प्रतीयते इति व्याजस्तुतिः । अत्र पुराणपदे श्रीपदे च श्लेषः । स चार्थः पर्यायसहत्वात् । अतः अर्थश्लेषमूलेयं व्याजस्तुतिः ॥ ३४५ ॥

शब्दश्लेषमूलामुदाहरति—**भुजङ्गेति** । तव कलत्रं भार्या । परिपाल्या च मेदिनी । भुजंगाः विटाः सर्पाश्च तेषां भोगाः उपभोगाः फटाश्च तत्र संसक्ता अनुरक्ता । पक्षे तैः संसक्ता आवृता । एवं स्थिते तव अहंकारः परां कोटिं कुतः आरोहति । अत्र निन्दया त्वं सार्वभौमोसीति प्रतीयते इति व्याजस्तुतिः । सा च भुजंगादिशब्दानामनेकार्थत्वात् शब्दश्लेषमूला ॥ ३४६ ॥

व्याजोक्तिमुपसंहरति—**इतीति** । इति एवंप्रकारेण श्लेषानुविद्धानां श्लेष॰

1 °वंशस्य. क, ड, प. 2 °संक्रान्ता. बपा. 3 °नुबद्धानाम्. अ.

व्याजस्तुतिप्रकाराणामपर्यन्तस्तु[1] विस्तरः ॥ ३४७ ॥

॥ इति व्याजस्तुतिः ॥

अर्थान्तरप्रवृत्तेन किंचित् तत्सदृशं फलम् ।
सदसद्वा निदर्श्येत यदि[2] तत्[3] स्यान्निदर्शनम् ॥ ३४८ ॥
उदयन्नेष[4] सविता पद्मेष्वर्पयति श्रियम् ।
विभावयितुमृद्धीनां[5] फलं सुहृदनुग्रहम् ॥ ३४९ ॥
याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी[6] पराभवम् ।

संबद्धानाम्। तथा अन्येषां अन्यालंकारसंबद्धानाम्। व्याजस्तुतिप्रकाराणां व्याजस्तुतेः ३प्रकाराणां प्रभेदानाम्। विस्तरः अपर्यन्तः सीमाशून्यः । अतः सः स्वबुद्ध्यैवोपलक्ष्यताम् अवगम्यताम् । न सर्वः कथयितुं पार्यते इति भावः ॥ ३४७ ॥

निदर्शनं लक्षयति---**अर्थान्तरेति** । निदर्शनीयादन्यस्मिन् कार्यान्तरे प्रवृत्तेन केनचित्। किंचित् किमपि । तस्य अर्थान्तरस्य सदृशम्। सत् उत्तमम्। ३असत् अपकृष्टं वा । फलं निदर्श्येत प्रदर्श्येत । यदि इति यदर्थे । तत् निदर्शनम् तन्नामकालंकारः । निदर्शना इति संज्ञायाः स्त्रीत्वं बहुभिरङ्गीकृतमस्ति । नव्यानां मतेन इयं संभवद्वस्तुसंबन्धनिबन्धना निदर्शना । असंभवन्नपि वस्तुसंबन्धो यत्र ६सादृश्यं दर्शयति तत्रापि असंभवद्वस्तुनिदर्शना । तथाचोक्तं प्रकाशे—अभवन्वस्तुसंबन्ध उपमापरिकल्पकः इति । परे तु अयं द्वितीयः प्रकारः उपमायामेवान्तर्भवतीति न ग्रन्थकर्त्रा दर्शित इत्याहुः ॥ ३४८ ॥

सत्फलनिदर्शनं दर्शयति---**उदयन्निति** । एष सविता उदयन् उद्गच्छन् उन्नतिं प्राप्नुवंश्च । ऋद्धीनां संपत्तीनाम्। फलं सुहृदनुग्रहं बन्धूपकरणम्। इति ३विभावयितुं ज्ञापयितुम्। पद्मेषु श्रियम् अर्पयति। अत्र पद्मेषु श्रीप्रदानोन्मुखेन उदयशालिना सवित्रा सुहृदनुग्रहरूपमुदयफलं निदर्श्यते । तच्च उत्कृष्टत्वात् सद्रूपमिति सत्फलनिदर्शनमिदम् ॥ ३४९ ॥

असत्फलं निदर्शनमुदाहरति---**यातीति** । चन्द्रांशुभिः स्पृष्टा ध्वान्त-

---

१ °न्तः प्रविस्तरः. क. २ यत् तु. ब. ३ सा स्यान्निदर्शना. अ, ब; स्यात्तन्नि°. क.
४ एव. ब. ५ विभावयन् समृद्धीनां. बपा, कपा. ६ °राशिः. अ.

**सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम् ॥ ३५० ॥**

**॥ इति निदर्शनम् ॥**

**सहोक्तिः सहभावेन[1] कथनं गुणकर्मणाम् ।**
**अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता[2] ॥ ३५१ ॥**

राजी तमःपङ्क्तिः । राजविरुद्धानां नृपतिप्रतिकूलानां चन्द्रविरुद्धानां च । दुरन्ततां ३दुःखावसानम् । सूचयन्ती पराभवं विनाशम् याति । अत्र चन्द्रमरीचिभिः परिभूयमाना तमस्ततिः राजद्रोहिणि दुरन्ततारूपमपकृष्टं फलं निदर्शयति इति असत्फलनिदर्शनमिदम् । अभवन्वस्तुसंबंधनिबन्धनायाः निदर्शनायाः उदाहरणानि ६प्रकाशादौ द्रष्टव्यानि ॥ ३५० ॥

सहोक्तिं लक्षयति--**सहोक्तिरिति** । गुणकर्मणाम् कर्मशब्दोत्र क्रियावाची । बहुवचनेन द्रव्यादीनां संग्रहः । तथा च गुणक्रियादीनां सहभावेन साहि३त्येन । कथनं सहोक्तिः । संबन्धिभेदेन भिन्नयोरपि गुणयोः क्रिययोर्वा सहार्थस्य सामर्थ्येन एकेन वाचकेन यत् एककालीनतया प्रतिपादनं सा सहोक्तिरिति भावः । तदुक्तं प्रकाशकृता--सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । इति । ६अत्राप्यलंकारसामान्यलक्षणप्राप्तं हृद्यत्वमपेक्ष्यते एव । तच्च हृद्यत्वमत्र अतिशयोक्तिमूलकत्वेनाभिप्रेतम् । तेन पुत्रेण सहागतः पिता इत्यत्र नालंकारः । अत्र धर्मिणां गुणक्रियादिभिः युगपदन्वयः तुल्ययोगितायां तु धर्मिभिः सह इति ततो भेदः । ९इदमत्रावधेयम् । यत्र सहयुक्तेऽप्रधाने इति सूत्रेण सहार्थयोगे अप्रधाने तृतीया तत्रैवायमलंकारः । गुणप्रधानभावावच्छिन्नयोः शब्दार्थमर्यादया एकधर्मसंबन्धस्य तत्रैवावस्थितेः । अतः शशिना च निशा निशया च शशी शशिना निशया च १२विभाति नभः । इत्यादौ नायमलंकारः । अत्र हेतौ इति सूत्रेण हेत्वर्थे तृतीया । तथा च हेतुभूतेन शशिना निशा शोभते इति वाक्यार्थः । एवं पूर्वार्धेन सहोक्तिं लक्षयित्वा उत्तरार्धेन परिवृत्यलंकारं लक्षयति--**अर्थानामिति** । अर्थानां वस्तूनाम् । १५यः विनिमयः प्रतिदानम् । सा परिवृत्तिः स्मृता । इयं हि परिवृत्तिः समेन समस्य अधिकेन न्यूनस्य न्यूनेन चाधिकस्य इति त्रिप्रकारा भवति । अत्र विनिमयः कविप्रतिभाकल्पित एवापेक्ष्यते । तत्रैव चमत्कारात् । तेन क्रीणन्ति यत्र मुक्ता-

---

१ सहभावस्य. क. २ यथा. कपा.

सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥ ३५२ ॥
वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।

१८भिर्बदराण्यपि बालिकाः । इत्यत्र नेयम् । विनिमयश्च केनचिद्दत्तेन स्वकीयेन वस्तुना परकीयस्य वस्तुनः आदानम् । तेन किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् । इत्यत्र नायमलंकारः । भोजराजस्तु नैतदनुमन्यते। २१स च व्यत्ययेपि परिवृत्तिं स्वीकरोति । तदाह ––

व्यत्ययो वस्तुनोर्यस्तु यो वा विनिमयो मिथः ।
परिवृत्तिरिहोक्ता सा काव्यालंकारलक्षणे ॥ (३·२९) इति ।

२४व्यत्ययो नाम एकस्थानस्थितस्य वस्तुनः स्थानान्तरप्राप्तिः । यथा––

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
२७ उदयमहिमरश्मिर्याति चास्तं हिमांशु-
र्हतविधिलसितानां ही विचित्रो विपाकः ॥

इति सरस्वतीकण्ठाभरणादौ द्रष्टव्यम् ॥ ३५१ ॥

प्रथमोद्दिष्टां सहोक्तिमुदाहरति––**सहेति**। संप्रति विरहावस्थायाम् । इमाः रात्रयः मम श्वासैः सह दीर्घाः । ताश्चन्द्रभूषणाः सज्योत्स्नाका इत्यर्थः । रात्रयः ३ममैवाङ्गैः सह पाण्डुराः । विरहिण्या उक्तिरियम् । अत्र दीर्घत्वं पाण्डुरत्वं च गुणौ तौ तु संबन्धिभेदात् भिन्नावपि सहार्थबलादेकेनैव पदेन कथितौ । तत्र च प्रथमान्तपदस्य साक्षादन्वयः तृतीयान्तपदस्य सहशब्दार्थान्वयबलादिति ज्ञेयम् । ६अत्र रात्रिश्वासाङ्गानां गुणसंबन्धे सहभावात् गुणसहोक्तिरियम् । सहभावसाधारण्येपि यत्र कार्यकारणभावस्य वैचित्र्यं तत्र कार्यसहजचित्रहेतुरलंकारः । यत्र तु कार्यकारणभावं विना सहभावः तत्र सहोक्तिरित्युभयोः विषयभेदः । अत्र रात्रि- ९श्वासादीनां न कार्यकारणभावः । द्वयोरपि विरहजन्यत्वादिति दिक् ॥ ३५२ ॥

क्रियासहोक्तिं दर्शयति––**वर्धत इति** । पान्थानां प्रवासिनाम् । विरहिणां

---

१ प्राणैः. कपा. २ पाण्डराश्च. अ.

पतन्ति च समं तेषामसुभिर्मलयानिलाः ॥ ३५३ ॥
कोकिलालापसुभगा सुगन्धिवनवायवः ।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥ ३५४ ॥
इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन ।

॥ इति सहोक्तिः ॥

क्रियते परिवृत्तेश्च किंचिद्रूपनिदर्शनम् ॥ ३५५ ॥

मूर्छया सह चूतमञ्जरी वर्धते। तेषामसुभिः प्राणैः। समं मलयानिलाः दक्षिणवाताः। पतन्ति। असुभिरित्यत्र अश्रुभिरिति पाठो दृश्यते। सोपि युक्त एव। अत्र वर्धनपतनक्रिये सहभावेन मूर्छाचूतमञ्जरीभ्यां मलयानिलासुभ्यां च संबद्धे चमत्कृतिविशेषमावहत इति सहोक्तिरलंकारः। अन्वयप्रकारस्तु पूर्ववदेव। अत्र च यदि मूर्छावृद्धिचूतमञ्जरीवृद्ध्योः असुपतनमलयानिलपतनयोश्च वसन्तजन्यत्वमभिप्रेतं तदा परस्परकार्यकारणभावसंबन्धाभावान्न चित्रहेतुना सांकर्यम्। यदि च चूतमञ्जरीवृद्ध्या मूर्छावृद्धिः मलयानिलपतनेन च असुपतनमिति अभिप्रेतं तदा चित्रहेतुना सहास्य सांकर्यम् इति प्रेमचन्द्रशर्माणः। अपरे तु तादृशकार्यकारणभानस्य नैवात्र विवक्षा इति शुद्धोदाहरणमेवेत्याहुः। भोजराजस्तु इयं विविक्तक्रियासमावेशा वैसादृश्यवती सहोक्तिरित्याह ॥ ३५३ ॥

**कोकिलेति**। सुरभिवासराः वसन्तदिवसाः। जनानन्दैः सार्धं जनप्रमोदैः सह। वृद्धिं यान्ति। तान् दिवसान् वर्णयति—**कोकिलेति**। कोकिलानाम् आलापः मधुरः येषु ते। सुगन्धयः शोभनगन्धवन्तो वनवायवः दक्षिणानिला यत्र ते। सहशब्दप्रयोगे एवायमलंकारः इति भ्रमनिरासाय सार्धपदोपादानेनेदमुदाहरणमिति प्रेमचन्द्रादयः। वृद्धिरूपस्य गुणस्य व्याप्तिरूपस्य कर्मणश्च तुल्यतया वचनात् एषा गुणक्रियासहोक्तिरिति तरुणवाचस्पत्यादयः। भोजराजस्तु विविक्तकर्तृक्रियासमावेशवैसादृश्यवती इयं सहोक्तिरित्याह ॥ ३५४ ॥

सहोक्तिमुपसंहरन् परिवृत्त्युदाहरणं प्रस्तौति—**इतीति**। इति उक्तप्रकाराः। सहोक्तेः काश्चन उदाहृतयः दत्ताः। अन्याः स्वयमूहनीयाः। अस्या विस्तरः

---

१ वहन्ति. कपा. २ अश्रुभिः. बपा. ३ °निरूपणम्. क.

**शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् ।**
**चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम् ॥ ३५६ ॥**

**॥ इति परिवृत्तिः ॥**

**आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।**

३कण्ठाभरणादिषु द्रष्टव्यः ॥ इदानीं परिवृत्तेश्च उदाहरणेन किंचित् स्वरूपदर्शनं क्रियते ॥ ३५५ ॥

**शस्त्रप्रहारमिति** । भूभुजां नृपाणाम् । शस्त्रप्रहारं ददता तव भुजेन तेषां चिरार्जितं बहुकालसंवर्धितम् । कुमुदपाण्डुरं यशः हृतम् । अत्र न्यूनेनाधिकस्य ३ग्रहणरूपो विनिमयो ज्ञेयः । एवमेव——

दत्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्वा गृहीतो मदनज्वरः ॥

६इत्यत्र पूर्वार्धे समेन समस्य उत्तरार्धे अधिकेन न्यूनस्य विनिमयः । व्यत्ययविनिमयवती यथा——

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा ।
९ वारुणी परगुणात् स्वगुणानां व्यत्ययं विनिमयं च वितेने ॥

अत्र वारुण्या यदधराद्रागोपहृत्य चक्षुषोर्निक्षिप्तः तेनेयं व्यत्ययवती । यच्च मुखामोदवासितया स्वामोदेन मुखामोदो विशेषितस्तेन विनिमयवती । इति उभयवती १२परिवृत्तिः । अस्याः विस्तरस्तु सरस्वतीकण्ठाभरणे द्रष्टव्यः ॥ ३५६ ॥

आशिषं लक्षयति—**आशीर्नामेति** । अभिलषिते इष्टे वस्तुनि । आशंसनम् अभिलाषप्रकाशनम् । अथवा अभिलषिते प्रिये । वस्तुनि सुहृदादिजने । आशं३सनं शुभप्रार्थनम् । आशीर्नामालंकारः । वैचित्र्याभावान्नायमलंकारः इति बहवो मन्यन्ते । भामहस्तु एतादृशाशंसने वैचित्र्यमङ्गीकृत्य इमामलंकारेषु गणयति । तथा चोक्तम् तेन ——

६ आशीरपि च केषांचिदलंकारतया मता ।
सौहृदस्याविरोधोक्तौ प्रयोगोस्याश्च तद्यथा ॥

**पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ॥ ३५७ ॥**

**॥ इत्याशीः ॥**

**अनन्वयससंदेहावुपमास्वेव दर्शितौ ।**

अस्मिञ्जहीहि सुहृदि प्रणयाभ्यसूया-

९ माश्लिष्य गाढममुमानतमादरेण ।

विन्ध्यं महानिव घनः समयेभिवर्ष-

न्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥

१२ मदान्धमातङ्गविभिन्नसाला हतप्रवीरा द्रुतभीतपौराः ।

त्वत्तेजसा दग्धसमस्ततेजा द्विषां पुरः पश्यतु राजलोकः॥ (३.५४) इति ।

दर्पणकारादयस्तु नाट्ये एव अस्याश्चमत्कारित्वात् नाट्यालंकारे एनां गणयन्ति । १५यदुक्तम् —आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः इत्यारभ्य इति नाट्यालंकृतयो नाट्यभूषणहेतवः । ( ६.१९५ ) इत्यन्तम् । तल्लक्षणं तु —आशीरिष्टजनाशंसा इति । उदाहरणम्—

१८ ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।

पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ इति ।

परे तु प्रेयोलंकारविशेषमिमामाहुः । यथेति उदाहरणार्थम् । अवाङ्मनसगोचरं २१वाङ्मनोविषयातीतम् । तदुक्तं—यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । इति । परमं ज्योतिः परेशः इत्यर्थः । वः युष्मान् । पातु रक्षतु । अवाङ्मनसेत्यत्र अचः तुरेति सूत्रेणाच् समासांतः ॥ ३५७ ॥

एतावता उद्देशानुरोधेन सर्वानलंकारान् सोदाहरणं व्याख्याय अन्याभिमतानां केषांचिदलंकाराणां स्वोक्तेषु अन्तर्भावं दर्शयन् स्वपरिगणनस्य न्यूनतां ३परिहरति—**अनन्वयेति** । तल्लक्षणमाह भामहः—

यत्र तेनैव तस्य स्यादुपमानोपमेयता ।

असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ इति ।

---

१ नः. क.

उपमारूपकं चापि रूपकेष्वेव दर्शितम्[1] ॥ ३५८ ॥

६उदाहरति च--

ताम्बूलरागवलयं स्फुरद्दशनदीधिति ।
इन्दीवराभनयनं तवेव वदनं तव ॥ (३-४५, ४६) इति ।

९ससंदेहं लक्षयति---

उपमानेन तत्त्वं च भेदं च वदतः पुनः ।
ससंदेहं वचस्तुत्यै ससंदेहं विदुर्यथा ॥ (३·४२) इति ।

१२उदाहरति च--

किमयं शशी न स दिवा विराजते
कुसुमायुधो न धनुरस्य कौसुमम् ।
१५ इति विस्मयाद्विमृशतोपि मे मति-
स्त्वयि वीक्षिते न लभतेर्थनिश्चयम् ॥ इति ।

उममारूपकं लक्षयति--

१८ उपमानेन तद्भावमुपमेयस्य साधयन् ।
यां वदन्त्युपमामेतदुपमारूपकं यथा ॥

उदाहरति----

२१ समग्रगगनायाममानदण्डो रथाङ्गिणः ।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः ॥ (३·३४-३५) इति ।

तत्र एतेषु अलंकारेषु मध्ये अनन्वयस्य---

२४ चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।
आत्मनैवाभवत् तुल्यमित्यसाधारणोपमा ॥

इत्यसाधारणोपमायामन्तर्भावः । ससंदेहस्य च---

२७ किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥

---

१ कीर्तितम्. अ.

उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।
नानालंकारसंसृष्टिः संसृष्टिस्तु[1] निगद्यते ॥ ३५९ ॥
अङ्गाङ्गिभावोवस्थानं[2] सर्वेषां समकक्षता[3] ।

इति संशयोपमायामन्तर्भावः । उपमारूपकस्य—

३० इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥

इति रूपकप्रभेदे एव अन्तर्भावः । तस्मादेतेषामनुक्त्या न न्यूनतास्माकमिति ३३भावः ॥ ३५८ ॥

**उत्प्रेक्षेति** । उत्प्रेक्षावयवो नामालंकारः । तदाह भामह —

श्लिष्टस्यार्थेन संयुक्तः किंचिदुत्प्रेक्षयान्वितः ।
३ रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥
तुल्योदयावसानत्वाद्गतेस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमो गृहम् ॥ (३.४७,४८) इति ।

६असौ उत्प्रेक्षाभेदः एव । श्लेषरूपकादिसंकीर्णा उत्प्रक्षैव इति भावः । श्लेषोपमारूपकादिभिः प्राणितायाः उत्प्रेक्षाया प्रेमचन्द्रशर्मभिः प्रदत्तानि उदाहरणानि तत एव द्रष्टव्यानि । एवमेव दृष्टान्तस्योपमायाम् उल्लेखपरिणामयोः रूपके कारण९मालायाश्च हेतौ यथायथमन्तर्भावो ज्ञेयः ॥ संसृष्टिं लक्षयति--**नानेति** । सजातीयविजातीयविविधानामलंकाराणां संसृष्टिः एकत्र संसर्गः । संसृष्टिः तदाख्यमलंकारान्तरं निगद्यते संगमेन वैचित्र्यविशेषात् पृथक्त्वेन कथ्यते । यथा लौकिक१२हाराद्यलंकाराणां मिथः संसर्गेण पृथक् चारुतातिशयजनकतया गुच्छगुच्छार्धगोस्तनादिसंज्ञया पृथगलंकारत्वव्यपदेशः तथा संकीर्णानां काव्यालंकाराणामपि पृथक् चारुताप्रत्यायकतया पृथगलंकारत्वेन संसृष्टिरिति संज्ञया व्यपदेशः इति १५प्रेमचन्द्रशर्माणः ॥ ३५९ ॥

संसृष्टेः भेदान् दर्शयति--**अङ्गाङ्गिभावमिति** । अङ्गाङ्गिभावेन गौण-

---

१ संकीर्णं तु. ब, ड, प.
२ °भावसंस्थानं. अ, क. ३ °कक्ष्यता. अ.

इत्यलंकारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ ३६० ॥
आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्[1] ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ३६१ ॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ ३६२ ॥

प्रधानभावेन अवस्थानम् अवस्थितिः । तथा सर्वेषां समकक्षता तुल्यबलता । ३अङ्गाङ्गिभावं विना समप्राधान्येन अवस्थानम् इत्यपरा । इति एवंप्रकारा । अलंकारसंसृष्टेः द्वयी गतिः भेदद्वयं लक्षणीयं ज्ञेयम् । अत्र परे एकानुप्रवेशे संदिग्धत्वे अङ्गाङ्गित्वे च संसृष्टेः संकरसंज्ञा समकक्षायां तु संसृष्टिसंज्ञा इति आहुः॥३६०॥

अङ्गाङ्गिभावसंसृष्टिमुदाहरति—**आक्षिपन्तीति** । हे मुग्धे तव मुखश्रियं वदनलक्ष्मीम् । अरविन्दानि आक्षिपन्ति तिरस्कुर्वन्ति । आक्षिपधातुरत्रौपम्यद्योतकः । ३तदुक्तं पूर्वम्——आक्रोशत्यवजानाति कदर्थयति निन्दति । उपमायामिमे प्रोक्ताः इति । तथा चात्रोपमालंकारः । स च प्रधानः । कोषः धनराशिः कुड्मलश्च दण्डः सामादिषु चतुर्थोपायः नालश्च ताभ्यां समग्राणां पूर्णानाम् । एषां दुष्करं किम् ६अस्ति । अत्र श्लेषानुप्राणितहेत्वलंकारः उपमाया अङ्गमिति केचित् । श्लेषानुप्राणितार्थान्तरन्यासः तदङ्गमिति अपरे । द्वितीयार्धे च चतुर्थचरणे न किंचिदिह दुष्करम् इति पाठः समीचीनः । अन्यथा एषां कमलानां तत्कर्तृकमुखाक्षेपस्य ९समर्थनं दुर्घटं स्यात् । एकस्यैव समर्थ्यसमर्थकत्वायोगात् । तथाचात्र श्लेषानुविद्धोर्थान्तरन्यासः उपमाया अङ्गम् । उपमा च प्रधाना इति अङ्गाङ्गिभावसंसृष्टिः॥३६१॥

समकक्षतासंसृष्टिमुदाहरति——**लिम्पतीति** । कृष्णपक्षप्रदोषवर्णनमेतत् । तमः अङ्गानि लिम्पतीव । नभः अञ्जनं वर्षतीव । असत्पुरुषसेवेव नीचजनसेवेव । ३दृष्टिः निष्फलतां वस्तुनिरीक्षणासामर्थ्यं वैफल्यम् । प्राप्ता । अत्र पूर्वार्धे उत्प्रेक्षाद्वयम् । उत्तरार्धे उपमा । तासां परस्परनिरपेक्षतयावस्थानात् समकक्षसंसृष्ट्यलंकारः । अयं विभिन्नाश्रयगतः । एकाश्रयगतो यथा——कुरवका रवकारणतां ययुः । इति । अत्र ६रवकारवका इति वकारवकार इति च यमकयोः एवम्—संसारध्वान्तविध्वंसहंसः

---

१ °श्रियः. अ. २ इदं ३६२ तमं पद्यं अकपुस्तकयोर्नास्ति ।

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥३६३॥**

**॥ इति संसृष्टिः ॥**

**तद्भाविकमिति[1] प्राहुः प्रबन्धाविषयं गुणम् ।**
**भावः कवेरभिप्रायः काव्येष्वासिद्धि[2] संस्थितः ॥ ३६४ ॥**
**परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।**

कंसनिषूदनः। इत्यत्र रूपकानुप्रासयोश्च एकत्र समकक्षतयावस्थानम्। मुखचन्द्रः शोभते इत्यत्र साधकबाधकाभावादुपमारूपकयोः एकाश्रयगता संदेहसंसृष्टिः ॥३६२

श्लेषस्य बहलंकारव्याप्तिं कथयति—**श्लेष इति**। श्लेषः प्रायः सर्वासु वक्रोक्तिषु भणतिभङ्गीरूपालंकारेषु। श्रियं शोभाम्। पुष्णाति। वक्रोक्तिषु इत्युक्त्या ३तत्समानकक्षां स्वभावोक्तिं स्मृत्वा काव्यवाङ्मयस्य द्वैविध्यं निर्दिशति—**भिन्नमिति** स्वभावोक्तिः वस्तुस्वरूपवर्णनम्। वक्रोक्तिश्च सालंकारवचनम्। इति वाङ्मयं काव्यम्। द्विधा भिन्नम्॥ ३६३ ॥

अथ सर्वालंकारसंग्राहकं भाविकं लक्षयति—**तद्भाविकमिति**। प्रबन्धा महाकाव्यनाटकाख्यायिकादयः तद्विषयं तद्गतं गुणं चमत्काराधायकधर्मविशेषम्। ३तत् प्रसिद्धम्। भाविकम् तन्नामालंकारः। इति प्राहुः। संज्ञार्थं विशदयति **भावः इति**। कवेरभिप्रायः भावः। स च भावः काव्येषु आसिद्धि समाप्तिपर्यन्तम्। संस्थितः। तेन चास्यालंकारस्य न केवलं पदवाक्यगतत्वम् अपि तु प्रबन्ध-६गतत्वमपीति बोध्यम्। प्रकाशकाराः—प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः। तद्भाविकम्। इति लक्षयामासुः। तन्न संज्ञार्थानुगामीति ज्ञेयम्॥ ३६४ ॥

कवेरभिप्रायविषयीभूतान् कांश्चित् प्रबन्धधर्मान् कथयति—**परस्परोपकारित्वमिति**। सर्वेषां वस्तुपर्वणाम् आधिकारिकेतिवृत्तानि वस्तूनि प्राकर-३णिकेतिवृत्तानि पर्वाणि। तदाह धनंजयः—वस्तु द्विधा। तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः। इति। यथा रामायणे रामसीतावृत्तान्तः अधिकारि-

---

१ भाविकं तमिति. क. २ काव्येष्वस्य व्यवस्थितिः. क.

विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥ ३६५ ॥

व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ।
भावायत्तामिदं सर्वमिति तद्भाविकं विदुः ॥ ३६६ ॥

॥ इति भाविकम् ॥

यच्च संध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलंकारतयैव नः ॥ ३६७ ॥

कम् । सुग्रीवविभीषणादिवृत्तान्तः प्रासङ्गिकम् । सर्वेषां तेषां परस्परोपकारित्वम् । ६कवेरभिप्रेतनगरसरित्समुद्रादिवर्णनम् अस्तोदयषड्ऋतुवर्णनं च परंपरया साक्षाद्वा प्रधानमुपकरोति इति ज्ञेयम् । तथा व्यर्थानां प्रकृतार्थापरिपोषकाणां विशेषणानाम् । अक्रिया अविधानम् अप्रयोग इत्यर्थः । अयं परिकरालंकारः इति प्रकाश९कारादयः । अपरे तु अपुष्टत्वदोषाभावोयम् नायमलंकारः इत्याहुः । तथा स्थानानां प्रकृतोपयुक्तानां विषयाणां वर्णना । इयमपि कवेरभिप्रायविषयः । एतेषां सर्वेषां तद्भाविकं विदुः इति अग्रिमश्लोकस्थपदेन अन्वयः ॥ ३६५ ॥

**व्यक्तिरिति** । उक्तिक्रमबलात् वचनोपन्यासानुक्रमसामर्थ्यात् । गम्भीरस्यापि गूढस्यापि । वस्तुनः अर्थस्य । व्यक्तिः अभिव्यक्तिः । इदं सर्वं भावायत्तं ३कवेरभिप्रायविषयम् । इति भावायत्तत्वात् तद्भाविकं विदुः ॥ ३६६ ॥

**यच्चेति** । सन्धयः—मुखप्रतिमुखे गर्भः सावमर्शोथ संहृतिः । इति पञ्च । तेषामङ्गानि—उपक्षेपः परिकरः परिन्यासो विलोभनम् । इत्यादीनि चतुःषष्टि३संख्याकानि । वृत्तयः—

शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥

६इति नियतस्थानाश्चतस्रः । तासामङ्गानि—नर्मतत्स्फूर्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका । इत्यादीनि षोडश । लक्षणानि भूषणाक्षरसंघातादीनि षट्त्रिंशत् । आदिना नाट्यालंकारादीनां ग्रहणम् । एतत् सर्वमागमान्तरे भरतमुनिप्रणीतनाट्यशास्त्रे ९व्यावर्णितम् विस्तारेण कथितम् । तदिदं सर्वं नः अलंकारतयैवेष्टम् । तत्र केषांचित् स्वभावाख्यानादौ अन्तर्भावः केषांचित् भाविके इति यथायथं विषयानुरोधेन ज्ञातव्यम् ॥ ३६७ ॥

पन्थाः स एष[1] विवृतः परिमाणवृत्त्या
संहृत्य[2] विस्तरमनन्तमलंक्रियाणाम् ।
वाचामतीत्य विषयं परिवर्तमाना-
नभ्यास एव विवरीतुमलं विशेषान् ॥ ३६८ ॥

॥ इत्याचार्य[3]दण्डिनः कृतौ काव्यादर्शेऽर्थालंकारविभागो नाम
द्वितीयः परिच्छेदः ॥

अलंकाराणां विस्तारं निवेदयन्नुपसंहरति—**पन्थाः स एष इति** । अलं-
क्रियाणां एतावत्पर्यन्तं विवृतानां स्वभावाख्यानाद्यलंकाराणाम् । अनन्तं मर्यादा-
३शून्यम् । विस्तरं प्रभेदविस्तारम् । संहृत्य कात्स्न्येन वक्तुमशक्यतया संक्षेपेण प्रकट-
भेदं संगृह्य । परिमाणवृत्त्या परिमितत्वेन । स एष पन्थाः विवृतः अलंकारमार्गो
दर्शित इत्यर्थः । अनेन मार्गेण कृतः सतताभ्यासे एव अन्यान् प्रभेदान्
६दर्शयिष्यतीति कथयति—**वाचामिति** । वाचां विषयम् अतीत्य परिवर्तमानान्
वागगोचरत्वेन कथयितुमशक्यान् इत्यर्थः । एतादृशान् विशेषान् अलंकारप्रभे-
दान् । विवरीतुं विशदीकर्तुम् । अभ्यास एव काव्याभ्यास एव । अलं समर्थः ।
९पुनः पुनरालोचनेन ते ज्ञातव्या इत्यर्थः । इति शम् ॥ ३६८ ॥

इति श्रीवैराजक्षेत्रवासिभी रङ्गीकुलावतंसैर्बालकृष्णाचार्यतनुजै रङ्गाचार्यसूरिभिः
विरचितायां काव्यादर्शव्याख्यायां प्रभाख्यायां द्वितीयः परिच्छेदः ॥

---

१ एव. अ, ब.  २ संक्षिप्य. क.  ३ इत्यार्य°. अ.

# अथ तृतीयः परिच्छेदः

अव्यपेतव्यपेतात्मा [1]व्यावृत्तिर्वर्णसंहतेः ।

यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥ १ ॥

एकद्वित्रिचतुष्पादयमकानां विकल्पनाः ।

द्वितीयपरिच्छेदारम्भे काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते (२.१) इति शब्दार्थोभयसाधारणमलंकारलक्षणं विधाय तत्र चमत्कृतिप्राधान्यात् प्रथमं ३अर्थालंकाराः प्रतिपादिताः । इदानीमाचार्यः प्रथमपरिच्छेदे माधुर्यगुणप्रस्तावे सामान्यतः शब्दालंकारनिरूपणे —

आवृत्तिमेव संघातगोचरां यमकं विदुः ।

६ तत् तु नैकान्तमधुरमतः पश्चाद्विधास्यते ॥ (१.६१)

इति प्रतिज्ञातं यमकालंकारनिरूपणं सप्रपञ्चमारभते—**अव्यपेतेति** । अव्यपेतः अव्यवहितः व्यपेतः व्यवहितः आत्मा स्वरूपं यस्याः तादृशी । वर्णसंहतेः ९स्वरव्यञ्जनसंघातस्य । व्यावृत्तिः विशेषेण आवृत्तिः पुनः पुनरुच्चारणम् । सा यमकम् । एवं च पूर्वोच्चारितवर्णसंघातस्य क्वचिदव्यवधानेन क्वचिद् व्यवधानेनेति द्विविधं पुनरुच्चारणरूपं यमकस्य भेदद्वयं भवति । तच्च यमकं पादानां १२श्लोकचरणानां आदिमध्यान्तगोचरं भवति । पादस्य आदिगतं मध्यगतं अन्तगतं च भवति । एतदुपलक्षणम् । तेन पादखण्ड-पाद-पद्यार्ध-संपूर्णपद्यानां संग्रहः ॥ १ ॥

तत्र तावदादिमध्यान्तगोचरत्वेन सामान्यतो निर्दिष्टस्य यमकस्य पादस्थितिविकल्पनाभिः संभवतः प्रभेदान् दर्शयति—**एकेति** । एकद्वित्रिचतुष्पाद-३यमकानां एकद्वित्रिचतुष्पादस्थितानां यमकानाम् । विकल्पनाः विविधप्रभेदाः । भवन्तीत्यर्थः । ते च यथा—प्रथमपादे द्वितीयपादे तृतीयपादे चतुर्थपादे इति एकपादयमकभेदाश्चत्वारः । प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः

---

१ या वृत्तिः. क.

आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥ २ ॥
अत्यन्तबहवस्तेषां भेदाः संभेदयोनयः ।
सुकरा दुष्कराश्चैव दे[1]र्श्यन्ते त[2]त्र केचन ॥ ३ ॥
मानेन मानेन सखि प्रणयोभूत् प्रिये जने ।

६द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतुर्थयोः इति द्विपादयमकभेदाः षट् । प्रथमद्वितीयतृतीयेषु प्रथमद्वितीयचतुर्थेषु प्रथमतृतीयचतुर्थेषु द्वितीयतृतीयचतुर्थेषु इति त्रिपादयमकभेदाश्चत्वारः । चतुष्पादयमकं तु एकमेव । एवं पादयमकस्य ९पञ्चदश भेदाः संभवन्ति । एवं पादविकल्पनाभिः संभवतः प्रभेदान् प्रदर्श्य पादेपि आदिमध्यान्तादिभिः संभवतो भेदान् निर्दिशति—**आदीति**। उपरिनिर्दिष्टाः पञ्चदश प्रकाराः आदियमकत्वेन मध्ययमकत्वेन अन्तयमकत्वेन आदिमध्ययमकत्वेन १२आद्यन्तयमकत्वेन मध्यान्तयमकत्वेन आदिमध्यान्तयमकत्वेन च सप्तधा संभवन्ति । अतः सर्वेषां मेलने पञ्चाधिकशतं भवति । तच्च पुनः अव्यपेतव्यपेतव्यपेताव्ये-पेतेति भेदत्रयेण पञ्चदशाधिकत्रिशतीपरिमितं भवति इति दिक् । प्रथमश्लोके १५आदिमध्यान्तगोचरम् इति सामान्यतो भेददर्शनार्थं निर्दिष्टम् । अत्र तद्विशेषो दर्शितः इति न पौनरुक्त्यम् ॥ २ ॥

इदानीं सजातीयविजातीययमकसंमिश्रणेन सामान्यतः प्रभेदबाहुल्यं निवेद्योपसंहरति—**अत्यन्त इति** । तासां विकल्पनानां प्रभेदानामित्यर्थः । ३संभेदयोनयः संभेदाः सजातीयविजातीययमकानां मिश्रणानि योनयः कारणानि येषां ते सजातीयविजातीययमकमिश्रणेन संभूता भेदा इत्यर्थः । अत्यन्तबहवः इयत्तया परिच्छेत्तुं दुर्घटाः सन्तीति भावः । तत्र केचन सुकराः केचन दुष्क-६राश्च वर्तन्ते । तेषु केचन प्रकारा वर्ण्यन्ते अस्माभिः शिष्यशिक्षार्थं प्रदर्श्यन्ते इत्यर्थः ॥ ३ ॥

तत्रादौ प्रथमपादस्थमव्यवहितममिश्रमादियमकमुदाहरति—**मानेनेति** । हे सखि प्रिये जने अनेन मानेन सह तव प्रणयः स्नेहः । मा भूद् मा भवतु । ३कोपकलुषिता प्रियपराङ्मुखी मा भवेत्यर्थः । खण्डिता—

---

१ °वर्णतः. अ. २ वर्ण्यन्ते. अक.
३ तेऽत्र. ब, ड, प.

**खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥ ४ ॥**

**मेघनादेन हंसानां मदनो मदनोदिना ।**

**नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥**

**राजन्वत्यः प्रजा जाता भवन्तं प्राप्य संप्रति[1] ।**

**चतुरं चतुरम्भोधिरशनोर्वीकरग्रहे[2][3] ॥ ६ ॥**

पार्श्वमेति प्रियो यस्या अन्यसंभोगचिह्नितः ।

सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥

इत्युक्तलक्षणा । तादृशी त्वं कण्ठमाश्लिष्य तमेव सत्रपं संजातलज्जम् । कुरु । अपकारिणि प्रणयदर्शनमेव तस्य सविशेषलज्जोत्पादकत्वाच्छासनमिति भावः । अन्ये तु—हे सखि अनेन मानेन मानिनीवृत्तिस्वीकारेण । प्रिये जने नायके । स्नेहो मा भूत् स्नेहोत्पत्तिर्नासीत् । मानेङ्गीकृते सस्नेहो मामनुनेष्यति इति तवेच्छा सफला नाभूदित्यर्थः । अतः खण्डिता वञ्चिता । त्वं कण्ठमाश्लिष्येति पूर्ववदेतत्पद्यं विवृण्वन्ति । अत्र मानेन मानेन इत्यव्यवहितमादिपादगतमादियमकम् ॥ ४ ॥

तदेव द्वितीयपादगतमुदाहरति—**मेघेति** । मदनः हंसानां मदनोदिना मदापहारिणा । वर्षासु हंसानां निर्मदत्वादिति भावः । मेघनादेन घनगर्जितेन । नुन्नः दूरीकृतः मानः यस्मात् तत् । उत्कण्ठातिशयाधानादिति भावः । एतादृशं स्त्रीणां मनः कर्म । रत्या अनुरक्त्या । स्वप्रेयस्या च सह विगाहते आलोडयति । घनगर्जितमाकर्ण्य सर्वासामबलानां चेतः विगतमानमनुरक्तं चाभूदित्यर्थः ॥ ५ ॥

तृतीयपादगतं तदेव यमकमुदाहरति—**राजन्वत्य इति** । कश्चिन्न्यायानुवर्तिनं नृपं स्तौति । हे राजन् चत्वारः ये अम्भोधयः समुद्राः ते एव रशना मेखला यस्याः तादृश्याः उर्व्याः पृथ्व्याः करग्रहे राजग्राह्यभागग्रहणे पाणिग्रहणे च । चतुरं कुशलम् । भवन्तं प्राप्य संप्रति प्रजा राजन्वत्यः जाताः । सुराज्ञि देशे राजन्वान् स्यात् ततोन्यत्र राजवान् । ( २.१३ ) इत्यमरः । राजन्वान् सौराज्ये इति निपातनात् साधुः ॥ ६ ॥

---

[1] सत्पतिं. ब, ड, प.

[2] °रसनोर्वी°. ड, प.    [3] °परिग्रहे. कपा.

अरण्यं कैश्चिदाक्रान्तमन्यैः[1] सद्म दिवौकसाम् ।
पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥

मधुरं मधुरम्भोजवदने वद नेत्रयोः ।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं[2] नु ते ॥ ८ ॥

वारणो वा रणोद्दामो हयो वा स्मर दुर्धरः ।
न यतो नयतोन्तं[3] नस्तदहो विक्रमस्तव ॥ ९ ॥

तदेव चतुर्थपादगतमुदाहरति—**अरण्यमिति** । पदातिः पत्तिः रथाः नागाः गजाः अश्वाश्च तैः रहितैः वियुक्तैः । तव कैश्चित् अहितैः शत्रुभिः । समरात् पलाय्य अरण्यम् आक्रान्तम् व्याप्तम् । तत्र निगूहिताः सन्तः स्थिता इतिभावः । तथा अन्यैः समरे संमुखीभूय मृतैरित्यर्थः । दिवौकसां देवानाम् । सद्म स्थानं स्वर्ग इत्यर्थः । आक्रान्तम् ॥ ७ ॥

अथेदानीं द्विपादगतान् अव्यपेतयमकप्रभेदान् यथाक्रमं दर्शयति—**मधुरमिति** । वसन्ते प्रफुल्लकमले विलोलं भ्रमरं दृष्ट्वा कश्चिचाटुकारः प्रेयसीं पृच्छति । हे अम्भोजवदने मधुः वसन्तः । ते तव । नेत्रयोः मधुरं मनोहरम् । विभ्रमं भ्रमरभ्रान्त्या एतौ सलीलौ भ्रमरौ इति बुद्ध्या । विडम्बयति किम् विशेषयति किम् । नु इति वितर्के । वद त्वमेव तत्त्वं कथयेति भावः । अत्र मधुरम् मधुरम् इति प्रथमपादे तथा वदने वदने इति द्वितीयपादे च अव्यवहितमादिभागयमकम् ॥ ८ ॥

प्रथमतृतीयपादगतं तदेवोदाहरति—**वारण इति** । कश्चिद्विरही मदनमुपालभते । हे स्मर यतस्तव रणोद्दामः युद्धदुर्मदः । वारणः हस्ती । नास्ति । तथा दुर्धरः रणदुर्धर्षः । हयो वा नास्ति । तत् तस्मात् । युद्धसाधनशून्यत्वेपि । नः अन्तं नाशम् । नयतः तव विक्रमः अहो आश्चर्यास्पदम् । दुर्धर इति विक्रमस्य विशेषणमिति केचित् ॥ ९ ॥

---

[1] अन्यैरित्यत्र कैश्चित्. ब, क, ड, प.  [2] किं न. बपा.
[3] नयतोस्तं. अ, कपा.

**राजितैराजितैक्ष्ण्येन[1] जीयते त्वादृशैर्नृपैः ।**
**नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥**
**करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।**
**मन्मनो मन्मनोप्येषं[2] मत्तकोकिलनिस्वनः ॥ ११ ॥**
**कथं त्वदुपलम्भाशाविहताविह तादृशी[3] ।**
**अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥ १२ ॥**

तदेव प्रथमचतुर्थपादगतमुदाहरति—**राजितैरिति** । आजिः संग्रामः तत्र तैक्ष्ण्यं प्रचण्डत्वं तेन युद्धप्रखरेणेत्यर्थः । राजितैः शोभितैः । त्वादृशैः नृपैः ३वसुधा लक्षणया तत्स्थोरिजनः जीयते जयेन संतप्त इव क्रियते । पुनश्च सैव पृथ्वी वसुधारया दानद्रविणवृष्ट्या तृप्तिं नीयते ॥ १० ॥

तदेव द्वितीयतृतीयपादगतमुदाहरति—**करोतीति** । सहकारस्य आम्रस्य । कलिका मञ्जरी । मन्मनः मच्चित्तम् । उत्कलिकोत्तरं उत्कण्ठापूर्णम् । करोति । ३तस्योद्दीपकत्वादिति भावः । तथा मन्मनः अव्यक्तमधुरः । मन्मनोऽव्यक्तमधुरो मन्मनो रतिभाषितम् । इति विश्वः । मत्तकोकिलनिस्वनः समदकोकिलकलरवः अपि मदीयं चेतः उत्कलिकोत्तरं करोति । अत्र कलिकोत्कलिकोत्तरम् इत्यत्र तकारो ६यमकमध्ये पतितोपि स्वरशून्यत्वेन तद्व्यवधानं न गण्यते । स्वरयुक्तस्यैव व्यवधायकत्वेनाभ्युपगमात् । अथवा कलिकोत् इत्येष एव वर्णसंघातोत्र द्विरावृत्त इति बोध्यम् ॥ ११ ॥

तदेव द्वितीयचतुर्थपादगतमुदाहरति—**कथमिति** । नायकं प्रति दूत्युक्तिरियम् । इह वसन्तकाले । तव उपलम्भः समागमः तस्य समागमस्य आशायाः ३विहतौ विघाते सति । तादृशी वर्णयितुमशक्या केवलानुभवगम्या । अङ्गनाशिनी गात्रक्षयकरी । अवस्था मदनपीडावस्थाविशेषः । अङ्गनां तां त्वत्प्रेयसीम् । आरोढुम् अभिभवितुम् । कथं नालं न समर्था । अपि तु समर्थैव । तव विरहेण सा मरणो-६न्मुखी जातेति भावः ॥ १२ ॥

---

१ °तैक्ष्णेन. वपा, ङ, प.    २ ह्येष. क.    ३ तादृशीम्. क.

निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।
तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥ १३ ॥
विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥
विषमं विषमन्वेति मदनं मदनन्दनः ।
सहेन्दुकलयापोढमलया मलयानिलः ॥ १५ ॥

तदेव तृतीयचतुर्थपादगतमुदाहरति—**निगृह्येति** । वसन्तवर्णनमिदम् । नलिनोन्मुखाः कमललुब्धाः । अलिनः भ्रमराः । बालपल्लवैः कोमलपर्णैः शोभिना । ३समीपस्थेन केनचित् तरुणा कृष्टान् स्वशोभावलोकनार्थं संनिधापितान् । तरुणान् नेत्रे चक्षुषी । निगृह्य गृहीत्वा । कर्षन्ति स्वसौन्दर्यदर्शनप्रवणान् विदधति । वृक्षस्य बालपल्लवावलोकनादपि कमलमधुपानलोलुपानां भ्रमराणां दर्शनं तरुण-६सार्थस्य अतीव प्रमोदावहं समजनीत्यर्थः ॥ १३ ॥

अव्यपेतस्य द्विपादप्रकारान् प्रदर्श्य संप्रति क्रमप्राप्तं त्रिपादगतमादियमकं सप्रभेदं निरूपयन् प्रथमद्वितीयतृतीयपादगतमादौ दर्शयति—**विशदेति** । ३कश्चिद्विरही शरदमालोक्य कथयति । विशन्तः प्रविशन्तः आमत्ताश्च सारसाः पक्षिविशेषाः यस्मिन् तादृशे । सारसे सरःसंबन्धिनि जले । वर्तमाना इयं विशदा निर्मला । हंसी मां विरहिणं कुरुतेन विरहिणो मे रुजाकरेण कुत्सितशब्देन । ६अन्तकामिषं यमस्य भोग्यम् । कुरुते मां हन्तुं चेष्टते । आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि संभोगे—इति मेदिनी । अत्र विशदाविशदा सारसेसारसे कुरुतेकुरुते इति त्रिष्वपि पादेष्वव्यपेतमादियमकं वर्तते । चतुर्थचरणस्तु निर्यमकः ॥ १४ ॥

तदेव प्रथमद्वितीयचतुर्थपादगतमुदाहरति—**विषममिति** । कश्चिद् विरही ब्रूते । मदनन्दनः मम अनन्दनः असंतोषकः । विरहिणः संतापकत्वात् । ३मलयानिलः अपोढः परित्यक्तः मलः दुर्दिनमालिन्यादिरूपः यया सा तया । इन्दुकलया सह विषमं अप्रसहम् । विषं विषस्वरूपम् । मदनमन्वेति तद्वन्मां पीडयतीत्यर्थः । मदनो मलयानिलः इन्दुकला च मां विषवत् बाधन्ते इत्यर्थः ।

१ क्लिष्टा°. कपा.

मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग मे ।
हारिणी हारिणी शर्म तनुतां तनुतां यतः ॥ १६ ॥
जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।
कमलं कमलंकुर्वदलिमद्दलि मत्प्रिये ॥ १७ ॥
रमणी रमणीया मे पाटलापाटलांशुका ।
वारुणीवारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥

अथवा विषमं मदनं मोहकरं च विषं मलयानिलः अन्वेतीत्यन्वयः । ननु अत्र द्वितीयविषमपदे अनुस्वारन्यूनतेति चेन्न । नानुस्वारो विसर्गश्च चित्रभङ्गाय कल्पते । इति अनुस्वारन्यूनताया अलंकारिकैरभ्यनुज्ञातत्वात् ॥ १५ ॥

प्रथमतृतीयचतुर्थपादगतं तदेवोदाहरति—**मानिनीति** । प्रणयकुपितां मानिनीं प्रसिषादयिषुर्नायको मदनं प्रार्थयते । हे अनङ्ग मदन । मा माम् । ते निषङ्गत्वं निरन्तरकटाक्षशरनिपतनेन तूणीरत्वम् । त्वन्मुक्तशराधारतामित्यर्थः । निनीषुः प्रापयितुमिच्छुः । मानिनीविशेषणमेतत् । हारिणी मुक्ताहारवती अत एव हारिणी मनोहारिणी । मानिनी तनुतां कृशताम् । यतः प्राप्नुवतः । मे शर्म सुखम् । तनुतां विस्तारयतु । यथेयं सुखभोग्या स्यात्तथा त्वया विधेयमित्यभ्यर्थना ॥ १६ ॥

तदेव द्वितीयतृतीयचतुर्थपादगतमुदाहरति—**जयतेति** । नायकस्य प्रेयसीं प्रति चाटूक्तिः । हे मत्प्रिये अस्मान् जयता स्ववशीकुर्वता । त्वन्मुखने कम् उदकम् । अलंकुर्वत् भूषयत् । तथा अलयः भ्रमराः तद्वन्ति यानि दलानि पत्राणि तानि सन्ति अस्येति अलिमद्दलि । अथवा अलिमत् भ्रमरयुक्तं तथा दलि दलयुक्तं च । कमलम् अकथं कथाशून्यं निर्विवादम् कथनादिवाग्धर्मविहीनं वा । कथं न जितम् जितमेव । सचेतसि लब्धविजयानामचेतनविजये का शङ्केति भावः ॥ १७ ॥

सर्वत इत्यनेन प्रतिपादितं पादचतुष्टयगतमव्यपेतमादिभागयमकमुदाहरति—**रमणीति** । पाटलावत् तत्संज्ञकतरुकुसुमवत् पाटलं श्वेतरक्तमंशुकं वस्त्रं यस्याः सा । तथा सौरभास्पदं शोभनगन्धिः । मे रमणी अरुणीभूता आरक्ता । सौरी सूर्यसंबान्धिनी भाः कान्तिर्यत्र तादृशी । वारुणी पश्चिमदिगिव । रमणीया मनोहरा ।

इति पादादि यमकमव्यपेतं विकल्पितम् ।
व्यपेतस्यापि वर्ण्यन्ते विकल्पा[1]स्तस्य केचन ॥ १९ ॥

मधुरेणदृशां मानं मधुरेण सुगन्धिना ।
सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥

करोतिताम्रो [2]रामाणां तन्त्रीताडनविभ्रमम् ।
करोति से[3]र्ष्यं कान्ते च[4] श्रवणोत्पलताडनम् ॥ २१ ॥

शोभते इति शेषः । अत्र वारुणीशब्देन मदिराध्वनिः । सापि सौरभास्पदं वर्तते । एवमादिमध्यान्तेत्यादिकारिकया प्रतिपादिता अव्यपेतादिभागयमकस्य दश प्रकारा उदाहृताः ॥ १८ ॥

अव्येपतादिभागयमकमुपसंहरति—**इतीति** । पादादि पादादिभागगतम् । अव्यपेतं अव्यवहितम् । यमकम् इति एवम् । विकल्पितम् सप्रभेदमुदाहृतम् । तस्य पूर्वोक्तस्य । व्यपेतस्य व्यवहितस्य यमकस्य । केचन विकल्पाः भेदाः । क्रमप्राप्ताः वर्ण्यन्ते ॥ १९ ॥

तत्र एकपादगतं व्यपेतं सुगममित्युपेक्ष्य प्रथमद्वितीयपादगतं व्यपेतमादिभागयमकमुदाहरति—**मधुरेणेति** । मधुः वसन्तः । मधुरेण मनोहरेण मधुबिन्दुयुतेन वा । मधुबिन्दून् क्षरतेत्यर्थः । सुगन्धिना सुरभिणा । सहकारोद्गमेन चूतप्रसवेन एव । एणदृशां हरिणाक्षीणाम् । मानं प्रणयेर्ष्याकोपम् । शब्दशेषं नाममात्रावशिष्टम् । करिष्यति । न तु अर्थतः अवशेषयिष्यतीत्यर्थः । अत्र मधुरेण मधुरेणेति वर्णसंघावृत्तेः दृशां मानमिति वर्णचतुष्टयव्यवहितत्वादेतद् व्यपेतयमकम् । एवमग्रेपि बोद्धव्यम् ॥ २० ॥

एतदेवप्रथमतृतीयपादगतमुदाहरति—**करोतीति** । विलासिन्या विलासवर्णनमिदम् । रामाणां रमणीनाम् । अतिताम्रः आरक्तः । करः तन्त्र्याः ताडनविभ्रमं वीणावादनविलासम् । करोति । तथा कान्ते कृतापराधे नायके । सेर्ष्यं यथास्यात्तथा श्रवणोत्पलेन ताडनं च करोतीति संबन्धः ॥ २१ ॥

---

१ तत्र. कपा. २ नारीणाम्. कपा. ३ सेर्ष्ये. ब. ४ वा. कपा.

सकलापोल्लसनया कलापिन्यानु[1] नृत्यते ।
मेघाली नर्तिता वातैः सकलापो विमुञ्चति ॥ २२ ॥

स्वयमेव गलन्मानकलि कामिनि ते मनः ।
कलिकाम्[2]इह नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम् ॥ २३ ॥

आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम् ।
नृत्यत्येष लसच्चा[3]रुचन्द्रकान्तः शिखावलः ॥ २४ ॥

एतदेव प्रथमचतुर्थपादगतं दर्शयति—**सकलेति** । प्रावृड् वर्ण्यते । वातैः नर्तिता सकला मेघाली मेघमाला । अपः उदकानि । विमुञ्चति वर्षति । अनु पश्चात् । कलापस्य बर्हस्य उल्लसनेन उन्नमनेन सह वर्तते इति सकलापोल्लसना तया । कलापिन्या मयूर्या । नृत्यते ॥ २२ ॥

तदेव द्वितीयतृतीयपादगतमुदाहरति—**स्वयमेवेति** । प्रावृडागमं विलोक्य काचित्सखी किंचिदवशिष्टमानां नायिकामाह । हे कामिनि ते मनः इदानीं स्वयमेव प्रियानुनयं विना । गलन् मानरूपः कलिः कलहः यस्मात् तादृशम् । संपन्नम् । तत् इह उपवने । नीपस्य कलिकां कोरकम् । दृष्ट्वा कां दशां न स्पृशेत् । सर्वा अपि मदनावस्थाः प्राप्नुयादित्यर्थः । तवातिकोमलमिदं चेतः विरहे कथं धारयिष्यसीति भावः ॥ २३ ॥

तदेव द्वितीयचतुर्थपादगतमुदाहरति—**आरुह्येति** । एष शिखावलः मयूरः । आक्रीडः उद्यानम् । पुमानाक्रीड उद्यानम् । इत्यमरः । तत्र यः शैलः क्रीडापर्वतः तस्य । चन्द्रकान्तोपलसंबन्धिनीं स्थलीमारुह्य नृत्यति । कीदृशः लसन्तः विकसन्तः चारवः मनोज्ञाः ये चन्द्रकाः मेचकाः तेन अन्तः मनोहरस्वरूपः । अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे । इति विश्वः । अथवा चन्द्रकाणामन्ताः प्रान्तभागा यस्य इति व्याख्येयम् ॥ २४ ॥

---

१ °न्याऽनुनृत्यते. क.   २ °कामपि. कपा.
३ चलच्चारु°. क.

उद्धृत्य[1] राजकादुर्वी ध्रियतेद्य भुजेन ते ।
वराहेणोद्धृता यासौ वराहेरुपरि स्थिता ॥ २५ ॥

करेण ते रणेष्वन्तकरेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति संध्याघना इव ॥ २६ ॥

परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥ २७ ॥

तदेव तृतीयचतुर्थपादगतमुदाहरति—**उद्धृत्येति** । कश्चित् कविः राजानं स्तौति । हे राजन् यासौ वराहेण वराहरूपेण । भगवता विष्णुना । उद्धृता सागर-जलादूर्ध्वमानीता । तथा वराहेः श्रेष्ठनागस्य शेषस्य । उपरि या स्थिता । सा उर्वी अद्य राजकात् राजसमूहात् । उद्धृत्य आच्छिद्य । ते भुजेन ध्रियते यथान्यायं पाल्यते । केचित्तु स्थिता इत्यत्र अन्तर्भावितण्यर्थमङ्गीकृत्य वराहेण स्थापितेति अर्थं कुर्वन्ति ॥ २५ ॥

तदेव प्रथमद्वितीयतृतीयपादगतमुदाहरति—**करेणेति** । कश्चित् कविः पराक्रमशालिनं नृपतिं वर्णयति । रणेषु समरेषु । द्विषतां शत्रूणाम् । अन्तकरेण विनाशकेन । ते करेण हताः ताडिताः । अत एव क्षरद्रक्ताः गलद्रुधिराः । करेणवः गजेन्द्राः । संध्याघना इव सायंकालीनारक्तमेघा इव । भान्ति शोभन्ते ॥ २६ ॥

तदेव प्रथमतृतीयचतुर्थपादगतमुदाहरति—**परेति** । राजप्रभावो वर्ण्यते । हे राजन् तव भटैः । वातैः ध्वस्ता उत्पाटिता । परः प्रोत्तुङ्गः अगः पर्वतः तत्-संबन्धिनो ये तरवः तेषां राजी पङ्क्तिः सेव । चमूः अरिचमूः । ध्वस्ता विनाशिता । अन्तर्भावितण्यर्थः । तदा परागैः युद्धसंमर्दोत्थितैः पांसुभिः ततं व्याप्तम् । अम्बरम् । क्वापि कल्पनातीते स्थाने । परागतमिव पलायितमिव । तदानीं धूलिभिरम्बरमलक्षितमभूदित्यर्थः ॥ २७ ॥

---

१ उद्धृता. अ, क.

पातु वो भगवान् विष्णुः सदा नवघनद्युतिः[1] ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥ २८ ॥

कमलेः समकेशं ते कमलेर्ष्याकरं मुखम् ।
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥ २९ ॥

मुदा रमणमन्वीतमुदारमणिभूषणाः ।
मदभ्रमद्दृशः कर्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥

उदितैरन्यपुष्टानामा रुतैर्मे हृतं[2] मनः ।

तदेव द्वितीयतृतीयचतुर्थपादगतमुदाहरति--**पात्विति** । नवघनद्युतिः नवजलदकान्तिः । दानवकुलध्वंसी दैत्यकुलविनाशकः । दानेन मदोदकेन सहितः सदानः स चासौ वरः श्रेष्ठः यः दन्ती कंसप्रयुक्तः कुवलयापीडाख्यः तस्य हन्ता । स भगवान् विष्णुः सदा वः युष्मान् । पातु ॥ २८ ॥

सर्वपादगतं तदेव दर्शयति—**कमलेरिति** । हे भामिनि ते कं मस्तकम् । अलेः भ्रमरस्य । जातौ एकवचनम् । समकेशम् समानाः कृष्णमेचकाः केशा यस्य तत् । ते मुखं कमलस्य ईर्ष्याकरम् असूयाकारि । तत्सदृशमित्यर्थः । अतः त्वं कमलेव लक्ष्मीरिव । उन्मदिष्णिषु उन्मादवत्सु । कं पुरुषमलेख्यं करोषि अगणनीयं विदधासि । न कमपि । यथा लक्ष्मीः सर्वमुन्मत्तं विधत्ते तथा त्वमपीति भावः ॥ २९ ॥

इतः परं व्यपेतस्यैव सजातीयविजातीयघटितानि प्रकारान्तराणि दर्शयन् प्रथमद्वितीययोरेकप्रकारं तृतीयचतुर्थयोस्तदन्यप्रकारं दर्शयति—**मुदेति** । उदाराः प्रशस्ताः ये मणयः तेषां भूषणानि यासां ताः । मदेन मदिरास्वादजनितेन उन्मादेन भ्रमन्त्यः घूर्णन्त्यः दृशो यासां ताः । अदभ्रजघना विशालनितम्बाः । रमणं मुदा आनन्देन । अन्वीतं संयुक्तम् । कर्तुं क्षमाः सन्ति ॥ ३० ॥

तदेव प्रथमतृतीययोर्द्वितीयचतुर्थयोश्चोदाहरति—**उदितैरिति** । कश्चित्

---

१ °छविः. क. २ हृतम्. क.

उदितैरपि ते दूति मारुतैरपि दक्षिणैः ॥ ३१ ॥

सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः ।

तनुमध्याः क्षरत्स्वेद[1]सुराजितमुखेन्दवः ॥ ३२ ॥

इति व्यपेतयमकप्र[2]भेदोऽप्येष दर्शितः ।

अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥ ३३ ॥

सालं सालम्बकलिकासालं सालं न[3] वीक्षितुम् ।

प्रियाविरहसंतप्तो ब्रूते । आः इति खेदे । अन्यपुष्टानां कोकिलानाम् । उदितैः उद्गतैः । रुतैः मे मनः हतम् हिंसितं व्यथितमिति भावः । न केवलं तैरेव हतं अपि तु हे दूति ते उदितैः संदेशवचनैरपि । तथा दक्षिणैः मारुतैः मलयानिलैः । अपि हतम् ।। ३१ ॥

एतदेव प्रथमचतुर्थयोर्द्वितीयतृतीययोरुदाहरति--**सुराजितेति** । मधुपानगोष्ठीवर्णनमेतत् । तनुमध्याः कृशोदर्यः । क्षरत्प्रस्रवन् यः स्वेदः तेन सुराजिताः सुशोभिता मुखेन्दवः मुखचन्द्रा यासां ताः । तथा सुरया मदिरासेवनेन जिता परास्ता ह्री लज्जा याभिस्ताः । स्त्रियः यूनां तरुणानाम् । तनुं शरीरमध्यासते आश्रयन्ति ॥ ३२ ॥

एतावत्पर्यन्तमव्यपेतव्यपेतयोः शुद्धस्वरूपयोराकारो दर्शितः । तमुपसंहरन् संमिश्रणात्मकं तयोः स्वरूपं दर्शयति-**इतीति** । इति एवमुक्तप्रकारेण । व्यपेतानां व्यवहितानां यमकानां प्रभेदा दर्शिताः । अपिना प्रागेव निर्दिष्टानामव्यपेतानां संग्रहः । अव्यपेतः अव्यवहितः व्यपेतः व्यवहितश्च आत्मा स्वरूपं यस्य तादृशः । विकल्पः भेदः । अस्ति । तद् यमकं यथा तथा दर्शयामीति शेषः ॥ ३३ ॥

तत्र प्रथमद्वितीययोः तृतीयचतुर्थयोस्तदुदाहरति--**सालमिति** । वसन्ते कस्याश्चित् दूती नायकं प्रति तदवस्थां वर्णयति । अत्र पदानि । सा अलम् सालम्बकलिकासालम् सालम् न वीक्षितुम् न अलीन् आलीनबकुलान् आली नालीकिनीः अपि इति । सा आली मत्सखी । आलम्बा लम्बमाना याः कलिकाः

---

[1] °त्स्वेदाः. अ. [2] प्रपञ्चोऽप्येष. अ. [3] निरीक्षितुम्. कपा.

नालीनालीनबकुलानाली नालीकिनीरपि ॥ ३४ ॥

कालं कालमनालक्ष्यतारतारकमीक्षितुम् ।

तारतारम्यरसितं कालं कालमहाघनम् ॥ ३५ ॥

कोरकाः । मञ्जर्य इति भावः । ता एव आच्छादकत्वात् सालः प्राकारः । सालः
६प्राकारवृक्षयोः । इति अनेकार्थध्वनिमञ्जरी । तेन सहितम् । सालम् वृक्षम् ।
आम्रवृक्षमिति भावः । वीक्षितुं न अलम् । तस्य उद्दीपकत्वादिति भावः । तथा
आलीयन्ते अत्र इति आलीनाः । अधिकरणे क्तः । तथा च आलीनाः आश्रयी-
९कृता बकुला यैस्तान् आलीनबकुलान् । अलीन् वीक्षितुं नालम् । तथा नालीकिनीः
पद्मिनीः । नालीकौ पद्मनाराचौ । इति त्रिकाण्डशेषः । अपि वीक्षितुं सा नालम् ।
अत्र केचित् सालम्बकलिकासालमित्यस्य सालम्बा लम्बमानत्वेन सह वर्तमाना
१२याः कलिकाः ताः सलति गच्छति इति सालम्बकलिकासालः तम् । तथा नाली-
किनीः मिथ्यावादिनीः झटिति तव प्रिय आगमिष्यति इति मिथ्या प्रियवादिनीः
सखीः अपि वीक्षितुं नालमित्यर्थं प्रदर्शयन्ति । अपरे केचन सालम्बकलिका-
१५सालम् इत्यत्र सालम् इत्यस्य रलयोरभेदत्वमाश्रित्य सारमिति पदं परिकल्प्य
सालम्बकलिकाभिः सारं श्रेष्ठम् इति अर्थं दर्शयन्ति । अन्ये पुनः सालम्ब-
कलिकासु सालः आलेन अलिकदम्बेन विषेण वा सहितः । अथवा सालम्बकलि-
१८काभिः सालः सभूषणः यः सालवृक्षः तम् इति विवृण्वन्ति । अत्र प्रथमपादे
सालं सालं इति अव्यपेतम् । तस्यैव द्वितीयपादे पुनरावृत्तिः इति व्यपेतं च ।
तथा उत्तरार्धे नाली नाली इत्यत्रापि अक्षरद्वयापेक्षया अव्यपेतम् चतुरक्षरापेक्षया
२१व्यपेतम् इति रहस्यम् ॥ ३४ ॥

तदेव प्रथमचतुर्थयोर्द्वितीयतृतीययोश्चोदाहरति—**कालमिति** । प्रावृट्-
समयमागतं वीक्ष्य नायिकया प्रेषिता दूती तं वदति । का विरहिणी । अनालक्ष्याः
३मेघाच्छादितत्वात् अदृश्याः ताराः निर्मलमौक्तिकाः इव ताराः नक्षत्राणि यस्मिन्
तम् । तारो निर्मलमौक्तिके । इति हेमचन्द्रः । ताराः स्थूला उज्ज्वला वा इति
केचित् । तारतया अत्युच्चस्वरतया अरम्यम् अमनोहरं रसितं गर्जितं यस्मिन्
६तम् । कालाः कृष्णवर्णा महाघना यत्र तम् । कालं मृत्युस्वरूपम् । कालं प्रावृट्-

**याम यामत्रयाधीनायामया मरणं निशा ।**
**यामयाम धियां स्वर्त्या या मया मथितैव सा ॥ ३६ ॥**

**इति पादादियमकविकल्पस्येदृशी गतिः ।**
**एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७ ॥**

कालं वीक्षितुमलं समर्था । न कापीत्यर्थः । अत्र यमके अनुस्वारन्यूनता न दोषायेति पूर्वं ( ३·१५ ) कथितमनुसंधेयम् ॥ ३५ ॥

तदेव पादचतुष्टयगतमुदाहरति—**यामेति** । कश्चिद्विरही स्वविरहेण मृतां भार्यामुपश्रुत्य मरणं प्रार्थयते । अत्र पदच्छेदः—याम यामत्रयाधीनायामया मरणम् निशा याम् अयाम धिया स्वर्त्या या मया मथिता एव सा । अथवोत्तरार्धे—धिया अस्वर्त्यायामया इति पदच्छेदः । यां पूर्वं वयम् अयाम अगच्छाम । तदनन्तरं मद्वियोगेन या स्वर्त्या सुदुःखितया । धिया बुद्ध्या । मद्विरहचिन्तया इत्यर्थः । उपलक्षिता । इत्थंभूतलक्षणे तृतीया । सा मया मथितैव विदेशगमनेन मारितैव । अतः वयमपि यामः प्रहरः तस्य त्रयं तस्य अधीनः आयत्तः आयामः विस्तारः यस्याः सा तया । निशा रात्र्या । त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । इति वचनादिति भावः । मरणं याम प्राप्नुयाम । तद्विरहेण अचिरादेव मृत्युर्भवत्विति प्रार्थना । केचन पुनः यां नायिकां धिया अयाम विदूरस्थितत्वात् संकल्पेनैव अगच्छाम सा असूनां अर्तिं पीडाम् आ समंतात् अयते गच्छति तादृशः अस्वार्त्या[1] यः आमयः मदनज्वरो यस्याः सा । यामत्रयाधीनायामया निशा रात्र्या मथितैव । तस्या विरहिण्याः संतापकत्वात् । अतः वयमपि मरणं याम इत्यर्थं विशदयन्ति ॥ ३६ ॥

पादादियमकप्रभेदमुपसंहरति—**इतीति** । पादादियमकानां विकल्पस्य भेदस्य । ईदृशी दर्शितस्वरूपा । गतिः दिक् । इतराण्यपि मध्यान्तभागगतानि अव्यपेतव्यपेततन्मिश्ररूपाणि । एवमेव दर्शितप्रकारेणैव एकद्वित्रिचतुष्पादेति कारिकया कथितप्रकारेण । विकल्प्यानि परिकल्प्य ज्ञातव्यानि । स्वल्पाः प्रकारा मया उदाहृताः तेनैव मार्गेण अन्ये ऊहनीया इति भावः ॥ ३७ ॥

---

१ धियास्वर्त्याया. ब, ड; धियास्वार्त्यायामया. क.

न प्रपञ्चभयाद्भेदाः कार्त्स्न्येनाख्यातुमीहिताः[1] ।
दुष्कराभिमता[2] ये तु वर्ण्यन्ते[3] तेऽत्र[4] केचन ॥ ३८ ॥

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायतेयतेऽप्यभूत् सुखाय तेयते क्षयम् ॥ ३९ ॥

सभासु राजन्नसुराहतैर्मुखै-
र्महीसुराणां वसुराजितैः स्तुताः ।
न भासुरा यान्ति सुरान्न ते गुणाः
प्रजासु रागात्मसु राशितां गताः ॥ ४० ॥

स्वयं कुतो न दर्शिताः अन्ये प्रकारा इति तत्कारणं कथयति—**नेति** । प्रपञ्चभयात् विस्तारभयात् । भेदाः शेषाः विकल्पाः । कार्त्स्न्येन साकल्येन । आख्यातुं कथितुम् । न ईहिताः इच्छिताः । उर्वरितेषु ये प्रभेदाः । दुष्कराः विरचयितुं बोद्धुं वा ते केचन अत्र प्रबन्धे । मया वर्ण्यन्ते प्रदर्श्यन्ते ॥ ३८ ॥

तत्र अव्यपेतव्यपेतं सर्वपादगतं मध्ययमकमुदाहरति—**स्थिरेति** । कश्चित् जीवन्मुक्तं सत्पुरुषं स्तौति । स्थिरा अनश्वरा आयतिः प्रभावः उत्तरकाले वा यस्य तत्संबुद्धिः । यतानि संयतानि इन्द्रियाणि एकादशेन्द्रियाणि यस्य सः । भवान् यतेः योगिनः तपस्विनो वा । न हीयते न्यूनो न भवति । संयतेन्द्रियत्वादिधर्मवत्त्वात् । ते अमायता निष्कपटता ऋजुतेत्यर्थः । मायोपाधिराहित्यं वा । क्षयं विलयम् । अयते अप्राप्नुवते । शाश्वतायेत्यर्थः । इयते एतत्परिमिताय अतिविस्तृताय । सुखाय आनन्दाय । अभूत् । प्रमाणिका छन्दः । प्रमाणिका जरौ लगौ । इति तल्लक्षणम् ॥ ३९ ॥

तदेव चतुष्पादं मध्ययमकं केवलव्यपेतमुदाहरति—**सभास्विति** । कश्चित्कविः नृपं वर्णयति । हे राजन् असुरा दानवाः तैः अहतैः अताडितैः । त्वयि शासितरि दानवा महीसुरान् न पीडयामासुरिति भावः । अथवा सुरया मद्येन आहता भ्रष्टा न भवन्तीति असुराहताः तैः । वसुभिः संपद्भिः राजितैः सुशोभितैः । त्वद्वितीर्णधनलाभेन सदा सतेजस्कैरित्यर्थः । महीसुराणां ब्राह्मणानाम् । मुखैः श्रेष्ठैः । द्विजप्रमुखैरित्यर्थः । सभासु स्तुताः प्रशंसिताः । तथा रागात्मसु

[1] ईप्सिताः. क. [2] °मता एव. अ, क. [3] वक्ष्यन्ते. बपा. [4] तत्र. अ, बपा, कपा.

तव प्रिया सच्चरिता[1]प्रमत्त या
विभूषणं धार्यमिहांशुमत्तया ।
रतोत्सवामोद[2]विशेषमत्तया
[3]प्रयोजनं नास्ति हि कान्तिमत्तया ॥ ४१ ॥
भवादृशा नाथ न जानते नते
रसं विरुद्धे खलु सन्नतेनते ।

त्वदाज्ञापालनेन त्वयि अनुरागस्वभावासु । प्रजासु राशितां गताः राशीभूताः । बहुलीभूता इत्यर्थः । तथा भासुराः उज्ज्वलाः । एतादृशाः ते गुणाः सुरान् न ९यान्तीति न । अपि तु यान्त्येव । देवास्त्वद्गुणान् स्तुवन्तीत्यर्थः । मुखैरित्यत्र मखैरिति पाठे असुरबाधाराहितैर्यज्ञैः इत्यर्थः ॥ ४० ॥

अथ व्यपेतं पादचतुष्टयगतमन्तयमकमुदाहरति—**तवेति** । अन्यासक्त-हृदयं भूषणार्पणेनानुनयन्तं नायकं प्रति कुपिताया वचनमिदम् । हे अप्रमत्त ३कपटानुनये सावहित । तव या सच्चरिता साधुचरित्रा । सोल्लुण्ठवचनमेतत् । प्रिया प्रेयसी । तया इह उत्सवप्रसङ्गे । अंशुमत् किरणोज्ज्वलम् । इदं भूषणं धार्यम् । कथंभूतया रते त्वया सह विलासे य उत्सवः तद्भवः यः आमोदविशेषः संतोषा-६तिशयः तेन मत्तया उद्रिक्तया । त्वया किमिति न धार्यते इत्यत्र उत्तरयति—**प्रयोजनमिति** । मम कान्तिमत्तया विभूषणेन कान्तिसंपन्नतया प्रयोजनं नास्ति। यतोन्यासक्तो भवान् अतः कान्तिसंपन्नताया मम किं प्रयोजनम् । अथवा कान्ति-९मदिदं भूषणं किमिति न धार्यते तत्रोत्तरयति—मे कान्तिमत्तया भूषणकान्तिविशेषेण प्रयोजनं नास्ति। अनुरागकाङ्क्षिणी अहं न भूषणकान्तिमपेक्षे तदुक्तम्—कामिनीनां मंडनश्रीः । व्रजति हि सफलत्वं वल्लभालोकनेन । इति । मयि निरनु-१२रागस्य तव कान्तिमत् भूषणप्रदानं व्यर्थमेवेति भावः । अत्रान्यैः कृता अर्थाः सदोषा इत्युपेक्षिताः ॥४१॥

पादान्तेषु अव्यपेतमुदाहरति—**भवादृशा इति** । कश्चिन्मानधनः सेवकः प्रभुशक्तिसनाथं नृपं प्रशंसति । हे नाथ प्रभो । भवादृशाः वीर्यशालिनो नृपाः ।

१ °चरित प्र°. अ, ब.  २ °वानन्द°. ब, ड, प.
३ न मे फलं किंचन कान्ति°. अ. बपा.

य एव दीनाः शिरसा नतेन ते
चरन्त्यलं दैन्यरसेन तेन ते ॥ ४२ ॥

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥ ४३ ॥

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगत्प्रथमानमानम् ।

नतेः नमनस्य । रसं आस्वादम् । न जानते । यतः सन्नतं सन्नतिः सुप्रणामः तथा इनता प्रभुता च सन्नतेनते । उभे विरुद्धे निसर्गतो भिन्नास्पदे खलु । ये जनाः । दीना दरिद्राः । त एव केवलं नतेन शिरसा चरन्ति सेवन्ते । तेन तादृशेन शिरोनमनरूपेण । दैन्यरसेन ते अलम् । तव संबन्धो माभूद् इति भावः ॥४२॥

चतुर्षु पादेषु मध्यान्तयोः व्यपेतयमकमुदाहरति—**लीलेति** । सा नायिका । शुचिना विशदेन । लीलास्मितेन सविलासहासेन । मृदुना कोमलेन । उदितेन वचसा । लघुना स्वल्पेन । असमग्रेणेत्यर्थः । व्यालोकितेन वीक्षणेन । गुरुणा सविलासमन्थरेण । गतेन गमनेन । व्याजृम्भितेन जृम्भा च अनुराग-व्यञ्जिका तेन जृम्भामिषेण सूचितानुरागेण । तथा दर्शितेन दर्शनविषयीकृतेन । जघनेन जघनप्रदेशेन । एभिः साधनैः । हन्ति व्यथयति । तेन हेतुना । मम जीवितेन गलितं विलीय च्युतमिव । भावे क्तः ॥ ४३ ॥

तदेवाव्यपेतव्यपेतमुदाहरति—**श्रीमानिति** । भगवतः त्रिविक्रमस्य परमात्मनो वर्णनमिदम् । तत्र पदानि । श्रीमान् । अमान् । अमरवर्त्मसमान-मानम् । आत्मानम् । आनतजगत्प्रथमानमानम् । भूमानम् । आनमत । यः । स्थितिमान् । अमाननामानम् । आनमतम् । अप्रतिमानमानम् । अन्वयः—यः श्रीमान् स्थितिमान् अमान् तम् अमाननामानम् आनमतम् अप्रतिमानमानम् आनतजगत्प्रथमानमानम् भूमानम् अमरवर्त्मसमानमानम् आत्मानम् आनमत ।

भूमानमानमत यः स्थितिमानमान-

नामानमानमतमप्रतिमानमानम् ॥ ४४ ॥

सारयन्तमुरसा रमयन्ती

सारभूतमुरुसारधरा तम् ।

सारवानुकृतसारसकाञ्ची

सा रसायनमसारमवैति ॥ ४५ ॥

यः त्रिविक्रमः । श्रीमान् लक्ष्मीवान् । स्थितिमान् मर्यादावान् । जगत्स्थितिकर्ते-
त्यर्थः । अमान् न मातीत्यमान् । अपरिच्छिन्नस्वरूपः सर्वव्यापित्वात् । वर्तते
९इति शेषः । तम् अमाननामानम् अमानानि अपरिमितानि नामानि यस्य तम् ।
आनमतम् आ ईषत् अनन्ति जीवन्ति ते आनाः प्राणसंयमवन्तो योगिनः तैः
मतं ज्ञातम् । अथवा तेषां मतम् इष्टम् । अप्रतिमानमानं प्रतिमीयते एभिरिति
१२प्रतिमानानि प्रमाणानि तैः मानं ज्ञानं यस्य तथा न भवतीति अप्रतिमानमानः
तम् । लौकिकप्रमाणैरगम्यम् । आनते उपासनार्थं शरणमागते जगति लक्षणया
तत्स्थे जने प्रथमानः प्रख्यायमानः मानः पूजा यस्य तम् । भूमानं भूमापकम् ।
१५एकेन पदा भुवो व्यापनात् । तथा अमरवर्त्मसमानमानम् अमरवर्त्म आकाशः
तेन समानं मानं यस्य । गगनव्यापिस्वरूपत्वादिति भावः । आत्मानम् अतति
सातत्येन वर्तते इति आत्मा तम् । त्रिविक्रमरूपं श्रीहरिम् । आनमत प्रह्वीभूय
१८शरणं गच्छत ॥ ४४ ॥

पादचतुष्टयगतं व्यपेतमादिमध्ययमकं दर्शयति—**सारेति** । मिथुनयोः
संभोगोत्र वर्ण्यते । सा नायिका । सारयन्तं संकेतस्थान आत्मानं प्रापयन्तम् । अत
३एव सारभूतं श्रेष्ठभूतम् । सर्वसुखसारभूतमित्यर्थः । तं नायकम् । उरसा रमयन्ती
आलिङ्गनेन प्रमोदयन्ती । पुरुषायितरतेनेति केचित् । तथा सारवा सशब्दा अत
एव अनुकृताः सारसाः यया एतादृशी काञ्ची मेखला यस्याः सा । सारसरवानु-
६कारिमेखलाधारिणीत्यर्थः । तथा उरु विपुलं सारं सौन्दर्यसारं तस्य धरा उरु
सारधरा । अथवा उरुसारं सुवर्णभूषणं धारयन्ती एतादृशी । उरुसारं सुवर्णं

१ सारसानु°. ब, ङ, प.

नयानयालोचनयानयानया[1]-
नयानयान्धान् विनयानयायते ।
न यानयासीज्जिनयानया[2] नया[3]-
नयानयांस्ताञ्जनयानयाश्रितान् ॥ ४६ ॥

स्यात् । इति व्याडिः । रसायनम् अमृतमपि । असारं निःसारम् तुच्छमिति ९यावत् । अवैति जानाति । कान्तालिङ्गनसुखतः अमृतं अतीव निकृष्टमिति मन्यत इति भावः ॥ ४५ ॥

इदानीमव्यपेतव्यपेतयमकं चतुर्ष्वपि पादेष्वाद्यन्तम् अथवा प्रथमतृतीयपादयोराद्यन्तं द्वितीयचतुर्थयोश्चादिमध्यम् उदाहरति—**नयेति** । तत्र तावत् ३पदानि । नयानयालोचनया । अनया । अनयान् । अयानयान्धान् । विनय । अनयायते । न । यान् । अयासीत् । जिनयानयाः । नयान् । अयानयान् । तान् । जनय । अनयाश्रितान् । अन्वयः— हे अनयायते अनया नयानया६लोचनया अनयान् अयानयान्धान् विनय । तथा अनयाश्रितान् तान् अयानयान् नयान् जनय । यान् जिनयानयाः न अयासीत् । कश्चित्सचिवः नृपं प्रजानुशासनमुपदिशति । हे अनयायते एति गच्छतीति अया विनाशशीला ९तादृशी न भवतीति अनया अनपायिनी आयतिः उत्तरकालः यस्य तत्संबुद्धिः । अनया मयोपदिश्यमानया । नयानयालोचनया नयः नीतिः अनयः अनीतिः तयोः आलोचना विमर्शः तया । अनयान् नयविमुखान् । अत एव अयानयान्धान् अयः १२शुभावहो विधिः अनयः तद्विरुद्धः तयोः अन्धान् । शुभाशुभविवेकशून्यान् इत्यर्थः । विनय शिक्षय । शासनेन सन्मार्गानुयायिनः कुरु । [तथा] अनयाश्रितान् उन्मार्गगामिनः । तान् श्रुतिस्मृतिप्रसिद्धान् । अयानयान् अयं शुभमानयन्तीति अया१५नयान् । आङ्पूर्वकान्नयतेः पचाद्यचि द्वितीयाबहुवचनम् । शुभप्रापकान् । नयान् नीतीः । जनय उपदिश्य विस्तारयेत्यर्थः । यान् नयान् । जिनयानयाः जिनस्य बुद्धस्य यानं धर्ममार्गः तं यातीति जिनयानयाः । जैनागमानुसारी नास्तिकः । १८न अयासीत् नानुसृतवान् । श्रुतिस्मृत्युदितान् नीतिमार्गान् उन्मार्गयायिजनेभ्य

---

१ °नया इत्यत्र °रुतिं. अ, रुती. क. २ °सीर्जिनः°. ब, क, ड, प. ३ °नरा°. अ, क.

रवेण भौमो ध्वजवर्तिवीरवे-
रवेजि संयत्यतुलास्त्रगौरवे ।
रवेरिवोग्रस्य पुरो हरेरवे-
रवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥
मया मयालम्भ्यकलामयामया-[1]
मयामयातव्यविरामयामया ।

उपदिशेत्यर्थः । अत्र बहुभिः टीकाकारैर्विविधा अर्थाः प्रदर्शिताः । परं तेषां सदसद्विचारचर्चा गौरवभयान्नात्र वितन्यते ॥ ४६ ॥

पादचतुष्टयगतं व्यपेतमाद्यन्तयमकमुदाहरति—**रवेति** । भगवतः श्रीकृष्णस्य नरकासुरेण सह युद्धवर्णनमिदम् । अतुलानां अनुपमानानां अस्त्राणां ३गौरवं वैपुल्यं यत्र तादृशि । तथा भैरवे बिभीषणे । संयति संग्रामे । ध्वजवर्ती यो वीरः शूरः विः गरुडः तस्य । रवेण सिंहनादेन । भौमः नरकासुरः । अवेजि अकम्पत । ध्वजवर्तिपक्षिणो रवेन यस्येदृशी अवस्था स हरेः पुरतः कथं ६कल्पनीय इत्याह—**रवेरिति** । रवेरिव सूर्यस्येव । उग्रस्य तेजसा तीक्ष्णस्य । अस्य प्रसिद्धविक्रमस्य । हरेः हरिः श्रीकृष्णः स एव हरिः सिंहः तस्य । पुरः अग्रभागे । रिपुं नरकासुरम् । अवेः मेषस्य । तुल्यं समानम् । अवेत जानीत । अत्र संय- ९च्छब्दस्य सामान्ये नपुंसकम् इत्यनेन नपुंसकत्वं ज्ञेयम् । केचित्तु संयति भैरवे अतुलास्त्रगौरवे सति रवेण अवेजि इति योजयन्ति । तथैव वीरवेः इति हरेर्विशे- षणत्वेन कल्पयन्ति ॥ ४७ ॥

तदेवाव्यपेतव्यपेतं पादचतुष्टयगतमाद्यन्तमुदाहरति—**मयेति** । तत्र तावत्पदच्छेदः । मया मयालम्भ्यकलामयामयाम् इति प्रथमचरणे । अयाम् ३अयातव्यविरामयामया इति द्वितीये । मयामयार्तिं निशया अमया अमया इति तृतीये । अमय अमय अमूं करुणामय अमया इति चतुर्थे । तत्रान्वयः— हे अमय करुणामय अयातव्यविरामयामया अमया अमया निशया मयामयार्तिम् ६अयाम् [ अतः ] अमया मया मयालम्भ्यकलामयामयाम् अमूम् अमय ।

---

१ मयालङ्घ्य. क.

मयामयार्तिं निशयामयामया-
मयामयामूं करुणामयामया ॥ ४८ ॥
मता धुनानारमतामकामता-
मतापलब्धाग्रिमतानुलोमता ।
मतावयत्युत्तमताविलोमता-
मताम्यतस्ते समता न वामता ॥ ४९ ॥

अस्यार्थः—अमय नास्ति मा माया कपटं यस्य तत्संबुद्धिः । हे निष्कपट । करुणा-
मय करुणापरिपूर्ण । सखे । अयातव्यः गमनानर्हः विरामः येषां ते अयातव्य-
९विरामाः । अतिदीर्घा इत्यर्थः । अयातव्यविरामा यामा यस्याः सा अयातव्यविराम-
यामा तया । अतिदीर्घयेत्यर्थः । अमया मा शोभा सा नास्ति यस्यां सा । तया
अमया । निःश्रीकयेत्यर्थः । संतापजनकत्वेन निःशोभावहयेति यावत् । अत एव
१२अमया अमावास्यासदृशया । विरहान्धकारबहुलयेत्यर्थः । निशया रात्र्या । साधन-
भूतया । अहम् मयामयार्तिं मयः क्षयः स एव आमयः रोगः तस्य आर्तिं पीडाम् ।
विरहक्षीणतामिति भावः । अयाम् प्राप्तवान् । अतः अमया नास्ति मा परिमाणं
१५यस्य स अमः मदनः तं यातीति अमयाः तेन । मदनपरिपूर्णेनेत्यर्थः । मया मया
सह । मयालम्भ्यकलामयामयाम् मयः क्षयः तेन आलम्भ्या आश्रणीयाः याः कलाः
ताभिः परिपूर्णः मयालम्भ्यकलामयः चन्द्रमाः स एव आमयो यस्याः ताम् । चन्द्र-
१८दर्शनेन संजातपीडामित्यर्थः । अत्र मयालम्भ्य इतिचन्द्रकलाविशेषणं नायिका-
संतापकत्वेन रोषसूचनायेति ज्ञेयम् । अमूं नायिकाम् । अमय संयोजय ॥ ४८ ॥

अथ व्यपेतमादिमध्यान्तयमकं पादचतुष्टयगतमुदाहरति—**मतेति** ।
कस्यचित्पुरुषविशेषस्य वर्णनमिदम् । अत्र पदच्छेदः—मता धुनाना आरमताम्
३अकामताम् । अतापलब्धाग्रिमतानुलोमता । मतौ अयती उत्तमताविलोमताम् ।
अताम्यतः ते समता न वामता । अन्वयः—अताम्यतः ते मतौ उत्तमताविलो-
मताम् अयती अतापलब्धाग्रिमतानुलोमता आरमताम् अकामतां धुनाना मता
६समता न वामता । अस्यार्थः—अताम्यतः कथमपि ग्लानिमगच्छतः । ते तव ।
मतौ बुद्धौ । उत्तमताविलोमताम् उत्तमतायाः विलोमतां प्रातिकूल्यं निकृष्टताम् ।

१ मतान्धुनाना. च, क, ड, प. २ °क्रमता°. अ.

कालकालगलकालकालमुखकालकाल-
कालकालप[1]नकालकालघ[2]नकालकाल- ।
कालकालसितकालका लल[3]निकालकाल-
कालकालग[4]तु कालकाल कलि[5]कालकाल ॥ ५० ॥

अयती अगच्छन्ती । निकृष्टतामभजमाना इत्यर्थः । अतापलब्धाग्रिमतानुलोमता
९अतापेन अक्लेशेन लब्धे अग्रिमतानुलोमते श्रैष्ठ्यानुकूल्ये यया सा । तथा आर-
मताम् आत्मारामाणाम् । व्याङ्परिभ्यो रमः इति परस्मैपदम् । अकामतां निरि-
च्छताम् । धुनाना स्पृहामुत्पादयन्तीत्यर्थः । [ एतादृशी ] मता इष्टा । समता
१२सर्वभूतमैत्री । अस्तीत्यर्थः । तथा वामता वैषम्यम् । नास्तीत्यर्थः ॥ ४९ ॥

चतुर्षु पादेषु आदिमध्यान्तयमकमव्यपेतव्यपेतं दर्शयति—**कालेति** ।
तत्र पदच्छेदः—कालकालगलकालकालमुखकालकालकालकालपनकालकालघन-
३कालकालकालकालसितकालका ललनिका अलकालकालक आलगतु कालकाल
कलिकालकाल । अन्वयः—हे अलकालकालक कालकाल कलिकालकाल
कालकालगलकालकालमुखकालकालकालकालपनकालकालघनकालकालकालकाल-
६सितकालका ललनिका [ मयि ] आलगतु । अर्थः—कश्चित् कामी त्वत्प्रसादेन
प्रिया मामालिङ्गतु इति वर्षाकालं प्रार्थयते । हे अलकालकालक अलका यक्षपुरी
तस्या अलकः भूषकः कुबेरः तद्वत् अलक पर्याप्तिकारक । यक्षेश्वरो यथा पर्याप्तं
९धनं वितरति तथा पर्याप्तं जलं त्वं वितरसि इत्यर्थः । कालकाल कालेषु वसन्ता-
दिषु काल श्रेष्ठ । देवदेववत् द्वितीयकालशब्दस्य श्रेष्ठार्थता । वर्षाकालस्य इतरा-
पेक्षया श्रेष्ठता जीवनप्रदत्वेन बोद्धव्या । तथा कलिकालकाल कलिकाः कोरकान्
१२अलन्ति भूषयन्ति इति कलिकालकाः वसन्तादयः कालाः तेभ्योपि अल समर्थ ।
एवंभूत हे वर्षाकाल । ललनिका प्रशस्तललना । प्रशंसायां कन् । आलगतु
मामाश्लिष्यतु । ललनां विशानिष्टि कालेति । कालः यमः तस्यापि कालः महेशः ।
१५सर्वसंहारकत्वादिति भावः । तस्य गल एव गलकः कालकालगलकः । अलीनां
समूहः आलः । कालं मुखे यस्य स कालमुखः वानरविशेषः । कालः कालिः ।

---

१ °घन°. २ °पन°. ब, ड, प. ३, ४, ५ °लनि° °गतु° °कलि° इत्यत्र °गत° °कलि° °लनि° इति क्रमः अ पुस्तके ।

स च कृष्णवर्णः । कालः यमः । सोपि कृष्णवर्ण एव । कालं कृष्णं कं शिरः येषां
१८ते कालकाः मयूराः तेषाम् आलपनस्य कालः रलयोरभेदात् कारः तत्संपादकः ।
तथा कालाः कृष्णाः घनाः यत्र स चासौ कालः कालघनकालः कालकालपन-
कालश्चासौ कालघनकालः इति कर्मधारयः पश्चात्सर्वेषां द्वन्द्वः । तेन हरगल-
२१अलिसमूह-कालियुग-यम-घनसमयाः एते पञ्च पदार्थाः निष्पन्नाः । तैरिव कालकैः
कृष्णैः अलकैः कुन्तलैः आलसितं भूषितं अत एव कालं कृष्णवर्णं कं शिरो
यस्या इति काल...कालका । परे त्वेतत्पद्यं कृष्णवर्णनपरं मन्यन्ते । ते च
२४द्वितीयचरणे कालकालघनकालकालपनकालकाल इति पाठभङ्गीं कुर्वन्ति ।
तेषामर्थपरिपाटी तावदियम् । पदच्छेदः । प्रथमपादे एकमेव पदम् । द्वितीये
कालकालघनकालकालपनकाल काल इति द्वे पदे । तृतीयचतुर्थयोः कालकाल-
२७सितकालका ललनिका अलकालकालका आलगतु कालकाल कलिकालकाल
इति । अर्थः—कालः संहारकः । कलनात् सर्वभूतानां स कालः परिकीर्तितः ।
इति वचनात् । कालगलः नीलकण्ठः । उभयोः कर्मधारयः । कालकालगलः ।
३०कालः यमः । कालमुखो वानरविशेषः । तेषां द्वन्द्वः कालकालगलकालकालमुखाः ।
तेषां कालकं कृष्णत्वम् आलाति आदत्ते इति तत्संबुद्धिः । कालकालगलकालकाल-
मुखकालकाल । तथा कं जलम् आलाति गृह्णाति इति कालः सजलः । अत एव
३३कालः कृष्णवर्णो यो घनः तस्य काले समये । वर्षाकाले इत्यर्थः । कायन्ति शब्दा-
यन्ते इति कालकालघनकालकाः । मयूरा इत्यर्थः । तेषाम् आलपनानि मुखानि
तद्वत् कलते शब्दायते इति कालकालघनकालकालपनकाल । मयूरवन्मधुर-
३६भाषिन् इत्यर्थः । तथा कालस्य यमस्यापि काल कालकाल । मृत्युनिवारकेत्यर्थः ।
तथा कलिकालस्य काल विनाशक । कल्किरूपेण कलिनिवर्तकेत्यर्थः । एवंगुण-
विशिष्ट हे काल कृष्णवर्ण कृष्ण । कालकेन कृष्णवर्णेन आलसितं भूषितं कं
३९मस्तकं यैः तादृशाः अलकाः कुन्तलाः यस्याः तादृशी । अलकालकालका
अलकान् कुन्तलान् अलते मुक्तादिभिर्भूषयतीति अलकाली । तथा कलमेव कालं
मधुरं यथा तथा कायति शब्दायते इति कालका । मधुरभाषिणी । अलकाली चासौ
४२कालका च अलकालकालका । स्त्रियाः पुंवदिति पुंवद्भावः । ललनिका राधा ।
आलगतु त्वयि संसक्ता भवतु इति । अत्रापि विविधाः पदपदार्थास्तत्तट्टीकाकारै-
र्दर्शिताः । विस्तरभयात्तान्सर्वान् दर्शयितुं न प्रभवामः ॥ ५० ॥

संदष्टयमकस्थानमन्तादी[1] पादयोर्द्वयोः ।
उत्क्रान्तर्गतमप्येतत् स्वातन्त्र्येणा[2]त्र कीर्त्यते ॥ ५१ ॥

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिता-
ङ्गतापि ताप[3]ाय ममास नेयते ॥ ५२ ॥

स्वोक्तभेदेषु पादचतुष्टयगतव्यपेताद्यन्तयमके संभवदपि अन्यैः कंचिद्वि-शेषं भेदं परिकल्प्य संदष्टयमकमिति कल्पितं तन्निरूपयति—**संदष्टमिति** । ३द्वयोः पादयोः अन्तादी प्रथमस्य अन्तः द्वितीयस्य आदिः तौ अन्तादी । स्थानम् आश्रयः यस्य तत् अन्तादियमकमिति भावः । एतत् संदष्टयमकम् । उत्क्रान्त-र्गतमपि पूर्वोक्तप्रकारेषु पादचतुष्टयगतव्यपेताद्यन्तयमकेन्तर्भूतमपि ( रवेण भौम ६इत्युदाहरणे ( ३·४७ ) संभवदपि ) स्वातन्त्र्येण कंचिद् विशेषं परिकल्प्य प्राचीनानुरोधेन स्वतन्त्रतया । अभिधीयते । विशेषस्तु उदाहरणे स्फुटीभवि-ष्यति ॥ ५१ ॥

संदष्टमुदाहरति—**उपोढेति** । कश्चित् कामी स्वापराधेन कुपितां नायिकां स्वस्मिन् विमुखीं विज्ञाय स्वावस्थां सुहृदे कथयति । सा अबला । मदेन ३तारुण्यमदेन । मदिरास्वादमदेन वा । उपोढरागापि प्रवृद्धरत्यभिलाषापि । मदेनसा मदीयापराधेन । गोत्रस्खलनरूपेण । कर्त्रा । मन्युरसेन क्रोधावेशेन । योजिता संयो-जिता । क्रोधपरवशीभूता इत्यर्थः । (अत एव) अनङ्गतापितां मदनसंतापविशिष्टाम् । ६अवस्थामिति शेषः । गतापि प्राप्तापि । मदनसंतप्तापीत्यर्थः । आत्मानं चेतः । न योजिता मयि न योजितवती । मयि मनोनुरागं न बबन्ध । ( अतो ) मम इयते एतावते महते । तापाय संतापाय । न आस न बभूव । अपि तु काक्वा बभूवेति ९भावः । अथवा इयते एतावते । स्वल्पपरिमिताय तायाय । न आस न बभूव । अपि तु महते संतापाय बभूवेत्यर्थः । आस इति तिङन्तप्रतिरूपकमव्ययम् इति शाकटायनः । अन्ये तु आस रराज इति अर्थं मत्वा अस् गतिदीप्त्यादानेषु इति १२भौवादिकस्य लिटः रूपमाहुः ॥ ५२ ॥

---

१ °न्तादिपद्यो°. अ. २ °णाद्य. अ, कपा. ३ तावाच ममाद्य नेयते. अ.

**अर्धाभ्यासं[1] समुद्गः स्यादस्य भेदास्त्रयो मताः ।**
**पादाभ्यासोप्यनेकात्मा व्यज्यते स निदर्शनैः ॥ ५३ ॥**
**ना स्थेयःसत्त्वया वर्ज्यः परमायतमानया ।**
**नास्थेयः स त्वयावर्ज्यः परमायतमानया ॥ ५४ ॥**

एतावत्पर्यन्तं पादभागयमकं सप्रपञ्चं निरूप्य ततः समस्तपादयमक-प्रभेदान् चिकथयिषुराह---**अर्धाभ्यास इति** । अर्धस्य श्लोकस्य पादद्वयस्य न तु पूर्वार्धमात्रस्यैव । तथा सति अग्रे कथितस्य भेदत्रयस्य अनुपपत्तिः स्यात् । अभ्यासः आवृत्तिः । समुद्गः स्यात् । यथा समुद्गः संपुटकः भागद्वयात्मकः तथायं पादद्वयात्मकः । अस्य त्रयो भेदाः मताः इष्टाः । ते यथा प्रथमतृतीयौ द्वितीय-चतुर्थौ पादौ समानौ इत्येकः । ( ३·५४ ) प्रथमद्वितीयौ तृतीयचतुर्थौ समानौ इति द्वितीयो भेदः । ( ३·५५ ) प्रथमचतुर्थौ द्वितीयतृतीयौ समानौ इति तृतीयः प्रकारः । ( ३·५६ ) पादाभ्यासः एकैकस्यैव पादस्यावृत्तिः । अनेकात्मा अनेक-विधः । स निदर्शनैः उदाहरणैः । व्यज्यते समुद्गोदाहरणानन्तरं दर्शितोदाहरणेषु स्फुटीक्रियते । दर्शितोदाहरणक्रमस्तु प्रथमो द्वितीये ( ३·५७ ) प्रथमस्तृतीये ( ३·५८ ) प्रथमश्चतुर्थे ( ३·५९ ) इति त्रयः प्रकाराः । द्वितीस्तृतीये (३·६०) द्वितीयश्चतुर्थे ( ३·६१ ) इति द्वौ । तृतीयश्चतुर्थे ( ३·६२ ) इत्येकः । प्रथमो द्वितीये तृतीये च ( ३·६३ )। प्रथमो द्वितीये चतुर्थे च अथवा पाठभेदेन प्रथमस्तृतीये चतुर्थे च ( ३·६४ ) । द्वितीयस्तृतीये चतुर्थे च ( ३·६५ ) इति चत्वारः प्रकाराः । प्रथमो द्वितीये तृतीये चतुर्थे च इत्येक प्रकारः ( ३·६६ )। सर्वे मिलित्वा एकादश प्रकारा ज्ञेयाः । तेष्वेकः प्रकारोनुदाहृतः कविना पाठ-भेदेन कल्पनीयः ॥ ५३ ॥

समुद्गस्य पूर्वकथितान् भेदान् क्रमेण दर्शयति---**ना स्थेय इति** । कुपितनायिकां प्रति नायकानुसरणाय तत्सख्या उक्तिरियम् । तत्र तावत् पदानि । ना स्थेयःसत्त्वया वर्ज्यः परमायतमानया । न आस्थेयः स त्वया आवर्ज्यः परम् आयतमानया इति । परमायतः अत्यन्तविस्तृतः मानः यस्याः सा तया। अतिमानशालिन्या। तथा स्थेयः स्थिरतरं सत्त्वमभिप्रायः स्वभावो वा यस्याः सा तया । निश्चलस्वभाविकया । त्वया स ना नायकः । न वर्ज्यः परित्याज्यः ।

[1] अत्राभ्यासः अ.

नरा जिता माननयासमेत्य
न राजिता माननया समेत्य ।
विनाशिता वैभवता[1]पनेन
विनाशिता वै भवतापनेन ॥ ५५ ॥
कलापिनां चारुत[2]योपयान्ति
वृन्दानि [3]लापोढघनागमानाम् ।

किंतु आस्थेयः आदरणीयः । न केवलमादरणीय एव परम् आयतमानया प्रयत्नं कुर्वत्या । आवर्ज्यः आवर्जनीयः । अनुकूलाचरणेन स्ववशीकरणीयः । ६सर्वगुणसंपन्नोयं नायकः तस्मिन्ननादरं मा कुरु तं संमानय अनुकूलाचरणैश्च स्ववशमानयेत्यर्थः ॥ ५४ ॥

समुद्रस्य द्वितीयं प्रभेदं दर्शयति--**नरेति** । कश्चित्प्रभविष्णुं नृपं स्तौति । तत्र पदच्छेदः । नराः जिताः माननयासम् एत्य न राजिताः माननया सम ३इत्य विनाशिता वैभवतापनेन विना अशिताः वै भवता आपनेन इति । हे सम सश्रीक । मया श्रिया सहितः समः तत्संबुद्धिः । माननया संमानेन । इत्य संगन्तुं योग्य । इण्धातोः एतिस्तुशास्वृदृजुषः क्यप् इति क्यप् । संमान्येत्यर्थः । एतादृश ६हे राजन् (त्वया) जिता नरा अरयः माननयासं मानश्च नयश्च मानयनौ असनम् आसः क्षेपः माननययोः आसः माननयासः तम् । माननययोः अपसरणम् । एत्य प्राप्य । न राजिताः न शोभिताः । नष्टप्रभा भवन्तीत्यर्थः । त्वत्तः पराजयं प्राप्य ९समराङ्गणात्पलायिताः विगतप्रभा भवन्तीत्यर्थः । आप्नोति इति आपनः सर्वव्यापक इत्यर्थः । तेन आपनेन सर्वव्यापकेन । भवता । वैभवेन विभुत्वेन । यत्तापनं शत्रूणां संतापनं तेन । विनाशिता हताः । वै अतः । विना गृध्रादिपक्षिणा १२अशिताः भक्षिताः । त्वया हता अरयः गृध्रादिभिर्भक्षिता इत्यर्थः ॥ ५५ ॥

तृतीयप्रभेदं दर्शयति—**कलापिनामिति** । वर्षाकालवर्णनमिदम् । तत्र पदानि–कलापिनाम् चारुतया उपयान्ति । वृन्दानि लापोढघनागमानाम् । वृन्दा- ३निलापोढघनागमानाम् । कलापिनाम् च आरुतयः अपयान्ति इति । लापः

---

१ °तायनेन. ब, ड, प. २ °तमोप°. अ. ३ °स्वापोढ°. अ.

वृन्दानिलापोढघनागमानां
कलापिनां चारुतयोपयान्ति ॥ ५६ ॥
नमन्दयावर्जितमानसात्मया[1]
न मन्दयावर्जितमानसात्मया[2] ।
उरस्युपास्तीर्णपयोधरद्वयं
मया समालिङ्ग्यत जीवितेश्वरः ॥ ५७ ॥

केकाध्वनिः ऊढः प्राप्तः यस्मात् । आहिताग्न्यादित्वात् लापशब्दस्य पूर्वनिपातः । तादृशः घनानां मेघानाम् आगमः येषां ते तथा । अथवा लापेन ऊढः सूचितः ६घनागमो यैः ते तेषाम् । कलापिनां मयूराणाम् । वृन्दानि चारुतया सौन्दर्येण । उपयान्ति संगच्छन्ते । वर्षासु मयूराणां यौवनवत्त्वात्सौन्दर्यातिशय इति भावः । तथा के पानीये लपितुं आरवं कर्तुं शीलं येषां ते कलापिनः हंसाः । अथवा ९कलं मधुरारावम् आप्नुवन्ति ते कलापिनः तेषां कलापिनां हंसानाम् । आरुतयः आरावाः । च अपयान्ति गच्छन्ति । वर्षासु तेषां मदशून्यत्वात् । हंसान् विशिनष्टि **वृन्देति** । वृन्दानिला संघीभूता वायवः तैः अपोढः दूरीकृतः घनागमः १२नृत्यविशेषागमो येषां तेषाम् । घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । इति मेदिनी । मेघानिलैः परित्यक्तसविलासगमनाः इत्यर्थः ॥ ५६ ॥

अथानेकविधं पादाभ्यासमुदाजिहीर्षुः प्रथमं प्रथमद्वितीयपादगतमुदाहरति—**नमन्दयेति** । पदच्छेदः—नमन् दयावर्जितमानसात्मया न मन्दया अवर्जित-३मानसात्मया उरसि उपास्तीर्णपयोधरद्वयम् मया समालिङ्ग्यत जीवितेश्वरः इति । प्रथममुपेक्षितवल्लभायाः पश्चात्सानुशयायाः नायिकाया वचनमिदम् । दयया वर्जितौ मानसम् अन्तःकरणम् आत्मा च स्वभावाश्च यस्याः सा तया । तथा ६अवर्जिते अपरित्यक्ते माने सात्मया सयत्नया । सप्रयत्नं मानं परिरक्षन्त्या इत्यर्थः । आत्मा पुंसि स्वभावेपि प्रयत्नमनसोरपि—इति मेदिनी । अत एव मन्दया मूढया । मया जीवितेश्वरः प्राणनाथः । नमन् प्रणतिपरोपि । उरसि जीवितेश्वरस्य वक्षसि । ९उपास्तीर्णम् आसञ्जितं पयोधरद्वयं यथास्यात्तथा । न समालिङ्ग्यत नालिङ्गितः ॥ ५७ ॥

१ °सार्थया. ब. २ °सार्थया. ब.

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः ।
स भासुराणामबला विभूषिता
विहारयन्निर्विश संपदः पुराम् ॥ ५८ ॥

कलं कमुक्तं तनुमध्यनामिका
स्तनद्वयी च त्वदृते न हन्त्यतः ।
न याति भूतं गणने भवन्मुखे
कलङ्कमुक्तं तनुमध्यनामिका ॥ ५९ ॥

प्रथमतृतीयपादगतमुदाहरति—**सभेति** । अबला बलसंज्ञकदैत्यशून्या । इन्द्रेण तस्य निषूदनादिति भावः । तेन च सभायाः निर्भयत्वम् । विभुना स्वामिना ३महेन्द्रेण उषिता अध्यासिता । एतादृशी सुराणां सभा सुधर्माख्या । तव मृणाल-निर्मलैः मृणालवत् स्वच्छैः शीतलैश्च तैः । गुणैः आरोहि अध्याक्रान्ता । देव-सभायामिन्द्रादयस्त्वद्गुणान् वर्णयन्तीत्यर्थः । स त्वं विभूषिताः अलंकृताः । अबलाः ६विहारयन् रमयन् । भासुराणाम् उज्ज्वलानाम् । पुराम् संपदः निर्विश उपभुङ्क्ष्व । कस्यचित् राज्ञः प्रशस्तिरियम् ॥ ५८ ॥

तदेव प्रथमचतुर्थपादगतमुदाहरति—**कलमिति** । कश्चिज्जितेन्द्रियं पुरुषं स्तौति । तत्र पदच्छेदः—कलं कम् उक्तं तनुमध्यनामिका इति प्रथम-३चरणे । कलङ्कमुक्तं तनुमत् हि अनामिका इति चतुर्थचरणे । अत्र स्त्रीणा-मित्यध्याहार्यम् । तथा च स्त्रीणां कलं मधुरम् उक्तं भाषितम् । तथा तनुः कृशः सूक्ष्मो वा यः मध्यः तस्य नामिका स्वभारेणः तं नमयन्ती एतादृशी स्तनद्वयी । ६विस्तृतं स्तनयुगलमित्यर्थः । त्वदृते त्वां विना । कं न हन्ति । सर्वान् अपि पीड-यतीत्यर्थः । त्वं तु ललनावचोभिः सौन्दर्येण च मुग्धो न भवसीति भावः । अतः अतःकारणात् । भवान् एव मुखः प्रमुखः यत्र तादृशे समाजे गणने जितेन्द्रियाणां ९परिगणने । प्रस्तुते सति । अनामिका कनिष्ठिकासविधे वर्तमाना अङ्गुलिः । कर्त्री कलङ्कमुक्तं दोषशून्यम् । जितेन्द्रियमिति भावः । तनुमत् सशरीरम् । भूतं जन्तुम् । न याति न प्राप्नोति । हीति निश्चये । जितेन्द्रियाणां गणनाप्रसङ्गे प्रथमं भवान्

यशश्च ते दिक्षु रजश्च सैनिका
वितन्वतेजोपम दंशिता युधा ।
वितन्वतेजोपमदं शितायुधा
द्विषां च कुर्वन्ति कुलं तरस्विनः ॥ ६० ॥

बिभर्ति भूमेर्वलयं भुजेन ते
भुजंगमोमा स्मरतो मदञ्चितम् ।
शृणूक्तमेकं स्वमवेत्य भूधुरं
भुजं गमो मा स्म रतो मदं चितम् ॥ ६१ ॥

१२कनिष्ठिकामारोहति । त्वत्तुल्यस्य पुरुषस्याभावाच्च अनामिकां न कोप्यन्यः प्राप्नोति । अनामिका सार्थवती बभूवेत्यर्थः । त्वमनुपमोसीति भावः ॥ ५९ ॥

द्वितीयतृतीयपादगतं तद्दर्शयति—**यश इति** । कस्यापि विक्रमशालिनो नृपस्य स्तुतिरियम् । अत्रावृत्तपादयोः पदच्छेदः—वितन्वते अजोपम दंशिताः ३युधा । वितनु अतेजः अपमदं शितायुधाः इति । हे अजोपम विष्णुसदृश । ते दंशिताः कवचिनः । शितायुधाः तीक्ष्णायुधाः । तरस्विनः वेगवन्तश्च । सैनिकाः युधा युद्धेन । दिक्षु रजः युद्धसंमर्दोत्थां धूलिम् । यशः जयाल्लब्धं यशश्च । वितन्वते ६विस्तारयन्ति । तथा द्विषां कुलं समूहम् । वितनु विनाशात्तनुशून्यम् । अतेजः तेजःशून्यम् । अपमदं गलितगर्वम् । च कुर्वन्ति ॥ ६० ॥

द्वितीयचतुर्थपादगतं तदुदाहरति—**बिभर्तीति** । अत्र द्वितीयचतुर्थयोः पदच्छेदः—भुजंगमः अमा स्मरतः मत् अञ्चितम् । भुजं गमः मा स्म रतः मदं ३चितम् । कश्चिद्राजानं व्याजस्तुत्या प्रशंसति । हे राजन् ते भुजेन अमा सह । भुजंगमः शेषः । भूमेर्वलयं बिभर्ति । अतः स्मरतः एतत् सर्वं ज्ञातवतः । मत् मत्तः। अञ्चितं सकलैः प्रशंसितम् । उक्तं वचनम् । शृणु । किं तत्तदाह—स्वं स्वीयम् । ६एकं असहायम् । भुजं भूधरं भूमिधारकम् । अवेत्य विज्ञाय । रतः संतुष्टः सन् । चितम् उपचितम् स्फीतमित्यर्थः । मदं गर्वम् । मा स्म गमः मा याहि ॥ ६१ ॥

---

१ तु. अ.

**स्मरानलो मानविवर्धितो यः**
**स निर्वृतिं ते किमपाकरोति ।**
**समन्ततस्तामरसेक्षणे न**
**समं ततस्तामरसे क्षणेन ॥ ६२ ॥**

**प्रभावतोनाम न वासवस्य**
**प्रभावतो नामन वा सवस्य ।**
**प्रभावतो नाम नवासवस्य**
**विच्छित्तिरासीत् त्वयि विष्टपस्य ॥ ६३ ॥**

तृतीयचतुर्थपादगतं तदुदाहरति—**स्मरेति** । काचित् सखी प्रियानुगमनाय नायिकां प्रार्थयते । हे तामरसेक्षणे आरक्तपङ्कजनयने । कोपादारक्तनयने ३इति भावः । अरसे अरसिके । उपालम्भोक्तिरियम् । यः मानविवर्धितः मानेन वृद्धिं गमितः । तथा क्षणेन उत्सवेन । समं ततः परिपूर्णः । एतादृशः स स्मरानलः मदनाग्निः । समन्ततः सर्वभावेन । तां पूर्वानुभूताम् । ते निर्वृतिं परमानन्दम् । न ६अपाकरोति किम् । अपितु करोत्येव । अतः सुखविनाशकं कोपं त्यक्त्वा तं सेवस्वेत्यर्थः ॥ ६२ ॥

पादत्रयगतं यमकं दिदर्शयिषुरादौ प्रथमपादत्रयगतमुदाहरति—**प्रभावत इति** । तत्र तावत् पदानि । प्रभावतः अनाम न वासवस्य । प्रभावतः नामन ३वा सवस्य । प्रभौ अतः नाम नवासवस्य । विच्छित्तिः आसीत् त्वयि विष्टपस्य । कश्चित् सन्नृपतिं स्तौति । हे प्रभावतः स्वप्रभावेन । अनाम नमनं नामः। न विद्यते नामः यस्य स अनामः । तत्संबुद्धिः । कमपि नृपं शरणत्वेन अकृतप्रणाम इत्यर्थः। ६तथा नामन शत्रून् नमयतीति नामनः तत्संबुद्धिः । त्वयि विष्टपस्य भुवनस्य । प्रभौ स्वामिनि सति । वासवस्य इन्द्रदेवतासंबन्धिनः । प्रभावतः कान्तिमतः । सवस्य यज्ञस्य । विच्छित्तिः विच्छेदः । न आसीत् । ब्राह्मणाः इन्द्रदेवताकान् ९यज्ञान् वितेनुरित्यर्थः । वा समुच्चयार्थे । तथैव नवासवस्य नूतनमद्यस्य । विच्छित्तिः विच्छेदः । पानेन विनाश इति यावत् । न आसीत् । अन्ये तु अयं श्लोकः कृष्णवर्णनपर इति मन्यन्ते । तद्यथा–हे प्रभावतः प्रभासंपन्नस्य । इन्द्रस्यापि नामन १२विनम्रकारक । यज्ञभङ्गपारिजातहरणादिना इन्द्रस्य गर्वहरणादिति भावः । तथा

परंपराया बलवारणानां
परं पराया बलवारणानाम् ।
धूलीः स्थलीर्व्योम्नि[1] विधाय रुन्धन्
परं पराया बलवा रणानाम् ॥ ६४ ॥
न श्रद्दधे वाचमलज्ज मिथ्या-
भवद्विधानामसमाहितानाम्

नास्ति आमः रोगः यस्य तत्संबुद्धिः अनाम । त्वयि विपष्टस्य प्रभौ सति नवासवस्य नूतनसुरायाः । सवस्य यज्ञस्य च । विच्छेदो नासीत् । यदूनां सुरापानोत्सवः १५धार्मिकाणां च यज्ञक्रियाः सततं प्रावर्तन्त । यदूनां सुरापानोत्सुकत्वं पुराणप्रसिद्धमेव ॥ ६३ ॥

प्रथमद्वितीयचतुर्थपादगतं तद्दर्शयति—**परंपराया इति** । पदच्छेदः । परं-परायाः बलवारणानाम् । परं परायाः बलवारणानाम् । धूलीः स्थलीः व्योम्नि ३विधाय रुन्धन् । परं परायाः बलवाः रणानाम् । राज्ञः प्रभाववर्णनमिदम् । बलस्य शत्रुसैन्यस्य वारणाणां निवारकाणाम् । बलवारणानाम् प्रबलगजानाम् । परायाः श्रेष्ठायाः । परंपराया पङ्क्तेः । हेत्वर्थे पञ्चमी । परंपरारूपहेतुना । रणानां ६स्थलीः भूमीः । व्योम्नि वियति । धूलीः धूलिरूपाः । विधाय बलवाः बलेन सामर्थ्येन शत्रून् वारयतीति बलवाः । त्वं परं श्रेष्ठम् । परं शत्रुम् । रुन्धन् व्याप्नुवन् । परायाः अगाः । परापूर्वकस्य यातेर्लङो रूपम् । शत्रुमाक्रान्तवानसीत्यर्थः ॥ ६४ ॥

अत्र प्रथमतृतीयचतुर्थपादाभ्यासोदाहरणमावश्यकम् । परं तन्नोपलभ्यते । न च टीकाकारैरपि विवृतमस्तीति तद्बहोः कालादारभ्य विच्छिन्नमिति भाति । ३अतस्तद्विमर्शकैः मार्गणीयम् । इदानीं पुनः द्वितीयपादमारभ्य चतुर्थपादान्तानां पादत्रयगतं यमकमुदाहरति—**न श्रद्दधे इति** । पदच्छेदः—न श्रद्दधे वाचम् अलज्ज मिथ्याभवद्विधानां असमाहितानाम् भवद्विधानां असमाहितानाम् भवद्वि-६धानाम् असमाहितानाम् । हे अलज्ज निर्लज्ज । भवद्विधानां भवत्सदृशानाम् । वाचं उक्तिम् । न श्रद्दधे न विश्वसिमि । कथंभूतां वाचम् । मिथ्याभवद्विधानां मिथ्याभवत्

[1] °व्योमि. ब, क, ड, प.

भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम् ॥ ६५ ॥
सन्नाहितोमानमराजसेन[1]
सन्नाहितोमानम राजसेन ।
सन्ना हितोमानमराजसेन
सन्नाहितो मानम राजसे न ॥ ६६ ॥

असत्यं भवत् विधानम् प्रतिपाद्यं यस्याः सा ताम् । तथा असमाहितानाम्
असमः असरलः वक्र इति यावत् । यः अहिः सर्पः तद्वत् तानः विस्तारो यस्याः
सा ताम् । अतिवक्रामित्यर्थः । तथा भवद्विधानां भवत् प्रतिक्षणं नवं नवं जाय-
मानं विधानं विधिर्यस्यास्ताम् । अथवा भवे उच्चारणसमये एव द्विधा आनः
प्राणः अर्थरूपो यस्यास्ताम् । किंभूतानां भवद्विधानाम् । असमाहितानाम्
नास्ति समाहितं समाधानं येषां तथाविधानाम् । सदैव व्यग्रवृत्तीनामित्यर्थः ।
तथैव असमाहितानां न समाः असमाः विषमाः ये अहिताः शत्रवः तेषां
असमाहितानाम् । मम विषमशत्रुस्वरूपाणामित्यर्थः ॥ ६५ ॥

इदानीं पादचतुष्टयवृत्तिं त्रिरभ्यासमुदाहरति —**सन्नाहितोमानेति** ।
कश्चिद्राजानं स्तौति । तत्र तावत्पदच्छेदः—सन् आहितोमानमराजसेन । सन्ना-
हित उमानम राजसेन । सन्ना हितः अमान् अमराजसेन । सन्नाहितः मा अनम
राजसे न । अन्वयार्थः—हे अनम नमतीति नमः न नमः अनमः तत्संबुद्धिः ।
कस्यापि पुरुषस्य अप्रणत इत्यर्थः । तथा आहितोमानमराजसेन न नमन्ति परं
इति अनमाः द्विजाः तेषां राजा अनमराजः द्विजराजः । चन्द्रः इत्यर्थः ।
सोऽस्माकं ब्राह्मणानां राजा इति श्रुतिः । उमा च अनमराजश्च उमानमराजौ तौ
आहितौ स्वाङ्के स्वशिरसि च स्थापितौ येन स आहितोमानमराजः शंकरः ।
इनेन सह इति सेनः । सनाथः इति यावत् । आहितोमानमराजेन सेनः तत्सं-
संबुद्धिः आहितोमानमराजसेन । शंकरस्वामिक इत्यर्थः । तथा सन्नाहित सन्नाः
अवसन्नाः विनष्टाः इति यावत् । अहिताः शत्रवः यस्य तत्संबुद्धिः । विनष्टशत्रो ।

---

१ सन्नाभितो. अ

**सकृद्द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः ।**
**श्लोकद्वयं तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥ ६७ ॥**
**विनायकेन भवता वृत्तोपचितबाहुना ।**
**स्वमित्रोद्धारिणा भीता पृथ्वी यमतुलाश्रिता ॥ ६८ ॥**

१२तथा उमानम नमतीति नमः उमायाः नम उमानम । उमाभिवादक । तथा राज-सेन राजसाः रजोगुणप्रधानाः क्षत्रियाः तेषाम् इन स्वामिन् । क्षत्रियश्रेष्ठ । तथा अमराजसेन अमरान् अजति क्षिपतीति अमराजा एतादृशी सेना यस्य तत्संबुद्धिः १५हे अमराजसेन । देवाभिभवकसैन्य । एतादृश हे नृप । त्वं सन्ना सत्पुरुषः । तथा हितः सर्वभूतहितः । अमान् मातीति मान् न मान् अमान् महानित्यर्थः । तथा सन्नाहितः कवचितश्च सन् न मा राजसे । अपितु राजसे एव । अत्रापि १८तत्तट्टीकाकारैर्विविधा अर्था दर्शितास्तेः तत्रैव द्रष्टव्याः ॥ ६६ ॥

पादाभ्यासमुपसंहरन् श्लोकाभ्यासं दर्शयति—**सकृदिति** । पादस्य श्लोक-तुरीयभागस्य । सकृत् एकवारम् । द्विः द्विवारम् । त्रिः त्रिवारम् च । यः अभ्यासः ३आवृत्तिः । स प्रदर्शितः उदाहृतः । तत्र सकृदभ्यासः पादद्वयगतः द्विरभ्यासः पादत्रयगतः त्रिरभ्यासश्च पादचतुष्टयगत इति बोध्यम् । युक्तः एकवाक्यार्थतया परस्परसंबद्धः अर्थः अभिधेयः यस्मिन् तत् युक्तार्थम् । एकवाक्यतया एकविशेष्य-६कान्वयबोधकमित्यर्थः । श्लोकद्वयम् समानानुपूर्विकं श्लोकाभ्यासयमकमित्यर्थः । स्मृतः । यथेति उदाहरणप्रस्तावाय ॥ ६७ ॥

प्रस्तुतं श्लोकाभ्यासयमकमुदाहरति—**विनायकेनेति** । कश्चित् विन-ष्टारिर्नृपः स्तूयते । तत्र प्रथमश्लोकस्थतृतीयान्तानि पदानि अरिविशेषणानि ३द्वितीयश्लोकस्थानि वर्णनीयनृपविशेषणानीति ज्ञेयम् । तथा च अयमर्थः । विनायकेन विगतः नायकः यस्य विनायकः तेन नियामकशून्येन । तथा वृत्तो-पचितबाहुना वृत्तौ संजातौ उपचितं चितासमीपे बाहू यस्य तेन नष्टप्रायबाहुना ६इत्यर्थः । स्वमित्रोद्धा स्वमित्राणि स्वसुहृदः । अथवा स्वं वित्तं मित्राणि च उज्ज-हाति परित्यजति इति स्वमित्रोद्धा । उत्पूर्वकात् ओहाक् त्यागे इत्यस्मात् क्विपि तृतीयैकवचनम् । तथा भीता भियं इता गतेन । भयभीतेन । भवता सता । आरिणा

१ यमुक्तार्थं अ.

**विनायकेन भवता वृत्तोपचितबाहुना ।**
**स्वमित्रोद्धारिणाभीता पृथ्वीयमतुलाश्रिता ॥ ६९ ॥**

**एकाकारचतुष्पादं तन्महायमकाह्वयम् ।**
**तत्रापि[1] दृश्यतेभ्यासः सा परा यमकक्रिया ॥ ७० ॥**

**समानयासमानया समानयासमानया ।**
**स मा न यासमानया समानयासमानया ॥ ७१ ॥**

शत्रुणा । पृथ्वी दीर्घा । यमतुला रणपराङ्मुखानां क्षत्रियाणां दण्डनार्थं तप्तायोनिर्मिता लोकप्रसिद्धा तुला । आश्रिता आरूढा ॥ ६८ ॥

अस्यैव श्लोकस्य नृपपरत्वेन व्याख्या यथा—**विनायकेनेति** । इयम् एषा । पृथ्वी भूमिः । भवता त्वया । तु पुनः । आश्रिता अधिष्ठिता । अतुला अनुपमा । अभीता भयशून्या च । वर्तते इति शेषः । कथं भूतेन भवता । विनायकेन विशिष्टेन नायकेन । समीचीनविनेत्रा इत्यर्थः । वृत्तौ वर्तुलौ उपचितौ पुष्टौ बाहू यस्य तेन । वर्तुलपींवरभुजेनेत्यर्थः । तथा सुष्ठु यथा स्यात्तथा अमित्रान् शत्रून् उद्धर्तुं शीलं यस्य तेन स्वमित्रोद्धारिणा । उत्खातशत्रुणेत्यर्थः ॥ ६९ ॥

पादचतुष्टयगतस्य अभ्यासस्य प्रतिपादमवान्तराभ्यासे रचनान्तरविशेषात् संज्ञान्तरमवश्यमिति तद्दर्शयति —**एकाकारेति** । एकाकारम् एकानुपूर्विकं चतुष्पादं महायमकसंज्ञकं भवति । संज्ञायाः बीजं दर्शयति । तत्रापि तत्र पाद मध्येपि अभ्यासः पादांशस्य आवृत्तिः दृश्यते । अत एव सेयं यमकक्रिया यमकव्यापारः । परा श्रेष्ठा । अत्यन्तप्रतिभाशालिसाध्यत्वात् इति भावः ॥ ७० ॥

महायमकमुदाहरति-—**समानयेति** । कश्चित् प्रेयसीसमागमसंपादनाय सखायं प्रार्थयति । तत्र तावत् पदच्छेदः—समानया असमानया । समानयासमानया । सः मा न या असमानया । समानय असम अनया । अन्वयार्थः । हे असम निरुपम । मत्सखे । सः त्वम् । मा माम् । समानयासमानया समानं तुल्यं यासस्य आयासस्य मानं परिमाणं यस्या सा तया । समदुःखयेत्यर्थः । तथा समानया मानसहितया मानिन्या इत्यर्थः । तथा असमानया निरुपमया । अनया नायिकया

---

१ तस्यापि. ब.

धराधराकारधरा धराभुजां
भुजा महीं पातुमहीनविक्रमाः ॥
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा मानधुरावलम्बिनः ॥ ७२ ॥

आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा ।

समानय संयोजय । रोषाविष्टायास्तस्या अनुनयने अनुबन्धं त्यज इति वदसि चेत्तर्हि शृणु । या सा नायिका । असमानया मा लक्ष्मीः शोभा इति यावत् । तथा नयः नीतिश्च मानयौ ताभ्यां सहिता तादृशी न भवतीति तया असमानया । सौन्दर्यनयाभ्यां शून्येत्यर्थः । न भवति नास्ति । सा सुन्दरी विदुषी च वर्तते । अतो नोपेक्ष्या इति भावः ॥ ७१ ॥

अत्यन्तबहवस्तेषां भेदाः संभेदयोनयः । ( ३·३ ) इति प्रतिज्ञातबहुप्रभेदेषु सजातीयमिश्रणजनितभेदाः प्रदर्शिताः । इदानीं विजातीयमिश्रणभेदा अपि संभवन्तीत्युदाहरणेन दर्शयति—**धराधरेति** । नृपभुजवर्णनमेतत् । धराभुजां भूपतीनाम् । भुजाः बाहवः । कीदृशाः धराया धरः धारकः शेषः तस्य आकारस्य धराः । तत्सदृशदीर्घाः समर्थाश्च इत्यर्थः । तथा अहीनविक्रमाः अहीनः अन्यूनः विक्रमो येषां ते अहीनविक्रमाः । महापराक्रमशालिनः इत्यर्थः । तथा सहसा सपद्येव । हतारयः निषूदितशात्रवः । रयोद्धुराः रयेण वेगेन उद्धुराः उत्कटाः । मानधुरावलम्बिनः मानस्य धूः मानधुरा तां अवलम्बन्ते इति मानधुरावलम्बिनः । सन्मानाभिमानिनः इति यावत् । क्रमात् पूर्वजानुक्रमेण । महीं पृथ्वीम् । पातुं रक्षितुम् । सहन्ते समर्था भवन्ति । अत्र धराधराकारधरा धरा इत्यव्यपेतव्यपेतयमकम् । भुजां भुजेति संदष्टयमकम् । महीं पातुमही इति सहन्ते सहसा इति च व्यपेतयमकम् । रयो रयो इति अव्यपेतयमकं संदष्टयमकं च । धुरा मानधुरा इति व्यपेतयमकम् । एवं बहुप्रकाराणां अत्र संसृष्टिः ॥ ७२ ॥

एतावत्पर्यन्तमनुलोमाभ्यासे यमकप्रभेदा दर्शिताः । इदानीं तु प्रतिलोमाभ्यासे यमकप्रभेदान् दर्शयति—**आवृत्तिरिति** । प्रातिलोम्येन विलोमतया ।

---

१ °विक्रमात्. अ, क.

यमकं[1] प्रतिलोमत्वात् प्रतिलोममिति[2] स्मृतम् ॥ ७३ ॥

यामताश कृतायासा सा याता कृशता मया ।
रमणारकता तेऽस्तु स्तुतेताकरणामर ॥ ७४ ॥
नादिनोमदना[3] धीः स्वा न मे काचन कामिता ।

पादः श्लोकचरणः अर्धम् श्लोकार्धम् तथा श्लोकः संपूर्णः श्लोकः ते गोचरा विषयाः यस्याः सा । पादगोचरा अर्धगोचरा श्लोकगोचरा इत्यर्थः । आवृत्तिः अभ्यासः । प्रतिलोमत्वात् प्रतिलोमावृत्तेः । प्रतिलोमं यमकम् । इति स्मृतम् । एवं च पादार्धश्लोकगतत्वेन तस्य त्रयः प्रभेदा इति भावः । तथाच यत्र पूर्वपादस्य प्रतिलोमावृत्त्या उत्तरपादः तथा पूर्वार्धस्य प्रतिलोमावृत्त्या उत्तरार्धः एवमेव पूर्वश्लोकप्रतिलोमावृत्त्या च उत्तरश्लोकः संपद्यते तत् प्रतिलोमयमकमित्यर्थः ॥७३॥

पादप्रतिलोममुदाहरति—**यामतेति** । अन्यत्रासक्तस्य वल्लभस्य नायिकाकृतं भर्त्सनमिदम् । हे अमताश अमते अनिष्टे गर्हिते अन्यासङ्गे आशा यस्य तत्संबुद्धिः । कृतायासा कृतः विहितः आयासः क्लेशः यया सा कृतायासा । एतादृशी या कृशता त्वत्प्रतीक्षाक्लेशेन जनिता कृशता । सा मया याता प्राप्ता । त्वद्विरहेण यद्दुःखमनुभाव्यं तदनुभूतमेव । तस्मात् हे स्तुतेत स्तुतात् स्तवनात् इत भ्रष्ट । निंद्याचरितेत्यर्थः । तथा अकरणामर अकरणे अनुचितानुष्ठाने अमर देववन्निष्प्रतिबन्ध । इन्द्रादयो देवा यथा अहिल्यासंभोगादिकमनुष्ठितवन्तः तद्वदप्रशस्ताचरणशील । अथवा नास्ति करणं क्रिया यस्य तत्संबुद्धिः । कर्तव्याचरणशून्य । तथा आमं विरहरोगं राति ददाति इति आमर । एतादृश हे रमण नाथ । ते तव । आरकता इयर्तीति आरकः । ऋधातोः कर्तरि ण्वुल् । तस्य भावः आरकता गन्तृता । अस्तु । इतो याहीत्यर्थः ॥ ७४ ॥

श्लोकार्धप्रतिलोमयमकमुदाहरति—**नादिन इति** । कश्चित् योगी आत्मस्थितिं वर्णयति । नादः नादरूपं ब्रह्म तदस्यास्तीति नादी तस्य नादिनः नादब्रह्मध्यानानुरतस्य । मे मम । अमदना मदनविकारशून्या । स्वा स्वीया । धीः स्वाधीना स्वायत्तेन्द्रियतया आत्मवशा । अतः काचन कामिता विषयाभिलाषुकता ।

---

१ यमकप्रति°. अ. २ °लोम्यमिदं. अ. ३ °दमना. क.

तामिका न च कामेन स्वाधीना दमनोदिना[1] ॥ ७५ ॥

यानमानयमाराविकशोनानजनाशना[2] ।

यामुदारशताधीनामायामायमनादिसा ॥ ७६ ॥

सा दिनामयमायामा नाधीता शरदामुया ।

न नास्ति । तथा दमनोदिना दमं इन्द्रियनिग्रहं नोदितुमपनेतुं शीलमस्य तेन
६दमनोदिना । विषयेषु इन्द्रियप्रवर्तकेनेत्यर्थः । कामेन अभिलाषेण । हेतुना । तामिका
ग्लानिः । रोगाख्यायां ण्वुल् बहुलम् इति तमुधातोर्ण्वुल् । मम नास्ति । योगिनां
नादोत्पत्तिश्च कथिता सुरेश्वराचार्यैः । यथा—

९ सरेचपूरैरनिलस्य कुम्भैः सर्वासु नाडीषु विशोधितासु ।
अनाहतादम्बुरुहादुदेति स्वात्मावगम्यः स्वयमेव नादः ॥

इति । अत्र अनुलोमपाठे मदनाधीः स्वा इत्यत्र विसर्गो विद्यते प्रतिलोमे तु
१२स्वाधीना इत्यत्र नास्तीति सदोषता न कल्प्या । यतः—

यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ ॥

१५इति सकलालंकारिकैरभ्यनुज्ञातत्वात् । परे तु मदनाधी इति प्रथमाद्विवचनपाठं
कल्पयन्ति । मदनश्च तज्जन्या आधिश्च मदनाधी । मे न मम न स्तः इत्यर्थं
दर्शयन्ति । अस्मिन् पक्षे विसर्गदोषस्य प्रसक्तिरेव न ॥ ७५ ॥

समस्तश्लोकगोचरं प्रतिलोममुदाहरति—**यानेति सा दिनेति** च श्लोक-
द्वयेन । कश्चित् कामुको मित्रसविधे गणिकानायिकां स्तौति । तत्र तावत्
३पदच्छेदः—यानमानयमाराविकशा ऊनानजनाशना । याम् उदारशताधीनाम्
आयाम् आयमनादिसा । सा दिनामयमा अयामा न अधीता शरदा अमुया ।
नाशनाजनना शोकविरामाय न मानया । अन्वयः—उदारशताधीनां याम् (अहम्)
६आयाम् (तथा या) अमुया शरदा अधीता सा यानमानयमाराविकशा ऊनानज-
नाशना आयमनादिसा दिनायामा अयामा नाशनाजनना मानया शोकविरामाय
न (इति) न । अपि तु स्यादेवेति शेषः । अर्थः—उदाराणां दातृमहाशयानां शतानि

1 मदनोदिना. क. 2 °जनासना. ब, फ, ड, प.

**नाशनाजनना शोकविरामाय न मानया ॥ ७७ ॥**

**॥ इति यमकचक्रम् ॥**

**वर्णानामेकरूपत्वं यत्त्वेकान्तरमर्धयोः ।**

अधीनानि स्वाधीनानि यस्याः ताम् । अथवा उदारशतानां या आधयः मनोव्यथाः तेषां इना स्वामिनी । सौन्दर्यादिभिः स्वेच्छं तान् पीडयन्तीत्यर्थः । एतादृशीं यां सौन्दर्यगुणशालिनीमहं आयाम् पूर्वं संगतवान् अस्मि । आङ्पूर्वकस्य याधातोः लङ् उत्तमपुरुषैकवचनम् । तथा या अमुया सद्योवर्तमानया । शरदा शरदृतुना । अधीता आक्रान्ता । शरत्सौन्दर्येण सोत्सुका इत्यर्थः । सा नायिका । याने कामिसार्थविजयप्रयाणे यः मानः अभिमानः तं यातीति यानमानयः । एतादृशः यो मारः मदनः स एव अविः मेषः तस्य कशा ताडिनी । कामिजनजयोत्सुकस्य मदनस्य स्वाधीनत्वविधायिकेत्यर्थः । तथा ऊनानजनाशना ऊनः न्यूनः अनः प्राणः । सामर्थ्यमिति यावत् । येषां ते ऊनानाः स्वल्पसामर्थ्यवन्तः । एतादृशाः ये जनाः तान् अश्नाति सर्वस्वापहारेण उपभुङ्क्ते सा ऊनानजनाशना । अल्पसामर्थ्यानां सर्वतो विनाशिका । आयमनादिसा आयमनं आयमः इन्द्रियनिग्रहः । स आदिर्येषां तानि यमनियमादीनि समाधेरष्टाङ्गानि तानि स्यति नाशयति इति आयमनादिसा । षोन्तकर्मणि इत्यस्य पचाद्यचि टापि रूपम् । सौन्दर्येण योगिनामपि समाध्यादिसाधनविनाशिका । दिनामयमा दिनमामयं रोगमिव मिमीते जानातीति दिनामयमा । रात्रिविलासोत्सुकत्वाद्दिनं कष्टेन यापयतीत्यर्थः । अयामा अयं शुभावहविधिम् अमति गच्छतीति अयामा । सौभाग्यशालिनीत्यर्थः । नाशनं कामिजनानां विनाशमाजनयति इति नाशनाजनना । मानं सत्कारं यातीति मानया । एतादृशी सा शोकविरामाय शोकोच्छित्तये । न इति न । अपि तु स्यादेवेति भावः । तत्समागमेन शोको नश्यत्येवेति तात्पर्यम् । एतादृशी महामहिमशालिनी सा वर्तते । अत्रापि टीकाकारैः प्रदर्शिताः सन्ति विविधाः अर्थाः अस्मद्भिन्नाः । तत्र युक्तायुक्तविचारे सहृदयाः प्रमाणमित्यलं प्रपञ्चितेन ॥ ७६ ॥ ७७ ॥

एवं दुष्करान् यमकालंकारान् निरूप्य दुष्करान् चित्रालंकारान् विवृर्षुः प्रथमं अर्धगोमूत्रिकाबन्धं लक्षयति—**वर्णानामिति** । अर्धयोः पूर्वार्धोत्तरार्धयोः

---

१ नासना. ब, क, ड, प. २ यद्येका°. अ, क.

**गोमूत्रिकेति तत्[1] प्राहुर्दुष्करं तद्विदो यथा ॥ ७८ ॥**

**मदनो मदिराक्षीणामपाङ्गास्त्रो[2] जयेदयम् ।**

३ऊर्ध्वाधः क्रमेण लिखितयोः। वर्णानाम् अक्षराणाम्। एकान्तरम्। एकवर्णव्यवहितम्। यत् एकरूपत्वम् समानाक्षरत्वेनाभिन्नत्वम्। तत् तादृशवर्णरचनम्। तद्विदः चित्रालंकारज्ञाः। गोमूत्रिका इति प्राहुः गोमूत्रिका इति संज्ञया व्याजह्रुः इत्यर्थः। ६चलतः गोर्मूत्रस्य धारा भूमौ ऊर्ध्वाधः क्रमेण बहुकोणयुता यादृशी दृश्यते तादृशी लेखाकृतिर्विरचिता चेत् तत्र पूर्वोत्तरार्धयोः समानाक्षरणां स्थितिः प्रतिकोणं दृश्यते। अतः गोमूत्रिकेति संज्ञया व्यवहारः। अत्र तुशब्दः पूर्वप्रक्रान्त-९यमकालंकारभेदप्रदर्शनाय। दुष्करं साधारणकविना निबद्धुमशक्यम्। गोमूत्रिकायास्त्रैविध्यं वर्तते। पादगोमूत्रिका अर्धगोमूत्रिका श्लोकगोमूत्रिका चेति। तत्रेदं लक्षणमर्धगोमूत्रिकाया इति बोद्धव्यम्। यत्र तु चतुःपङ्क्तिषु चतुःपादान् १२विलिख्य अर्धगोमूत्रिकाप्रकारेणैव एकान्तरितं समानाक्षरत्वं पादद्वयस्य तत्र पादगोमूत्रिका। यत्र तु श्लोकद्वयेनैवंरीत्या पूर्वोत्तरश्लोकयोः एकान्तरिताक्षरसाम्यं तत्र श्लोकगोमूत्रिका इति ज्ञेयम् ॥ ७८ ॥

अर्धगोमूत्रिकामुदाहरति—**मदनो इति**। अयं मदनः मदिराक्षीणां मदिरेव उन्मादजनके आरक्ते वा अक्षिणी यासां ताः तासाम्। अपाङ्गः नेत्र-३प्रान्तः। नेत्रप्रान्तेन विलोकनमित्यर्थः। स एव अस्त्रं यस्य एतादृशः सन्। यदि जयेत् मामात्मवशं कुर्यात्। तत् तदा। मदेनः मम पातकम्। क्षीणं इति कल्पये। मदिराक्षीविलोकनेन मम पातकं नष्टं इति मन्ये इत्यर्थः। अतः अनङ्गाय ६अञ्जलिं नमस्काराञ्जलिं ददे। प्रणमामीत्यर्थः। विलासिनीभिः कटाक्षेणाभिहतश्चेदहं कृतार्थो भवामीत्यर्थः। अत्र पूर्वार्धोत्तरार्धविषमवर्णानामेकरूपत्वम्। तत्र पठनप्रकारस्तु श्लोकोत्तरार्धस्थप्रथमाक्षरमारभ्य पूर्वार्धस्थद्वितीयाक्षरमुत्तरार्धस्थ-९तृतीयाक्षरं पुनः पूर्वार्धस्थचतुर्थाक्षरम् एवमूर्ध्वाधःस्थकोणस्थिताक्षरे पठनेन पूर्वार्धसिद्धिः। तथैव पूर्वार्धप्रथमाक्षरमारभ्य पूर्वोक्तक्रमेणैव पठने उत्तरार्धसिद्धिः। अत्र विषमवर्णानामेकरूपत्वम्। यत्र तु समवर्णानामेकरूपत्वं तत्र पूर्वार्धप्रथमा-१२क्षरमारभ्यैव पूर्वक्रमेण पठने पूर्वार्धसिद्धिः। उत्तरार्धप्रथमाक्षरमारभ्य पूर्ववत् पाठे उत्तरार्धसिद्धिः। यथा—

---

१ तम्. बपा. २ पाङ्गास्त्रं. क.

म द नो म दि श क्षी णा म पा ङ्गा स्त्रो ज ये द यम् ।

म दे नो य दि तत् क्षी ण म न ङ्गा यात्र् ज लिं द दे ॥ ॥७९॥

॥ गोमूत्रिका ॥

| म | नो | भ | व | त | वा | नी | कं |
|---|---|---|---|---|---|---|---|
| नो | द | या | य | न | मा | नि | नी |
| भ | या | द | मे | या | मा | मा | वा |
| व | य | मे | नो | म | या | न | त |
| त | न | या | म | नो | मे | य | व |
| वा | मा | मा | या | मे | द | या | भ |
| नी | नि | मा | न | य | या | द | नो |
| कं | नी | वा | त | व | भ | नो | म |

॥ अर्धभ्रमः ॥ ॥८१॥

| सा | मा | या | मा | मा | या | मा | सा |
|---|---|---|---|---|---|---|---|
| मा | रा | ना | या | या | ना | रा | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | या | रा | मा | मा | रा | या | मा |
| मा | या | रा | मा | मा | रा | या | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | रा | ना | या | या | ना | रा | मा |
| सा | मा | या | मा | मा | या | मा | सा |

॥ सर्वतो भद्रम् ॥ ॥८२॥

अ रा शु चा व शी वि घ्नि

ज म भा र लि ल नो ता

भु ङ्ग नि सा क का ज चि

टीका पृ. ३५३

कां न्पु म न स्त पी ता

क्ष लो त या न डि नि

व स्थ च्छि र ञ्च पी ता

पा द य य न चि हा

या पा भ तो भु प्र री

मा म स्य व म्बु चां सा

टीका पृ. ३५३

पा द्ध -द्र री क सु शि ली पा र -दो

या श्च धा स ल र रो ढ दा बि

दे न्न ण्ड मा लि ह क रू कं र -दो

दे व्या द्दा भा पु द ज ब न वि धा

हे रु ङ्ग ग: र नु द स्त्या सं ल्लि नम्

ग्म रा सु म ज मं ग प धा

कं र्प द क्षः र सु व म ली त र्वौ

द क्षो द स स र ध ण्ड गी ग

मं दिक् म श्रीः द द व रव ना र म्यो

त्या शा के न च ण रवः क भ भा

दै धी -ध ना त र न शं रो ॰य ॰यः

त्यै ब हा व त स यः प दि से

टीका पृ. ३५३

॥ मदेनो यदि तत्क्षीणमनङ्गायाञ्जलिं ददे ॥ ७९ ॥
प्राहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।

अजरामशुभाचारबलिशीलविनोचिता ।
१५ भुजङ्गमनिभासारकलिकालजनोचिता ॥

इति । अत्र द्वितीयादिसमवर्णानामेकरूपत्वम् । इयमर्धगोमूत्रिका । पादगोमूत्रिका यथा—

१८ काङ्क्षन् पुलोमतनयास्तनताडितानि
वक्षःस्थलोत्थितरयाञ्चनपीडितानि
पायादपायभयतो नमुचिप्रहारी
२१ मायामपास्य भवतोम्बुमुचां प्रसारी ॥

इति । अत्र पङ्क्तिचतुष्टयेन श्लोको लेख्यः । तत्र प्रथमद्वितीयपादयोः अर्धगोमूत्रिकावदक्षरपाठे द्वितीयप्रथमपादसिद्धिः । एवमेव उत्तरार्धेपि । श्लोकगोमूत्रिका २४यथा—

पायाद्वश्चन्द्रधारी सकलसुरशिरोलीढपादारविन्दो
देव्याः रुद्धाङ्गभागः पुरदनुजदवस्त्यानसंविन्निधानम् ।
२७ कन्दर्पक्षोददक्षः सरससुरवधूमण्डलीगीतगर्वो
दैत्याधीशान्धकेनानतचरणनखः शंकरो भव्यमान्यः ॥

इति प्रथमश्लोकः । द्वितीयो यथा—

३० देयान्नश्चण्डधामा सलिलहरकरो रूढकन्दारविन्दो
देहे रुग्भङ्गरागः सुरमनुजदमं त्यागसंपन्निधानम् ।
भन्दं दिक्क्षोभदश्रीः सदसदरवधूखण्डनागीरगम्यो-
३३ दैत्यैधी बन्धहानावततरसनयः शंपरो दिव्यसेव्यः ॥

इति । अस्या बहुविधः प्रपञ्चः सरस्वतीकण्ठाभरणादिषु द्रष्टव्यः ॥ ७९ ॥

अथ अर्धभ्रमं सर्वतोभद्रं च निरूपयति—**प्राहुरिति** । यदि श्लोकार्धभ्रमणं श्लोकस्य श्लोकपादानामिति भावः । अर्धभ्रमणं अर्धेण मार्गेण । अनुलोमे-

---

१ च क्षीणम्. अ. २ दधे. अ, क. ३ आहुर्. अ, क.

तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥ ८० ॥

मनोभव[1] तवानीकं
नोदयाय न मानिनी ।
भयादमेयामा मा वा
वयमेनोमया नत ॥ ८१ ॥

३नेति भावः । भ्रमणं भ्रमणेन पादोपस्थितिस्तदा अर्धभ्रमं नाम चित्रम् आहुः । कवय इति शेषः । यदि सर्वतः अनुलोमप्रतिलोमाभ्यां श्लोकपादानां भ्रमणं तदा तत् सर्वतोभद्रमिष्टम् अङ्गीकृतमित्यर्थः । अर्थात् कविभिः । अत्र विन्यास-६प्रकारः प्रेमचन्द्रादिभिर्दर्शितः स्फुट इति स एव निदर्श्यते । ते चाहुः—बन्ध-द्वयमिदं प्रायेण अष्टाक्षरवृत्तविशेषविषयम् । तत्र संनिवेशप्रकारः । चतुष्षष्टि-कोष्टात्मकेस्मिन् बन्धे क्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्टयं लेख्यम् । अनन्तरं ९चाधःस्थपङ्क्तिचतुष्टये चतुर्थतृतीयद्वितीयप्रथमपादा लेख्याः । तत्रार्धभ्रमे अधःस्थ-पङ्क्तिचतुष्टये परावृत्त्या सर्वतोभद्रे परावृत्त्या समावृत्त्या वा चतुर्थादिपादलिखन-मिति विशेषः । तत्रोद्धारक्रमस्तु अर्धभ्रमे ऊर्ध्वपङ्क्तौ वामाद्दक्षिणतः । अधःपङ्क्तौ १२दक्षिणाद्वामतः । एवं वामस्थोर्ध्वकोष्टादधःक्रमेण दक्षिणस्थाधःकोष्टादूर्ध्वक्रमेण च अनुलोमोच्चारणेन प्रथमादिपादोत्थानम् । सर्वतोभद्रे तु वामाद्दक्षिणतः दक्षिणाद्वामतः ऊर्ध्वादधस्तः अधस्तादूर्ध्वतश्चानुलोमविलोमाभ्यां सर्वतः आवर्तनेन १५पादानामुत्थानमिति ॥ ८० ॥

अर्धभ्रममुदाहरति—**मनोभवेति** । हे नत कामिजननमस्कृत । मनोभव मदन । तव अनीकं सैन्यभूता । मानिनी नायिका । उदयाय अभ्युदयाय । न इति ३न । अपि तु उदयायैव अस्तीति भावः । ननु विजयिनः सैन्यं सापराधस्य दण्ड-विधायकं किं त्वं सापराधोसि इति प्रश्नमुन्नीयाह—**भयादिति** । वयं एनोमया पापिनः । कृतापराधा इत्यर्थः । मा वा मैव । अत्र वा एवार्थे । वा समुच्चय एवार्थे ६उपमानविकल्पयोः । इति हेमचन्द्रः । वयं नैवापराधिनः । परं तु भयात् मानिनी-सेनाभयात् । अमेयामाः अमेयः अपरिमितः आमः पीडा येषाम् । तथा स्म इति भावः । इमां तव सेनाभूतां मानिनीं । मद्वशां कुरु । ततो निर्भीकोहं सुखेन ९स्थास्यामीति प्रार्थना ॥ ८१ ॥

---

१ मानोभव. ब.

**सामायामा माया मासा**
**मारानायायाना रामा ।**
**यानावारारावानाया**
**मायारामा मारायामा ॥ ८२ ॥**

**यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।**
**इष्टश्चतुःप्रभृत्येष[1] दर्श्यते[2] सुकरः परः ॥ ८३ ॥**

सर्वतोभद्रमुदाहरति—**सामायेति** । कश्चिद्विरही स्वविषमामवस्थां वर्णयति । अत्र पदच्छेदः । सा आमायामा मायाः मासा । मारानायायाना रामा । यानावारा-३रावानाया । मायारामा माराय अमा । अन्वयार्थः—आमायामा आमयस्य विरह-ज्वरस्य आयामः दैर्घ्यं यस्या सा आमायामा । प्रभूतविरहज्वरेण संतापिकेत्यर्थः । मायाः लक्ष्म्याः पञ्चम्यन्तमेतत् । रामा मनोहरा । मारानायायाना मारं मदन-६मानयति उत्पादयति इति मारानायं मदनोत्पादकम् आयानमागमनं यस्याः सा मारानायायाना । स्वागमनेन मदनवृद्धिकारिणी । यानावारारावानाया यात्यनेनेति यानं पादः तं आवृणोति वेष्टयति इति यानावारः नूपूरः तस्य आरावः मञ्जुलध्वनिः ९एव आनायः कामिजनबन्धकं जालकं यस्याः सा यानावारारावानाया । माया-रामा शाम्बरीवनिता । माया स्याच्छाम्बरीधियोः । इति विश्वः । अतिविचित्र-मनोहररूपेत्यर्थः । एतादृशी सा रमणी मासा चन्द्रेण । मास्तु मासे निशाकरे । १२इति हेमचन्द्रः । अमा सह । माराय मे विनाशाय । अस्ति इति शेषः । एवं खड्ग-पद्ममुरजमुसलबन्धादयोः शब्दालंकारा मनोहराः सन्ति । परं ते नैतावन्तः क्लिष्टाः अतोत्र न निर्दिष्टाः । ते तु प्रबन्धान्तरतो ज्ञेयाः ॥ ८२ ॥

अथ स्वरस्थानवर्णनियमेन वैचित्र्यमावहतः शब्दालंकारान् दिदर्शयिषु-राह—**यः स्वरस्थानेति** । स्वराः अकारादयः स्थानानि कण्ठादीनि लक्षणया ३तद्भवा वर्णा ग्राह्याः । वर्णाश्च व्यञ्जनानि तेषाम् स्वरस्थानवर्णानाम् । यः नियमः अन्यनिवर्तनेनोपात्तानाम् । चतुर्भिरेव स्वरादिभिः ग्रथनमितिभावः । असौ एतत्स्व-रूपः अलंकारः । दुष्करेषु दुर्घटेषु मध्ये । इष्टः प्राचीनानामभिमतः । चित्रालंकारेषु ६प्राचीनैः स्वीकृत इत्यर्थः । एषः चतुःप्रभृति चतुरादि । अत्र प्रभृति शब्दः न्यूनसंख्योन्मुख इति ज्ञेयम् । तेन चतुः स्वरः त्रिस्वरः द्विस्वरः एकस्वरः तथा

---

१ °प्रभृत्येषु. क. २ दृश्यते. अ.

**आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।**
**भोगो रोगो मोदो मोहो ध्येये[1] वेच्छेद्देशे[2] क्षेमे ॥ ८४ ॥**
**क्षितिविजितिस्थितिविहितिव्रतरतयः परमतयः[3] ।**
**उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥ ८५ ॥**

चतुःस्थानः त्रिस्थानः द्विस्थानः एकस्थानः तथा चतुर्वर्णः त्रिवर्णः द्विवर्णः एकवर्णः इति प्रभेदाः ग्राह्याः । एतादृशः दर्श्यते उदाहरणेन स्पष्टीक्रियते । परः पञ्च-षडादिनियमस्तु । सुकरः सुलभः । अतस्तद्दर्शनाय नैव प्रयस्यते इति भावः ॥८३

तत्र चतुःस्वरनियममुदाहरति—**आम्नायानेति** । कश्चित् तत्त्वज्ञः शिष्याननुशास्ति । आम्नायानां अन्त्या शिरस्कभूता । वाग् उपनिषद्रूपा वाणी । गीतीः गानानि । ईतीः—अतिवृष्टिरनावृष्टिः—इत्यादिरूपान् उपप्लवान् । आह । मोक्षमार्गे गीतानि ईतिवत् परिहार्याणि इति भावः । अथवा मोहकत्वात् ईति-वत् मोक्षफलविघातकानि तानीत्यर्थः । प्रीतीः पुत्रदारगृहादिषु प्रीतीः प्रेमाणि । भीतीः भयस्वरूपाः । यथा क्षेत्रे सस्यानां वराहादयः श्वापदाः भीतिस्वरूपाः तथात्र मोक्षफले प्रीतिः भीतिस्वरूपा । संसारप्रीतेर्मोक्षो नश्यतीति भावः । भोगः विषयोपभोगाः । रोगः मोक्षफलस्य रोगः । विषयिणो मोक्षो दुर्घटः इति भावः । अत्र इतिशब्दोध्याहार्यः । सा च इत्याह इति योजना । मोदो विषयानन्दः । मोहः मोक्षफलभ्रंशकचित्तवैक्लव्यम् । तस्मात् क्षेमे समाध्यनुकूले निरुपद्रवे । देशे पुण्यभूमौ । ध्येये ध्यातुं योग्ये श्रीहरिचरणे । इच्छेत् अभिलषेत् । एकान्ते पुण्यप्रदेशे अरविन्दनाभपादारविन्दयुगलं चिन्तयेदित्यर्थः । वाशब्दो एवार्थे । अथवा ध्येये ध्यातुं योग्ये परमेश्वरे परमेश्वरविषये इत्यर्थः । इच्छेत् इच्छां कुर्यात् । परमेश्वरं चिन्तयेदित्यर्थः ॥ अत्र आ—ई—ओ—ए इति चत्वार एव स्वरा निबद्धाः । वृत्तं विद्युन्माला ॥ ८४ ॥

त्रिस्वरनियममुदाहरति—**क्षितीति** । क्षितेर्विजितिः विजयः स्थितेः धर्ममर्यादायाः विहितिः विधानम् एतदुभयरूपं यत् व्रतम् नियमानुष्ठेयं कृत्यं तत्र रतिः प्रेमा येषां ते क्षितिविजितिस्थितिविहितिव्रतरतयः । अत एव परा उत्कृष्टा मतिर्येषां ते परमतयः । परगतयः इति पाठे परा गतिः ज्ञानं येषां ते ।

---

१ धेये. क. २ ध्येच्छे देशे. ब, ड, प.; धेच्छे. बपा.; वेच्छे देशे. क. ३ °गतयः ब, ड, प.

श्रीदीप्ती ह्रीकीर्ती धीनीती गीःप्रीती ।
एधेते[1] द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥

सामायामा माया मासा
मारानायायाना रामा ।
यानावारारावानाया
मायारामा मारायामा ॥ ८७ ॥

नयनानन्दजनने नक्षत्रगणशालिनि[2] ।
अघने गगने दृष्टिरङ्गने दीयतां सकृत् ॥ ८८ ॥

एतादृशाः । कुरवः पाण्डवाः । युधि समरे । उरु विशालम् । स्वं स्वीयम् । अरिकुलं ६दुर्योधनप्रभृतिरिपुकुलम् । रुरुधुः सर्वतो निरोधयामासुः । तथा गुरु यथा स्यात् तथा । सातिशयमित्यर्थः । दुधुवुः कम्पयामासुः । अत्र इ–अ–उ–इति त्रयः स्वरा निबद्धाः । त्वरितगतिर्वृत्तम् ॥ ८५ ॥

द्विस्वरं दर्शयति— **श्रीदीप्ती इति** । कश्चित् सत्पुरुषः स्तूयते । ये द्वे द्वे इमे श्रीदीप्त्यादी । देवेशे महेन्द्रे । अपि न विद्येते ते त्वयि एधेते वृद्धिं ३प्राप्नुतः । के ते श्रीः लक्ष्मीः दीप्तिः शोभा । ह्रीः लज्जा शालीनतेति यावत् । कीर्तिः यशः । धीः बुद्धिः नीतिः नयः । गीः वाणी । वाग्मित्वमिति भावः । प्रीतिः संतोषश्च । अत्र इ-ए-स्वरौ निबद्धौ । वृत्तं वाणी ॥ ८६ ॥

एकस्वरमुदाहरति— **सामायेति** । अयं श्लोकः सर्वतोभद्रोदाहरणत्वेन पूर्वत्रैव व्याख्यातः । अत्र आ-इति एक एव स्वरो निबद्धः ॥ ८७ ॥

अथ स्थाननियमे चतुःस्थानमुदाहरति— **नयनानन्देति** । अङ्गने सुन्दरि । नयनयोः आनन्दं जनयति तस्मिन् नयनानन्दजनने । दृष्टिमोहके इत्यर्थः। ३नक्षत्राणां गणैः सङ्घैः शलते शोभते तस्मिन् नक्षत्रगणशालिनि । अघने घनशून्ये । गगने वियति । सकृत् एकवारम् । दृष्टिः दीयताम् अवलोकयेत्यर्थः । अनया प्रार्थनया एतादृशगगनविलोकनेन सोत्सुका गलितमाना मामियमासेविष्यते इति ६नायकाभिप्रायः सूच्यते । अत्रौष्ठ्यभिन्नस्थानीयाः सर्वे वर्णाः निवेशिता इति चतुःस्थाननियमितमिदं पद्यम् ॥ ८८ ॥

---

१ एवैते. अ. २ चन्द्रनक्षत्रमायिनि. अ.

**अलिनीलालकलतं[1] कं न हन्ति घनस्तनि ।**
**आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ८९ ॥**
**अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना ।**
**सदानघ सदानन्द[2] नताङ्गासङ्गसङ्गत[3] ॥ ९० ॥**
**अगा गाङ्गाङ्गकाकाकगाहकाघककाकहा ।**

त्रिस्थानमाह—**अलिनीलेति** । हे घनस्तनि कठिनकुचे । अलिवत् भ्रमरवत् नीलाः ये अलका ते एव लता सर्वतो व्यापनेन लतासदृशा यत्र तत् । नलिनानि कमलानि तेषां छायेव च्छाया शोभा ययोः एतादृशे नयने यस्मिन् तत् । शशिवत् कान्तिः यस्य तत् । ते तव । आननं कं न हन्ति मदनपीडया व्याकुलयति । सर्वमपि पीडयतीत्यर्थः । अत्र कण्ठ्यदन्त्यतालव्यैर्निबन्धनम् ॥८९

द्विस्थानमुदाहरति—**अनङ्गेति** । काचित् दूती नायकं प्रियासंगमाय प्रार्थयते । हे सदा अनघ निर्दोष । सदाचरणशील इत्यर्थः । तथा सदानन्द सतां आनन्दो यस्मात् तादृश । हे सत्प्रियेत्यर्थः । नतानि प्रश्रयेण नम्राणि अङ्गानि यस्य तत्संबुद्धिः नताङ्ग । असङ्गाः विषयेष्वनासक्ता ये सत्पुरुषाः तेषु सङ्गत संसक्त । (सा) सदङ्गना सती चासौ अङ्गना च सुस्वरूपा सदाचरणशीला वा तव नायिका । अनङ्गस्य मदनस्य लङ्घनम् अतिक्रमणम् । अनुपसेवनमित्यर्थः । तेन लग्नाः संसक्ता नाना विविधा आतङ्का पीडा यस्याः सा । विविधमदनयातना अनुभवन्तीत्यर्थः । अस्ति । अतस्तया संगत्य तत्पीडामपनयेत्यर्थः । अत्र कण्ठ्यदन्त्यवर्णैरेव प्रबन्धनमस्ति ॥ ९० ॥

एकस्थानमुदाहरति—**अगा इति** । अत्र पदच्छेदः—अगाः गाम् गाङ्गकाकाकगाहक अघककाकहा । अहाहाङ्क ( ङ्ग ) खगाङ्कागकङ्क अगखगकाकक अन्वयार्थः—हे गाङ्गकाकाकगाहक । गङ्गाया इदं गाङ्गं गाङ्गं च तत् कं जलं गाङ्गकम् । आकायति शब्दं करोतीत्याकाः । कै गै शब्दे इत्यस्मात् आङ्पूर्वकात् कर्तरि क्विप् । तथा अकति कुटिलं गच्छतीति अकः । पचाद्यच् । आकश्चासौ अकश्च आकाकः । सशब्दतिर्यग्गामी । गाङ्गकस्य गङ्गाजलप्रवाहस्य आकाकः

---

१ °युतं. कपा. २ °नन्दिन्नताङ्ग°. अ. ३ °संगतः. ब, ड, प.

॥ अहाहाङ्क[1] खगाङ्कागकङ्कागखगकाकक[2] ॥ ९१ ॥
रे रे रोरूरुरूरोरुगागोगोगाङ्गगॉगगुः[3] ।

सशब्दतिर्यक्प्रवाहः गाङ्गकाकाकः तस्य गाहक गङ्गाप्रवाहस्नायिन्नित्यर्थः । तत्संबोधनं गाङ्गकाकाकगाहक । तथा अहाहाङ्क हा हा इति दुःखसूचकः ९शब्दः अङ्कः चिह्नं यस्य स हाहाङ्कः । संसारतापत्रस्तः इत्यर्थः । तथा न भवति इति अहाहाङ्कः । तत्संबुद्धिः अहाहाङ्क । संसारतापशून्य । अहाहाङ्ग इति पाठे हानं हाः क्विप् । न हाः विनाशः अहाः । तं अविनाशं जिहीते गच्छति इति १२अहाहा अविनश्वरमित्यर्थः । तादृशमङ्गं यस्य तत्संबुद्धिः अहाहाङ्ग । अविनाशिस्वरूप इत्यर्थः । खे गच्छति इति खगः सूर्यः । स अङ्कः चिह्नं यस्य स खगाङ्कः । खगाङ्कश्चासौ अगः पर्वतः मेरुपर्वतः उदयाचलो वा । तत्र कङ्कति १५गच्छति इति खगाङ्कागकङ्कः । मेरुपर्वते उदयाचले वा गमनसमर्थ । ककि वकि श्वकि इत्यादयो गत्यर्थाः तस्मात् पचाद्यच् । पुनः अगखगकाकक अगन्ति कुटिलं गच्छन्तीति अगानि तानि च खानि इन्द्रियाणि । अक १८अग कुटिलायां गतौ—इत्यस्मात् पचाद्यच् । तानि गच्छन्ति इति अगखगाः कुटिलेंद्रियपरवशाः । कुत्सिताः अगखगाः अगखगकाः । कुत्सार्थे कन् । कको लोलः । कक लौल्ये इत्यस्मात् अच् । न ककः अककः अलोल इत्यर्थः । अग-२१खगकेषु अककः अगखगकाककः तत्संबुद्धिः अगखगकाकक । कुत्सितेन्द्रियपरवशाननुरक्त । त्वं अघककाकहा कुत्सितं अघं अघकं तदेव काकः तं जहातीति अघककाकहा । एतादृशः सन् गां स्वर्गम् अगाः गमिष्यसि । इणो लुङि रूपम् । २४इणो गा लुङि इति गादेशः । आशंसायां भूतवच्च इति भविष्यति लुङ् । अत्र कण्ठ्यैरेव वर्णैर्बन्धरचना ॥ ९१ ॥

अथ वर्णनियमे चतुर्वर्णं दर्शयति—रे रे इति । तत्र तावत् पदच्छेदः- रे रे रोरूरुरूरोरुगागोगः अगाङ्गगागुः । किं केकाकाकुकः काकः मा मां ३आम अममामम । अन्वयार्थः—कश्चिद्व्याधं निन्दन् तत्संसर्गं परिहरति । रे रे इत्यनादरे । रोषावेशात् द्विरुक्तिः । अममामम नास्ति मम ममत्वं येषां ते अममाः । मम इति भावप्रधानो निर्देशः । ममत्वशून्याः सर्वत्र समबुद्धयः साधव इत्यर्थः ।

---

१ अहाहाङ्ग. ब, क, ड, प.   २ °काङ्का ग°. कपा.
३ °काककः क, °काकुकः कपा.   ४ °गोगगुः ब, क, ड, प.

किं केकाकाकुकः काको मा[1] मामामाममामम ॥ ९२ ॥
देवानां नन्दनो देवो नोदनो वेदनिन्दिनाम्[2] ।
दिवं दुदाव[3] नादेन दाने दानवनन्दिनः[4] ॥ ९३ ॥

६तेषां आमं निर्घृणाचरणेन खेदं मयते प्रणिददाति इति तत्संबुद्धिः अममामम । निर्घृणाचरणेन सत्पुरुषदुःखद । मेङ् प्रणिदाने इत्यस्मात् आतोनुपसर्गे कः इति कः । रोरूरुरूरोरुगागोगः रोरूयते इति रोरूः यङन्तात् क्विप् । रोरू-९श्चासौ रुरुश्च चित्रमृगः रोरूरुरुः पुनः पुनः शब्दकारी चित्रमृगः तस्य उरसः वक्षसः रुक् पीडा । शरवेधजनितेत्यर्थः । सा एव आगः अपराधः तं गच्छतीति रोरूरुरूरोरुगागोगः । मृगहत्याविधायक इत्यर्थः । अगाङ्गगागगुः अगस्य १२पर्वतस्य अङ्गं अधित्यकां गच्छन्ति इति अगाङ्गगाः । पर्वतोपरि वर्तमाना इत्यर्थः । ते च ते अगाः वृक्षाः अगाङ्गगागाः तेषु गावो यस्य स अगाङ्गगागगुः । पर्वतो-परिप्रदेशस्थवृक्षाधःस्थितधेनुक इत्यर्थः । अगाङ्गगोगगुः इति पाठे पदद्वयं १५अगाङ्गगः अगगुः इति । अगा वृक्षाः तस्य अङ्गानि अवयवा त्वक्पुष्पफलादयः तानि गच्छति सेवनार्थमिति अगाङ्गगः वृक्षत्वक्पुष्पफलोपभोगीत्यर्थः । तथा अगगुः अगे पर्वते गौः दृष्टिः यस्य सः । मृगयार्थं नगासक्तदृष्टिरित्यर्थः । ईदृशस्त्वं १८मां मा आम मा आगच्छ । त्वत्संपर्कं मा विधेहि इत्यर्थः । दृष्टान्तेनामुमर्थं विशदयति । किमिति प्रश्ने । काकः वायसः । केकाकाकुकः केका मयूरवाणी काकुः मदसूचकध्वनिविशेषः यस्य सः केकाकाकुकः । शेषाद्विभाषा इति २१कप् । भवतीति शेषः । यथा काकः मदेन आरावं कुर्वन्नपि केकासौभाग्यं न लभते तथा भवान् महता परिश्रमेणापि अस्माकं सङ्गं न लभते इति भावः । अत्रापि विविधा अर्थाः टीकाकृद्भिः प्रदर्शिताः ते तत एव द्रष्टव्याः । चतुर्भिः २४र-ग-क-म इति वर्णैः निबन्धनाच्चतुर्वर्णनियमितचित्रम् । वर्णपदं च वृत्तपूरक-वर्णपरम् । तेन अङ्गेत्यत्र ङकाराधिक्येपि न दोषः । तस्य वृत्तपूरकत्वाभावात् ९२

त्रिवर्णमुदाहरति—**देवानामिति** । भगवतो नरसिंहस्य स्तुतिरियम् । देवानां इन्द्रादिदेवानां नन्दनः आह्लादकः । तथा वेदनिन्दिनाम् वेदान् निन्दन्ति ३कुतर्कैर्दूषयन्ति ते वेदनिन्दिनः असुरादयः तेषाम् । नोदनः निवारकः । देवो

---

१ मा मा मामम मामम. ब, ड, प.

२ देवनिन्दिनाम् कपा. ३ दानव°अ. ४ °नन्दिनः ब, क, ड, प.

सूरिः सुरासुरासारिसारः सारसंसारसाः[1] ।
ससार सरसीः सीरी[2] ससूरूः स सुरारसी ॥ ९४ ॥
नूनं नुन्नानि नानेन नाननेनाननानि नः ।
नानेना ननु नानूनेनैनेनानानिनो[3] निनीः ॥ ९५ ॥

॥ इति चित्रचक्रम् ॥

नरसिंहः । दानवः हिरण्यकशिपुः स एव दन्ती गजः तस्य । नन्दिनः इति पाठे दानवान् नन्दति आनन्दयतीति दानवनन्दी हिरण्यकशिपुः । तस्य दाने अवखण्डने । नादेन सिंहनादेन । दिवं आकाशम् । दुदाव तापयति स्म । टुदु उपतापे इत्यस्य लिटो रूपम् । अत्र द–व–न इति त्रिभिर्वर्णैरुपनिबन्धनम् इति त्रिवर्णता ॥ ९३ ॥

द्विवर्णमुदाहरति—**सूरिरिति** । बलदेवस्य सरोवगाहनवर्णनमिदम् । सः त्रिभुवनप्रथितः । सीरी बलदेवः । सूरिः पण्डितः । तथा सुरेषु असुरेषु च आसारी प्रसरणशीलं सारः बलं यस्य सः । देवदानवेषु अप्रतिहतप्रभाव इत्यर्थः । सुष्ठु उरू यस्याः सा सूरूः रेवती तया सहितः ससूरूः । तथा सुरारसी सुरायां मद्ये रसः प्रीतिरस्यास्तीति सुरारसी । सारससारसाः आरसेन शब्देन सहिताः सारसाः सशब्दाः सारसाः जलपक्षिणः यत्र ताः सारससारसाः । सरसीः ससार विहाराय जगाम । अत्र सकाररेफाभ्यां द्वाभ्यां वर्णाभ्यां निबन्धनमिति द्विवर्णता ॥९४॥

एकवर्णमुदाहरति—**नूनमिति** । तत्र तावत् पदानि—नूनं नुन्नानि न अनेन न अननेन अननानि नः । न अनेनाः ननु ना अनूनेन एनेन अनान् इनः निनीः ॥ अन्वयार्थः—कश्चित् शूरः प्रतिभटैः स्तूयते । अनेन प्रत्यक्षीभूतानुपमशौर्येण एतेन वीरेण कर्त्रा । अननेन स्वसामर्थ्येन हेतुभूतेन । नः अननानि सामर्थ्यानि । न नुन्नानि परिक्षिप्तानि । इति न । तर्हि नूनं नुन्नान्येव । अनेन वयं सर्वे सामर्थ्यशून्या विहिता इति भावः । अतः अनूनेन अधिकबलवता । एनेन वीरेण । अनान् बलवतः स्वीयपुरुषान् । निनीः नेतुमिच्छुः । सन्नन्तात् क्विप् । इनः स्वामी । ना पुरुषः । अस्माकं प्रभुः इत्यर्थः । अनेनाः निष्पापः निरपराधो । वा न । अपि तु सापराध एव । एतादृशवीरस्य पुरतः केवलं

१ सारस°. क. २ सीरो. अ, ब. ३ °नाननिनां. अ, क.

**इति दुष्करमार्गेपि कश्चिदादर्शितः क्रमः ।**
**प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ॥ ९६ ॥**
**क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।**
**परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ ९७ ॥**
**आहुः समागतां नाम गूढार्थां पदसंधिना ।**

स्वविनाशायैव पुरुषान् प्रणिणीषुः सापराध एवेति भावः । ननु इति निश्चये । अत्र केवलनकारेणैव रचना इति एकवर्णनियमः ॥ ९५ ॥

इदानीं दुष्करक्रममुपसंहरन् प्रहेलिकां प्रस्तौति—**इतीति** । इति एवंप्रकारेण । दुष्करमार्गे स्वरस्थानवर्णनियमरूपे । कश्चित् स्वल्पः । क्रमः प्रकारः । आदर्शितः । अन्ये क्रमस्थसर्वव्यञ्जनं छन्दोक्षरव्यञ्जनं मुरजाक्षरव्यञ्जनं दीर्घैकस्वरम् इत्यादयः तथा पद्ममुसलबन्धादयश्च रचनाविशेषा विस्तरभिया कविना नोल्लिखिताः सरस्वतीकण्ठाभरणादिग्रन्थेभ्योवगन्तव्याः । प्रहेलिकायाः ये प्रकाराः तेषाम् । गतिः लक्षणम् । उद्दिश्यते उद्देशपूर्वकं निवेद्यते । प्रहेलिका तु सा ज्ञेया वचः संवृतिकारि यत् । इति प्रहेलिकासामान्यलक्षणम् । अस्या विशेषप्रभेदानां लक्षणानि अग्रे स्फुटीकृतानि ग्रन्थकृता ॥ ९६ ॥

रसस्य परिपन्थित्वान्नालंकारः प्रहेलिका । इति रसपरिपन्थिभूतत्वात् प्रहेलिकाया नालंकारत्वं तर्हि तन्निरूपणं किमर्थमिति चेत् तस्याः उपयोगं दर्शयति—**क्रीडेति** । क्रीडार्थं या गोष्ठी सभा तत्र ये विनोदाः विचित्रवाग्व्यवहारैः प्रमोदाः तेषु । तथा तज्ज्ञैः प्रहेलिकाभिज्ञैः । आकीर्णे व्याप्ते समाजे यन्मन्त्रणं गुप्तभाषणं तस्मिन् । तथा परस्य बोद्धव्यपुरुषभिन्नस्य व्यामोहने अभिप्रेतार्थानवगमे च । प्रहेलिकाः सोपयोगाः उपयुक्ताः । सन्तीति भावः । यद्यपि शब्दालंकारादिरूपेणेयं न काव्योपयुक्ता तथापि विदुषां क्रीडागोष्ठीविनोदादिषूपयुक्तेति भावः॥ ९७ ॥

अस्याः प्रभेदानुद्दिशति— **आहुरिति** । पदसंधिना पदानां संधिः अतिशयसंनिधिः तन्निमित्तकेन कार्येण पदसंधिना हेतुना । गूढार्थां दुर्बोधार्थां

---

१ °मार्गस्य. अ. २ समाहिताम्. क.

वञ्चितान्यत्र रूढेन यत्र शब्देन वञ्चना ॥ ९८ ॥
व्युत्क्रान्तातिव्यवहितप्रयोगान्मोहकारिणी ।
सा स्यात् प्रमुषिता यस्यां दुर्बोधार्था पदावली ॥ ९९ ॥
समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः ।
परुषा लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः ॥ १०० ॥
संख्याता नाम संख्यानं यत्र व्यामोहकारणम् ।
अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता ॥ १०१ ॥

समागतां समागतसंज्ञकप्रहेलिकाम् । आहुः कथयन्ति । नामेति प्रसिद्धौ । तथा अन्यत्र विवक्षितार्थादन्यत्र । रूढेन प्रसिद्धेन । शब्देन यत्र वञ्चना प्रतारणा । सा वञ्चिताख्या प्रहेलिका । यत्र योगेन प्रकृतार्थोपस्थितिः परं रूढार्थेन वञ्चना योगार्थनिगूहनेन अन्यार्थावभासः सा वञ्चितेत्यर्थः ॥ ९८ ॥

**व्युत्क्रान्तेति** । अति अत्यन्तं व्यवहितानाम् असंबन्धिपदैर्व्यवहितानां संबन्धिपदानां प्रयोगात् मोहकारिणी अर्थावबोधक्लेशकारिणी । या सा व्युत्क्रान्ता प्रहेलिका । यस्यां पदावली दुर्बोधार्था प्रसिद्धिराहित्येन केवलयौगिकार्थबलेन अर्थस्योन्नयनात् दुर्बोधा दुःखेन बोध्या अर्था यस्याः सा । एतादृशी सा प्रमुषिता नाम प्रहेलिका । बुद्धेः प्रकर्षेण मोषणात् प्रमुषिता । वञ्चितायामेकं पदं दुर्बोधम् अत्र तु पदावलिः तथा । वञ्चितायां नानार्थकपदस्य अप्रसिद्धेऽर्थे प्रयोगः अत्र तु एकार्थान्येकाप्रसिद्धानि पदानि इत्युभयोः प्रभेदः ॥ ९९ ॥

**समानरूपेति** । गौणार्थैः आरोपितैः उपचारितैः । पदैः ग्रथिता गुम्फिता । समानरूपा सादृश्यनिबन्धनत्वादिति भावः । लक्षणस्य शास्त्रस्य अस्तित्वमात्रेण केवलशास्त्रसिद्धत्वेनेत्यर्थः । तत्रार्थे रूढिरस्ति वा नवेत्यविचार्य केवलशास्त्रमर्यादया अयमर्थो निष्पन्नो भवतीति कृत्वा व्युत्पादिता श्रुतिः शब्दो यत्र । तादृशी वाक् परुषा प्रहेलिका । पारुष्येणावबोधकत्वादिति भावः ॥ १०० ॥

**संख्यातेति** । यत्र संख्यानं वर्णगणना संख्यावाचकः शब्दो वा । व्यामोहकारणं अर्थबोधविषये विशेषमोहकारणम् । तत् संख्याता नाम प्रहेलिका । यत्र

---

१ वञ्चतम्. अ. २ °वलिः अ. ३ समानरूप°. क. ४ ग्रथितैः. अ.

सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना ।
निभृता निभृतान्यार्था तुल्यधर्मस्पृशा गिरा ॥ १०२ ॥
समानशब्दोपन्यस्तशब्दपर्यायसाधिता ।
संमूढा नाम या साक्षान्निर्दिष्टार्थापि मूढये[1] ॥ १०३ ॥
योगमालात्मिका[2] नाम या[3] स्यात् सा परिहारिका[4] ।
एकच्छन्नाश्रितं व्यक्तं यस्यामाश्रयगोपनम् ॥ १०४ ॥

वाक्यार्थः अन्यथा भासते आपाततः प्रतीयमानादर्थादन्यरूपः पर्यवसाने प्रतीयते । सा प्रकल्पिता प्रहेलिका ॥ १०१ ॥

**सेति** । यस्यां प्रहेलिकायाम् । नाम्नि संज्ञायाम् । नानार्थकल्पना नानार्थानां कल्पना विकल्पनम् । शब्दस्यानेकार्थत्वादिति भावः । सा नामान्तरेण अन्तरितार्थत्वान्नामान्तरिताख्या । तुल्यः समानः धर्मः तं स्पृशतीति तुल्यधर्मस्पृक् तया तुल्यधर्मस्पृशा । गिरा प्रकृताप्रकृतयोः साधारणधर्मप्रतिपादकया गिरेत्यर्थः । निभृतः निह्नुतः अन्यार्थः प्रकृतार्थः यया सा । निभृताख्या ॥ १०२ ॥

**समानेति** । उपन्यस्तानां श्लोके प्रयुक्तानां शब्दानां पर्यायः योजनाविशेषः तेन साधिता निष्पन्ना । समानशब्दा प्रहेलिका । तैरेव शब्दैः योजनाविशेषेण अर्थाविर्भावात् सा समानशब्दाख्या प्रहेलिकेत्यर्थः । साक्षात् वाचकशब्देन निर्दिष्टार्थापि उक्तार्थापि । या मूढये आपाततो मोहाय । भवति सा संमूढाख्या प्रहेलिका ॥ १०३ ॥

**योगेति** । योगानां यौगिकशब्दानां या माला परंपरा सैव आत्मा स्वरूपं यस्याः सा । यौगिकशब्दपरंपराभिः एकैकरूढशब्दार्थप्रतिपादिका इत्यर्थः । एतादृशी या रचना सा परिहारिका प्रहेलिका । हारो मुक्तामाला तां परिगता यौगिकपरंपरया इति परिहारिका । अथवा झटिति प्रकृतार्थबोधं परिहरति निवारयति इति परिहारिका । तथा यस्यां आश्रितं आधेयम् । एव व्यक्तम् । आश्रयस्य च गोपनम् । सा एकच्छन्ना एकः आश्रयः छन्नः गुप्तः यस्याम् इति एकच्छन्नाख्या प्रहेलिका ॥ १०४ ॥

---

१ मूढयोः. अ. २ °मालात्मकं. अ. बपा.
३ या स्यात् इत्यत्र यस्याः. बपा. ४ °हारिणी. अ; °हारिकी. कपा.

**सा भवेदुभयच्छन्ना यस्यामुभयगोपनम् ।**
**संकीर्णा नाम सा यस्यां नानालक्षणसंकरः ॥ १०५ ॥**
**एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः ।**
**दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश ॥ १०६ ॥**
**दोषानपरिसंख्येयान् मन्यमाना वयं पुनः ।**
**साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः ॥ १०७ ॥**
**न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।**

**सा भवेदिति** । यस्यां उभयगोपनम् आश्रिताश्रययोः गोपनं निगूहनम् । भवेत् । सा उभयच्छन्ना उभययोः आश्रिताश्रययोर्गोपनं यत्रेति व्युत्पत्त्या उभय-३च्छन्नसंज्ञकेत्यर्थः । यस्यां नानालक्षणानां समागतादिपञ्चदशप्रभेदानां संकरः साहित्येनावस्थानं सा संकीर्णा ज्ञेया ॥ १०५ ॥

**एता इति** । एताः पूर्वोक्ताः । पूर्वाचार्यैः षोडश प्रहेलिकाः निर्दिष्टाः । शुद्धसंकीर्णभेदेन षोडशत्वं बोध्यम् । शुद्धानां पञ्चदशत्वात् । तैरेव आचार्यैः ३अन्याः एताभ्यः शुद्धाभ्यः भिन्नाः । चतुर्दश दुष्टाः संदोषाः । च्युताक्षरादयः अधीताः कथिताः ॥ १०६ ॥

**दोषान् इति** । वयं दोषान् अत्यन्तशाब्दबोधप्रतिबन्धकरूपान् प्रहे-लिकादोषान् । असंख्येयान् संख्यातुमशक्यान् । मन्यमानाः न तान् दर्शयामः । ३केवलं साध्वीरेव दोषबाहुल्याभावेन चमत्कृतिपोषकत्वेन चालंकारतामापन्नाः । प्रहेलिकाः समागताद्याः षोडश । अभिधास्यामः उदाहरिष्यामः । तर्हि दुष्टाः कथं छात्रा जानीयुरिति चेत् तेषां सामान्यलक्षणमाह । यास्त्वलक्षणाः समा-६गतादिषोडशप्रहेलिकालक्षणशून्याः । ताः दुष्टाः बोद्धव्याः ॥ १०७ ॥

समागतामुदाहरति—**न मयेति** । अन्यत्र स्निग्धमात्मानं मत्वा रुदतीं गोपीं जनसमाजे कृष्णः सान्त्वयति । मया कृष्णेन गोरसाभिज्ञं गोरसः पयः ३तत्र अभिज्ञं ज्ञातास्वादम् । पयः अपहृत्य तत्पानाभिज्ञमित्यर्थः । चेतः न । कृतमिति उत्तानार्थयोजनार्थमध्याहार्यम् । तथा च त्वं कस्मात् प्रकुप्यसि । हे आलोहितेक्षणे कोपारक्तनयने । एभिः अस्थानरुदितैः अकारणरोदनैः । अलम् ।

**अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ १०८ ॥**
**कुब्जामासेवमानस्य यथा ते वर्धते रतिः ।**
**नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥ १०९ ॥**
**दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।**
**मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥ ११० ॥**
**खातयः कनि काले ते स्फातयः स्फार्हवल्गवः ।**

६मया पयोपहारः कृतः इति कल्पयित्वा मा रुदिहीत्यर्थः । इति आपाततोर्थः । अमुमेवार्थं स्वीकृत्योदासीनाः कृष्णेन दुग्धस्तेयं कृतं तदर्थं चैषा रोदिति इति मन्यन्तामिति प्रकृतार्थस्य संवरणकारिता । प्रकृतार्थस्तु मे मम । आगः अपराधः ९परवानितासंगरूपः तस्य रसे आस्वादे अभिज्ञं मार्मिकं एतादृशं चेतः । न नास्ति । मां अन्यत्रबद्धरतिं मत्वा मा कोपकलुषिता भवेत्यर्थः । अत्र मे आगोरसाभिज्ञम् इति पदच्छेदः । अत्र संधिकार्येणायादेशेन मयागोरसेति प्रयोगो निष्पन्नः । १२तेनैव च प्रकृतार्थस्य संवरणम् इति समागता प्रहेलिकेयम् ॥ १०८ ॥

वञ्चितामुदाहरति—**कुब्जामिति** । कुब्जां भग्नपृष्ठां नारीम् । आसेवमानस्य उपभुञ्जानस्य । यथा ते रतिः अनुरागः । वर्धते एवं अमरस्त्रीविडम्बिनीः सुराङ्गना-३सदृशीः । नारीः निर्विशतः आस्वादयतः । न रतिः रतिर्न वर्धते । इति आपात-तोर्थः । संवृत्तार्थस्तु कुब्जां कान्यकुब्जानगरीं तत्रस्थनारीं वा इति । अत्र कुब्जाशब्दः भग्नपृष्ठनार्यामेव रूढः विवक्षितायां नगर्यां तत्रत्यनार्यां वा न तथा ६उपक्रमं विना प्रतीतिकरः इति प्रकृतार्थस्य निपुणमतिबोध्यतया अत्र संवरणम् । इति वञ्चिता प्रहेलिका ॥ १०९ ॥

व्युत्क्रान्तामुदाहरति—**दण्डे इति** । कर्कशकण्टके तीक्ष्णकण्टकावृते । दण्डे पद्मिन्या नाले । अङ्गानि घट्टयन् घर्षयन् । वल्गुरवं मधुररवम् । कुर्वन् हंसः ३तुण्डेन स्वमुखेन । पद्मिन्याः मुखं कमलरूपम् । चुम्बति । अत्रान्वयबोधकारणस्य नामासत्तेः विशेषेण अतिक्रान्तत्वात् व्युत्क्रान्ता ॥ ११० ॥

प्रमुषितां दर्शयति—**खातय इति** । हे कनि कुमारि । कन्या कनी

---

१ °रुपितैर्. अ. २ °क्षणेः. अ.

चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः ॥ १११ ॥
अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा ।
पल्लवे पल्लवे ताम्रा यस्यां कुसुममञ्जरी ॥ ११२ ॥
सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा ।

कुमारी च इति । हेमचन्द्रः । ते तव । काल्यते क्षिप्यते यः सः कालः पादः तस्मिन् । ३कल विक्षेपे इति चौरादिकात् कर्मणि घञ् । स्फातयः । स्फायनं स्फाः वृद्धिः । तस्याः अतिः गमनं यत्र ते । स्फीता इत्यर्थः । प्रभूता इति यावत् । एतादृशाः खातयः खं आकाशम् । तस्यायं खः शब्दः । तस्येदम् इत्यण् । अतनं अतिः । ६भावे क्तिन् । खस्य अतिः गमनं येषु ते । शब्दकारिनूपुराद्यलंकारा इत्यर्थः । क्षुद्रघण्टिका इत्यन्ये । ते अलंकाराः स्फार्हवल्गवः स्फां स्फातताम् अर्हन्ति ते स्फार्हाः प्रभूताः । वल्गनात् चलनात् जाताः वल्गवः ध्वनयः । स्फार्हाः प्रभूताः ९वल्गवः चलनध्वनयः येषां ते स्फार्हवल्गवः । साक्षात् । भवन्ति इति शेषः । श्रोत्रेण प्रत्यक्षीक्रियन्ते इति भावः । क्रीदृशे तव पादे । चन्दति आह्लादयति इति चन्द्रः तस्मिन् चन्द्रे आह्लादके । ततश्च मम वायवः प्राणाः । धारिणः रुद्ध- १२चेष्टाः । धृङ् अवस्थाने तुदादिः तस्मात् णिनिः । भवन्ति । केचित्तु धृङ् अनवस्थाने इति धातुपाठं मन्वानाः धारिणः अनवस्थायिनः इत्यर्थं दर्शयन्ति । अत्र अप्रसिद्धपदैः प्रकृतार्थस्य संवरणात् प्रमुषिता ॥ १११ ॥

समानरूपां दर्शयति—**अत्रेति** । अत्र उद्याने मया पञ्चपल्लवा वल्लरी लता । दृष्टा । यस्यां वल्लर्याम् । पल्लवे पल्लवे ताम्रा कुसुममञ्जरी दृष्टा । अत्र नायि- ३कायां उद्यानस्य बाह्वोः वल्लर्याः अङ्गुलिषु पल्लवानां नखेषु कुसुममञ्जरीणां चारोपः । तेन समानरूपेयं प्रहेलिकेति ज्ञेयम् ॥ ११२ ॥

परुषामुदाहरति—**सुरा इति** । सुराः शौण्डिकाः । सुरां मद्यं कुर्वन्ति ते सुराः । सुराशब्दात् तत् करोति इति णिचि पश्चात् पचाद्यच् । अथवा ३सुरा अस्ति एषां इति सुराः । अर्शआदित्वादच् । दशनार्चिषा विकटहास्येन प्रकटितदशनकान्त्या । उपलक्षिताः इत्यर्थः । सौरे सुराया इदं सौरं तस्मिन् । सुरामये इत्यर्थः । सरसि सरोवरे । मज्जन्त इव निमज्जन्त इव । मत्ताः प्रमत्ताः सन्तः ।

१ तायवो. अ, क. २ मञ्जरी. क. ३ चार्द्रा अ, क; सान्द्रा. कपा. ४ यस्याः. अ, क.

**मज्जन्त इव मत्तास्ते सौरे सरसि संप्रति ॥ ११३ ॥**

**नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।**

**अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥ ११४ ॥**

**गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।**

सुरालये गङ्गायाम् । स्वैरं भ्रमन्ति । अत्र सुरा इति शब्दः देवतासमूहे एव प्रसिद्धः । योगेन तु शौण्डिकेपि विद्यते । तथापि सुरशब्दो देवतार्थमेव प्रथमतः प्रकटयति । तेन देवाः स्वर्गे मत्ता हृष्टाः सन्तः सौरे सरसि मानससरोवरे मज्जन्ति भ्रमन्ति इति अर्थस्य प्रथमतो भानम् । तेन चोपरिनिर्दिष्टस्य प्रकृतार्थस्य निगूहनम् । प्रकृतार्थस्तु रूढ्या संप्रदायेन वा अप्रतीतमपि केवलं अनुशासन-प्रमाणेनैव परिकल्प्य दर्शितः इति प्रयोक्तुः पारुष्यप्रकाशनात् परुषा ॥ ११३॥

संख्यातामुदाहरति--**नासिक्यमध्येति** । नासिकायां भवः नासिक्यः ञकारः सः मध्ये नामाक्षरमध्ये यस्याः सा । तथा परितः ञकारं अभितः । चतुर्भिः वर्णैः अक्षरैः विभूषिता । चत्वारो वर्णास्तु क–आ–च–ई–इति बोद्धव्याः । एतादृशाक्षरभिधाना काचित् पुरी काञ्ची इति नगरी । अस्ति । यस्यां नगर्याम् । अष्टौ वर्णा यत्र तादृशः आह्वयः संज्ञा येषां ते । नृपाः पल्लवाः नाम राजानः सन्ति । पल्लवाः इत्यत्र पकारअकारलकारद्वयअकारवकारआकारविस-र्गश्चेति अष्टौ वर्णाः सन्ति । सर्वे प्राचीनटीकाकाराः अष्टवर्णाह्वयनृपत्वेन पल्ल-वान् एव स्वीकुर्वन्ति । अर्वाचीनास्तु पुण्ड्रकान् कल्पयन्ति । अपरे पुनः शूद्र-कान् । तत्र पल्लवाः इत्यत्र वर्णगणनायां विसर्जनीयस्यायोगवाहत्वेन गणनम-नुचितमिति तेषामभिप्रायः स्यात् । परमत्र वस्तुस्थितिरेव निर्णयप्रमाणिका इति जोषंभावमाश्रयामः । अत्र चतुरष्टेति वर्णसंख्यानेन प्रकृतार्थगूहनादियं संख्याता ॥ ११४ ॥

प्रकल्पितामुदाहरति–**गिरेति** । हे वृद्धे जरठे । स्खलन्त्या स्खलनशीलया । गिरा वाचा । तथा नम्रेण उन्नयनसामर्थ्याभावेन अधोभूतेन । शिरसा । तथा दीनया दृशा । उपलक्षिता त्वं सोत्कम्पं सभयम् । तिष्ठन्तं त्वां प्रतीक्षमाणम् । मां नानु-कम्पसे मयि अनुग्रहं न करोषि । जरठाकामुकस्योक्तिरियम् । अयमापाततोर्थः ।

---

१ चातुर्वर्ण्य°. अ, क.

तिष्ठन्तमपि सोत्कम्पं[1] वृद्धे मां नानुकम्पसे ॥ ११५ ॥

आदौ राजेत्यधीराक्षि पार्थिवः कोपि गीयते ।
सनातनश्च नैवासौ राजा नापि सनातनः ॥ ११६ ॥

अभिप्रेतार्थस्तु हे वृद्धे हे लक्ष्मीः । वृद्धिशब्दस्य संबोधनैकवचनम् । अत्र ६समृद्ध्यर्थकवृद्धिशब्देन लक्षणया लक्ष्मीः स्वीक्रियते । प्रेमचन्द्रमहाशयैस्तु योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे । इति अमरमुदाहृत्य ऋद्धिशब्दो लक्ष्मीवाचक इति स्थिरीकृतम् । परं स शब्द ओषधिविशेषवाचकः वनौषधि-९वर्गस्थितत्वात् पूर्वप्रक्रमानुरोधाच्चेति तैः कथं नालोचितमिति न जानीमः । दारिद्र्येण हेतुना स्खलद्गीर्धर्मादिभिरुपलक्षितं मां कथं नानुकम्पसे इति प्रकृतार्थः । अत्र प्रथमं प्रतीयमानादर्थात् परार्थकल्पना इति प्रकल्पिता ॥ ११५ ॥

नामान्तरितामुदाहरति—**आदाविति** । हे अधीराक्षि चञ्चलनयने । कोपि पार्थिवः पृथिव्यां विदितः । तत्र विदित इति च इत्यनेन अण् । आदौ प्रथमम् । ३राजा इति गीयते । ततः सनातन इत्यपि गीयते । इति अप्रस्तुतार्थः । तन्निवारणेन प्रस्तुतार्थोद्भावनाय आह—असौ राजा भूपतिः । नैव । नापि सनातनः । अनेन निषेधेन तर्हि कोसौ कथ्यतामिति प्रश्नः गम्यो भवति । तदुत्तरं तु पार्थिवः ६पृथिव्यां भवः उत्पन्नः कोपि वृक्षः । स च आदौ पूर्वार्धे । राजा इति गीयते तन्नाम्नः पूर्वभागः राजा इत्यस्ति । तथा स सनातनश्चास्ति । सनातनो नाम नातनशब्देन सहितः । न तनः अतनः न अतनः नातनः । द्वौ नञर्थौ प्रकृ-९तार्थं गमयतः इति नातनशब्देन तनशब्द एव संपन्नः । तेन सहितः सना-तनः । तनशब्दान्तः इत्यर्थः । अथवा स नातनः तनशब्दशून्यो न । अन्यत्पूर्व-वत् । तथा च राजाशब्दपूर्वस्तनशब्दान्तश्च शब्दः राजातनः वृक्ष इति १२निष्पन्नम् । स च प्रियालवृक्षः इति प्रेमचन्द्रशर्माणः । अपरे तु प्रियालवृक्ष-पर्याये राजादनशब्दोस्ति न तु राजातन इति । परं उभावपि एकार्थौ एव इति शब्दमालातोवगम्यते । स च वृक्षः न राजा न वा सनातनः इति प्रकृतोर्थः । १५स च नाम्नि नानार्थकल्पनया निगूहितः । अतः इयं नामान्तरिता ज्ञेया । अत्राहुः प्रेमचन्द्रशर्माणः । लक्षणे नामपदं च वस्तुपरं न तु संज्ञामात्रपरं बो-ध्यम् । तेन—

---

[1] सोत्कण्ठं. अ.

हृतद्रव्यं नरं त्यक्त्वा[1] धनवन्तं व्रजन्ति काः ।
नानाभङ्गिसमाकृष्टलोका[2] वेश्या न दुर्धराः ॥ ११७ ॥

१८ तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां संनिधानेपि कः कूजति मुहुर्मुहुः ॥

अत्र सजलकलशरूपवस्तुनि वक्तव्ये प्रथमं नानार्थकल्पनान्नामान्तरिता । एवं—

२१ य एवादौ स एवान्ते मध्ये भवति मध्यमः ।
अस्यार्थं यो न जानाति तन्मुखे तं ददाम्यहम् ॥

इत्यादावपि । अत्र यवसः प्रतिपाद्य इति ॥ ११६ ॥

निभृतामुदाहरति—**हृतद्रव्येति** । नाना विविधा याः भङ्गयः शृङ्गार-चेष्टाप्रकाराः ताभिः **समाकृष्टः** वशीकृतः लोकः याभिः ताः । तथा दुःखेन ३ध्रियमाणाः दुर्धराः । काः हृतद्रव्यं अपहृतधनं नरम् । परित्यज्य धनवन्तं व्रजन्ति । अस्य प्रश्नस्य उत्तरं वर्णनमहिम्ना वेश्या भवेयुः । अतस्तां निषेधति । वेश्याः गणिकाः । न । ता उद्दिश्य नायं मम प्रश्न इत्यर्थः । अतस्तद्भिन्नाः का इति ६उच्यतामुत्तरम् । अत्रोत्तरत्वेनाभिप्रेतः संवृतार्थस्तु नानाभङ्गाः तरङ्गाः सन्ति यस्मिन् तत् नानाभङ्गि नदीजलं तेन समाकृष्टाः स्नानावतीर्णाः लोकाः याभिः ताः । नदीनां जलवीचिभिः जनानां प्रवाहे आकर्षणं सुप्रसिद्धमेव । दुर्धराः धरात् ९पर्वतात् दुर्गताः कष्टप्रदगमनाः । इति प्रेमचन्द्रादयः । दुःखेन धर्तुं निरोद्धुं योग्याः । वेगवत्तरप्रवाहेण निरोद्धुमशक्या इत्यर्थः । इति परे । हृतानि द्रव्याणि द्रुविकारभूतानि पत्रपुष्पादीनि यस्य तम् । अथवा द्रव्याणि पर्वते विद्यमानानि १२गैरिकादिधातुविशेषभूतानि यस्य तम् । नरं नरसदृशं आश्रयीभूतं पर्वतम् । त्यक्त्वा धनवन्तं रत्नाकरम् । व्रजन्ति । एतादृश्यो नद्यः इति उत्तरम् । केचित् तु अस्यो-त्तरं श्रियः इति ददति । तच्च संपत् संपदमनुबध्नाति इति नियमानुरोधेन १५हृतद्रव्यं परित्यज्य धनवन्तं व्रजन्ति इति श्रियो वर्णनं संभवति । अतस्तदपि उपपन्नमेव । अत्र विशेषणानां साधारण्यात् एकतरार्थप्रतिषेधेन्यार्थप्रतीतिर्युज्यते । एवं तत्प्रतीतौ च वाचकशब्दानुपात्तत्वान्निभृतत्वम् । अतो निभृता प्रहेलि-१८केयम् ॥ ११७ ॥

---

१ हित्वा. कपा. २ शतारुष्ट. अ, बपा.

जितप्रकृष्टकेशाख्यो यस्तवाभूमिसाह्वयः।[1]
स मामद्य प्रभूतोत्कं करोति कलभाषिणि ॥ ११८ ॥[2]
शयनीये परावृत्य शयितौ कामिनौ क्रुधा।[3]
तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥ ११९ ॥
विजितात्मभवद्वेषिगुरुपादहतो जनः।[4]

समानशब्दामुदाहरति—**जित इति**। हे कलभाषिणि मञ्जुवचने। प्रकृष्टकेशस्य आख्या नाम यस्य स प्रकृष्टकेशाख्यः प्रवालः। प्रकृष्टः वालः ३केशः प्रवालः इति प्रकृष्टकेशाख्यः प्रवालः। जिता प्रकृष्टकेशाख्या येन सः जितप्रकृष्टकेशाख्यः। तथा अभूमिसाह्वयः नास्ति भूमिः धरा यत्र स अभूमिः अधरः तया साह्वयः सनामा। तव त्वदीयः। ईदृशः यः स मां अद्य प्रभूतोत्कं ६अत्युत्सुकम्। करोति। प्रवालतुल्यस्तेधरो मां पानेच्छया व्याकुलयतीत्यर्थः। अत्र प्रकृष्टकेशाख्याभूमिसाह्वयशब्दौ लक्षितलक्षणया प्रवालरत्नाधरोष्ठवाचकौ इति प्रकृतस्य समानशब्देनोपस्थापनात् लक्षणया लक्षितेन सदृशशब्देन प्रकृतार्थस्यो- ९पस्थितेः समानशब्दा ॥ ११८ ॥

समूढामुदाहरति—**शयनीय इति**। शयनीये शय्यायाम्। कामिनौ क्रुधा परावृत्य पराङ्मुखीभूय। शयितौ। रागात् तथैव शयितौ सन्तौ। स्वैरं यथेच्छम्। ३मुखं अचुम्बताम्। पराङ्मुखीभूय शयितयोरेतद्दुर्घटं इति आपाततो मोहः। पर्य- वसितार्थस्तु आदौ क्रुधा परावृत्य पराङ्मुखीभूय शयितौ। पश्चाद्रागात् तथैव परावृत्य पुनः परावृत्य नाम सन्मुखीभूय शयितौ इति। शयने संमुखीभूय ६शयनस्योपपन्नत्वान्न मुखचुम्बनानुपपत्तिः। आपाततः मोहजननात् श्रोतॄणां इयं संमूढा प्रहेलिका ॥ ११९ ॥

परिहारिकामुदाहरति—**विजितेति**। विना पक्षिणा गरुडेन जितः अमृतहरणे विजितः इन्द्रः तस्यात्मभवः पुत्रः अर्जुनः तस्य द्वेषी द्वेष्टा कर्णः ३तस्य गुरुः पिता सूर्यः तस्य पादैः किरणैः हतः संतप्तः। जनः हिमं शीतं

---

१ गस्तेऽभूमिसमाह्वयः. क. २ सुभूतोत्कं. अ, क. ३ रुषा. अ, क.
४ °विजितान्न. क.

**हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १२० ॥**
**न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् ।**
**अमनुष्यस्य कस्यापि हस्तोयं न किलाफलः ॥ १२१ ॥**
**केन कः सह संभूय सर्वकार्येषु संनिधिम् ।**
**लब्ध्वा[1] भोजनकाले[2] तु यदि दृष्टो निरस्यते ॥ १२२ ॥**

अपहन्ति इति हिमापहः अग्निः तस्य अमित्रः शत्रुः जलं तस्य धराः जलधराः । मेघा इत्यर्थः तैः । व्याप्तं आच्छन्नम् । व्योम आकाशम् । अभिनन्दति प्रशंसति । ६अत्र यौगिकशब्दपरंपरया प्रकृतार्थस्योद्भवनात् योगमालात्मिका प्रहेलिका ॥१२०॥

एकच्छन्नामुदाहरति—**न स्पृशतीति** । कस्यापि अमनुष्यस्य मनुष्यत्वानर्हस्य । हस्तः जातु कदाचिदपि । आयुधं न स्पृशति । तथा स्त्रीणां युवतीनाम् । ३स्तनमण्डलं च न स्पृशति । तथापि अयं हस्तः अफलः फलशून्यः । न । किलेति निश्चये । अयं अर्थः आपाततः प्रतीयते । विचारे तु आयुधस्य कुचमण्डलस्य च स्पर्शाभावेन नास्मिन् पौरुषत्वं रसिकत्वं वा तत् कथमस्य हस्तः ६सफलः स्वक्रियाकरणासमर्थत्वात् इति विरोधः । तत्परिहाराय अमनुष्यशब्देन गन्धर्वशब्दो लक्ष्यते । तथा च अमनुष्यस्य गन्धर्वस्य हस्तः गन्धर्वहस्तः एरण्डवृक्षः । तथाच हारावली—अमण्डपञ्चाङ्गुलवर्धमाना गन्धर्वहस्तस्त्रिपुटीफलश्च ९इति । स च आयुधं न स्पृशति । तत्खण्डने आयुधस्य मालिन्यं जायते । तथा स्त्रीस्तनमण्डलं न स्पृशति । तस्य कण्डूकरत्वात् । स च अफलो न भवति फलवत्त्वात् । अत्र च आश्रितं फलं व्यक्तं न तु आश्रयो वृक्षः व्यक्तः इति १२एकच्छन्ना प्रहेलिकेयम् ॥ १२१ ॥

उभयच्छन्नामुदाहरति—**केनेति** । कः पदार्थः । केन पदार्थेन । सह संभूय समुत्पद्य । सर्वकार्येषु संनिधिं सांनिध्यम् । लब्ध्वा च भोजनकाले यदि दृष्टः स्यात् ३तर्हि निरस्यते दूरीक्रियते । इति प्रश्नः । उत्तरं तु कः कस्य मस्तकस्य अयं कः केशः । इदमर्थेण् । केन सह मस्तकेन सह । संभूय समुत्पद्य । सर्वकार्येषु चूडामणिमालाविधारणकार्येषु । संनिधिं लब्ध्वा भोजनकाले दृष्टः । पात्रे इति ६शेषः । निरस्यते अशुचित्वाद्दूरीक्रियते । अत्र आश्रयाश्रयिणोर्मस्तककेशयोः उभयोः छन्नत्वादुभयच्छन्ना इयं प्रहेलिका ॥ १२२ ॥

---

१ लब्धा. अ. २ °वेलायां. अ.

सहया सगजा सेना सभटेयं न चेज्जिता ।
अमातृकोयं[1] मूढः स्यादक्षरज्ञश्च नः सुतः ॥ १२३ ॥
सा नामान्तरितामिश्रा वञ्चितारूपयोगिनी ।
एवमेवेतरासामप्युन्नेयः संकरक्रमः[2] ॥ १२४ ॥

॥ इति प्रहेलिकाचक्रम् ॥

संकीर्णामुदाहरति—सहयेति । सहया हयैरश्वैः सहिता सहया । तथा सगजा गजैः करिभिः साहिता सगजा । तथा सभटा भटैः योधैः सहिता सभटा । ३एतादृशी सेना न चेज्जिता न पराभूता चेत् । अयं नः अस्माकम् । सुतः अक्षरज्ञः परमार्थतत्त्वविदपि । अमातृकः माति परापरसामर्थ्यं परिमाति इति माता न माता अमाता परापरबलानवच्छेत्ता । पश्चात् स्वार्थे कः । एतादृशः मूढः एव स्यात् । ६इति उत्तानार्थः । गूढार्थस्तु सहया हकारेण यकारेण च सहिता सहया । अत्र हकारेण सर्वे उष्माणः शषसहाः गृह्यन्ते यकारेण च अन्तस्था यरलवाः । तथा सगजा गकारेण जकारेण च सहिता । अत्र गकारेण सर्वः कवर्गः जका- ९रेण चवर्गश्च ज्ञेयः । तथैव सभटा पवर्गटवर्गसहिता । तथा सेना इकारेण नका- रेण च सहिता । इकारेण अचां नकारेण तवर्गस्य च संग्रहः । एवं भूता अक्ष- राणां पङ्क्तिरिति शेषः । न जिता चेत् सम्यगुच्चारणेन लेखनेन वा स्वायत्ती १२न कृता चेत् । अयं नः सुतः अक्षरज्ञः न क्षरन्ति इति अक्षराः वेदाः तद्विदपि । अमातृकः मातृकाः वर्णाः न सन्ति सम्यक् लेखनेनोच्चारणेन वा यस्य सः । वर्णलेखनोच्चारणानभिज्ञः मूढः स्यात् । वर्णव्यवहारानभिज्ञत्वात् । अमात्रिकः इति १५पाठे प्रथमार्थे मात्रा विषयाः ते न सन्ति यस्य विषयपराङ्मुख इत्यर्थः। द्वितीयार्थे मात्रा ह्रस्वदीर्घप्लुतोच्चारकालविशेषः स नास्ति यस्य तत्रानभिज्ञ इत्यर्थः॥१२३॥

अत्र संकीर्णतां विशदयति—सेति । सा अधुना दर्शितेयम् । संकीर्णा । यतः नामान्तरितामिश्रा हयादिशब्दानां विविधार्थकल्पनान्नामान्तरिताख्यया प्रहेलिकया ३मिश्रा ज्ञेया । तथा वञ्चितारूपयोगिनी वञ्चिताख्या या प्रहेलिका तद्रूपेण योगः

---

१ अमात्रिकः. ब, ड, प.

२ अस्माच्छ्लोकादनन्तरं अ पुस्तके अधिकं--

इति प्रहेलिकामार्गो दुष्करात्मा प्रदर्शितः ।

**अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।**
**शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधिकम् ॥ १२५ ॥**
**देशकालकलालोकन्यायागमविरोधि च ।**
**इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ॥ १२६ ॥**

संबन्धः अस्ति अस्या एतादृशी अपि अस्ति । सेनाशब्दस्य प्रसिद्धस्य अत्र अविवक्षितत्वाद् वञ्चिताख्या प्रहेलिकापि विद्यते इति भावः । एवमेव इतरासां ६प्रहेलिकानां अपि संकरक्रमः उन्नेयः ज्ञेयः । अत्र द्वयोः सांकर्यं दर्शितम् । अनयैव दिशा त्रिचतुःप्रभृतीनां सांकर्यमुन्नेयमिति भावः ॥ १२४ ॥

एतावत्पर्यन्तं द्वितीयपरिच्छेदारम्भे–काव्यशोभाकरान् धर्मान् अलंकारान् प्रचक्षते (२·१) इति उद्दिष्टान् काव्यशोभाकरत्वेनोपादेयधर्मान् अर्थालंकारान् ३शब्दालंकारांश्च निरूप्य–तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन (१·१) इति हेयधर्मान् दोषान् व्याचिख्यासुः भरतादिभिः संगृहीतानां दशसंख्याकानामेव विवरणं संप्रदायानुगृहीतं तथा अन्यैः अधिकतया संगृहीतानां केषांचित् ६तेष्वन्तर्भावं केषांचिदनुपयुक्ततां मन्यमानः श्लोकद्वयेन तानुद्दिशति—**अपार्थमिति देशकालेति** च । दोषाणां पूर्वं सामान्यलक्षणं विधेयमनन्तरं भेदाः इत्ययं शास्त्रीयः पन्थाः । तदनुरोधेन दोषसामान्यलक्षणं वर्ज्या इति ज्ञेयम् । ९तथा च काव्येषु सूरिभिः ये अभिमतप्रतीतिव्यवधायकतया विघ्नभूताः सन्तः

---

विद्वत्प्रयोगको ज्ञेयो न हि प्रश्नोत्तराश्रयः ॥
इत्याचार्यदण्डिनः कृतौ यमकप्रहेलिकाप्रकारो नाम तृतीयः परिच्छेदः ॥
काव्ये दोषगुणाश्चैव विज्ञातव्या विचक्षणैः ।
दोषा विपत्तयस्तस्य (°ये तत्र क) गुणाः संपत्तय (°ये य° क)स्तथा ॥
तथा क पुस्तकेपि आधिकं—
इति प्रहेलिकामार्गो दुष्करात्मापि दर्शितः ।
विद्वत्प्रयोगतो ज्ञेया मार्गाः प्रश्नोत्तरादयः ॥ १२५ ॥
॥ इति प्रहेलिकाचक्रम् ॥
विशदबुद्धिरनेन सुवर्त्मना सुकरदुष्करमार्गमवैति हि ।
न हि तदन्यनयेऽपि कृतश्रमः प्रभुरिमं नयमेतुमिदं विना ॥ १२६ ॥
इत्याचार्यदण्डिनः कृतौ काव्यादर्शे सुकरदुष्करो नाम तृतीय परिच्छेदः ॥
पुष्पिकानन्तरं 'काव्ये दोषगुणा' इत्यादिश्लोकः अपुस्तकस्थः अत्रापि दृश्यते ।

प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ[1] ।
विचारः कर्कशः[2] प्रायस्तेनालीढेन किं फलम् ॥ १२७ ॥

शश्वत् काव्यस्य हेयतामापादयन्ति इति वर्जिताः ते दोषाः इति दोषसामान्य-
लक्षणं ज्ञेयम् । वामनो गुणविपर्ययात्मनो दोषाः इत्याह । प्रकाशकृत्—मुख्यार्थ-
१२हतिर्दोषः इति । केचित्तु दुष्यति काव्यं अनेनेति करणे घञा दोषशब्दं
निष्पाद्य तदेव लक्षणमाहुः । सर्वेषां संग्रहः उपर्युक्तलक्षणे भवतीति सुधी-
भिराकलनीयम् । यस्य विशेषाः । अपार्थं अर्थशून्यम् । व्यर्थं विरुद्धार्थम् । एकार्थं
१५अभिन्नार्थम् । ससंशयं संदिग्धम् । अपक्रमं क्रमविरहितम् । शब्दहीनं अपेक्षित-
शब्दन्यूनम् । यतिभ्रष्टं विश्रान्तिविच्छेदशून्यम् । भिन्नवृत्तम् वृत्तनियमच्युतम् ।
विसंधिकं संधिशून्यम् । देशकालकलालोकन्यायागमानां विरोधि विरुद्धार्थं च
१८काव्यं दुष्टमिति शेषः । इति एते सूरिभिः काव्येषु वर्ज्या दोषा दश सन्तीति
शेषः । उक्तं हि भरतेन––

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम् ।
१८ न्यायादपेतं विषमं विसंधि शब्दच्युतं वै दश काव्यदोषाः ॥ (१६·८४)

इति । प्रकाशकारैः—रसश्च मुख्यस्तदाश्रयाद्वाच्यः ( ७·१ ) इत्यादि प्रबन्धेन
रसप्राधान्यतया यद् रस–अर्थ-शब्दगत्वेन दोषाणां त्रैविध्यं परिकल्पितं तन्नेष्टं
२१आचार्यदण्डिनः । यतः—शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ( १·१० )
इत्येतावदेव काव्यलक्षणं तस्याभिप्रेतम् । तदनुरोधेनैव अत्र शब्दार्थानां दोषाणां
परिगणनं तेन कृतमिति बोद्धव्यम् ॥ १२५–१२६ ॥

इदानीं भामहेन—प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते इति आधिक्येन
गणितान् दोषान् निराकरिष्णुराह––**प्रतिज्ञेति** । तत्र साध्यनिर्देशः प्रतिज्ञा ।
३साध्यसाधनं हेतुः । प्रसिद्धोदाहरणोपन्यासः दृष्टान्तः । एषां हानिः वैकल्यम् ।
दोषः अभिमतप्रतीतिव्याघातकतया वर्ज्यत्वेन दोषः । न वेति असौ पर्यनुयुज्य-
मानो विचारः एकतरावधारणेन निश्चयः । प्रायः कर्कशः केवलशास्त्रीयसरण्य-
६वगाहित्वात् रूक्षः । अतः सरसेस्मिन् साहित्यप्रबन्धे आलीढेन आस्वादितेन
ज्ञातेनेत्यर्थः । तेन दोषादोषत्वविचारेण । किं फलम् न कोप्युपयोगोस्ति । यथा
शास्त्रीया अपि अभिधालक्षणाव्यञ्जनादयः पदार्था उपयुक्ता इति तत्तदालंकारे

१ वेत्ययं. अ. २ °कर्कशप्रायस्. अ, क.

समुदायार्थशून्यं यत् तदपार्थमितीष्यते[1] ।
उन्मत्तमत्तबालानामुक्तेरन्यत्र[2] [3] दुष्यति ॥ १२८ ॥
समुद्रः पीयते देवैरहमस्मि[4] [5] जरातुरः ।
अमी गर्जन्ति जीमूता हरेरैरावणः[6] प्रियः ॥ १२९ ॥

विवेचिताः यथा वा शास्त्रीयः उद्देशविधेयभावविचारः उत्प्रेक्षालंकारे सप्रपञ्चं निरूपितः न तथायं विषयः इति न तद्विचारः क्रियते । तथा अभिमतप्रतीतिव्याघातकरं दुष्टं तच्च न सर्वत्र प्रतिज्ञादिहानौ वर्तते । अप्रतिज्ञातानां प्रासाङ्गिकसाध्यानामपि कविभिः वर्णितत्वात् । निर्हेतुता च प्रसिद्धसाध्ये नैव वैरस्यमावहति । दृष्टान्तोपन्यासस्त्वलंकार एव । तद्धानिरपि नात्यन्तवैरस्यजनिका । अलंकारशून्यत्वेपि काव्यत्वानपायात् । तस्मान्न केवलं प्रतिज्ञादिहानिः दोषस्वरूपा किंतु यत्र सा अभिमतप्रतीतिव्याघातकारिणी तत्र दोषो नान्यत्र इति अनित्यदोषविचारो नायमस्माभिर्वितन्यते इति भावः ॥ १२७ ॥

उद्देशक्रमानुरोधेनादावपार्थं लक्षयति--**समुदायेति** । समुदायस्य वाक्यघटकपदसमूहस्य महावाक्यघटकवाक्यसमूहस्य वा यः अर्थः विशेषणविशेष्यभावेन संबद्धतया एकतया प्रतीयमानः प्रतिपाद्यः तेन शून्यम् । यद्वाक्यं महावाक्यं वा । तत् अपार्थम् अपार्थसंज्ञकदोषदुष्टम् । इष्यते कविभिरिति शेषः । यत्र योग्यताकाङ्क्षासत्त्यभावेन न पदानां वाक्यानां वार्थावगतिर्भवति तत् अपार्थम् इति भावः । तच्च अपार्थं वाक्यं उन्मत्ता उन्मादरोगाभिभूताः मत्ता मद्यादिना मूढाः बालाः शिशवः तेषां उन्मत्तमत्तबालानाम् । उक्तेः भाषणात् । अन्यत्र दुष्यति । अनुन्मत्तादीनामुक्तौ तद्वाक्यं दुष्टम् । उन्मत्तोक्तौ न दुष्टम् । इति ज्ञेयमिति भावः ॥ १२८ ॥

अपार्थमुदाहरति--**समुद्रः पीयते इति** । देवैः समुद्रः पीयते । अत्र योग्यतायाः अभावात् पदसमुदायार्थशून्यत्वम् । अहं जरातुरोस्मि । अमी जीमूताः मेघाः । गर्जन्ति । हरेः इन्द्रस्य । ऐरावणः ऐरावतः । प्रियः । इति त्रीणि वाक्यानि स्वार्थबोधसमर्थान्यपि परस्परानाकाङ्क्षत्वात् तेषामङ्गाङ्गित्वविरहेण

---

१ °र्थकमिष्यते. अ; °र्थमिहेष्यते. कपा. २ तन्मत्तोन्मत्तबाला°. अ, क; प्रमत्तोन्मत्तबाला°. बपा. ३ उक्तेरन्यत्र. अ. ४ देवैः इत्यत्र सोऽयं. अ, बपा; मेघैः. कपा. ५ अस्मि इत्यत्र अद्य. अ. ६ ऐरावतः. अ.

**इदमस्वस्थचित्तानामभिधानमनिन्दितम् ।**
**इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥ १३० ॥**
**एकवाक्ये प्रबन्धे वा पूर्वापरपराहतम् ।**
**विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥ १३१ ॥**

एकवाक्यत्वाभावः । ततश्च न समुदायार्थप्रतीतिः । न वा केवलं स्वार्थसंपादनेन ६विश्रान्तौ विशेषार्थावगतिः । अतः अपार्थमेतत् । महावाक्ये अवान्तरवाक्यानामङ्गाङ्गित्वेनैवार्थबोधो भवति । तथाचोक्तम्—

स्वार्थबोधसमर्थानामङ्गाङ्गित्वव्यपेक्षया ।
९ वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

इति ॥ १२९ ॥

अपार्थदोषस्य गुरुत्वमपवादपरिहारपूर्वकं कथयति—**इदमिति** । अस्वस्थचित्तानां उन्मादादिभिरभिभूतमनसाम् । इदं पूर्वदर्शितम् । अभिधानं कथनम् । ३अनिन्दितं निर्दोषम् । स्यात् । प्रयोक्तुरनवधानतया शिष्टास्तद्वाक्यं सदोषं नैव जानीयुरिति भावः । इतरत्र उन्मत्तादिभिन्नप्रयोक्तृषु मध्ये । को वा कविः पण्डितः । एवमादिकं योग्यताकाङ्क्षादिभिर्विरहितं वाक्यम् । प्रयुञ्जीत न कोपि प्रयुञ्जीत ६इत्यर्थः ॥ १३० ॥

व्यर्थं लक्षयति—**एकेति** । एकवाक्ये एकस्मिन् वाक्ये । तथा प्रबन्धे वाक्यसंघाते वा । पूर्वापरपराहतं पूर्वापरविरुद्धार्थम् । वस्तु अस्ति चेत् तद् व्यर्थ३तया विरुद्धार्थतया व्यर्थम् । इति व्यर्थसंज्ञकदोषेषु पठ्यते गण्यते । अनेन व्यर्थमित्यत्र विरिति उपसर्गः विरुद्धार्थकः न तु अभावार्थकः इति सूचितम् । अर्थविरोधश्चात्र शाब्दबोधानन्तरं पर्यालोचनया प्रतीयते । अपार्थे तु आकाङ्क्षा६दिविरहात् शाब्दबोध एव न भवति । एकवाक्ये प्रबन्धे च इत्यनेन वाक्यप्रबन्धपर्यालोचनया विरोधप्रतिभानं अस्या विषयः प्रकरणादिपर्यालोचनया विरोधप्रतिभासस्तु वक्ष्यमाणदेशकालादिविरोधविषयः इति विवेकः । अस्मिन् ९एव दोषे अन्यैरुक्ता विरुद्धमतिकारित्व-प्रकाशितविरुद्धत्व—अमतपरार्थत्व-परिपन्थिरसाङ्गपरिग्रहादयो दोषा अन्तर्भवन्तीति ज्ञेयम् ॥ १३१ ॥

जहि शत्रुबलं[1] कृत्स्नं जय विश्वंभरामिमाम्[3] ।
तव[4] नैकोपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥ १३२ ॥
अस्ति काचिदवस्था सा साभिषङ्गस्य[5] चेतसः ।
यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥ १३३ ॥
परदाराभिलाषो मे कथमार्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥ १३४ ॥

प्रबन्धगतव्यर्थत्वमुदाहरति—जहीति । कृत्स्नं शत्रुबलं जहि विनाशय । इमां विश्वंभरां जय स्वायत्तां कुरु । सर्वभूतानुकम्पिनः प्राणिमात्रेषु दयां कुर्वतः । तव एकोपि विद्वेष्टा शत्रुर्नास्ति । अत्र शत्रुशून्यस्य सकलशत्रुबलहननं तथा सर्वभूतानुकम्पिनः पृथ्वीजयश्च पर्यालोचनया नोपपद्यते ॥ १३२ ॥

विरुद्धार्थता क्वचिद् गुणो भवतीति कथयति—अस्तीति । साभिषङ्गस्य दुःखादिना अभिभूतस्य । अभिषङ्गः पुंल्लिङ्गः पराभवाक्रोशशपथेषु । इति मेदिनी । चेतसः काचित् सा अवस्था विवेकशून्या स्थितिः । अस्ति । यस्यां अवस्थायाम् । वक्तुः विरुद्धार्थापि भारती अभिमता भवेत् शिष्टैः न केवलं निर्दोषत्वेन अनुमता किंतु गुणवत्तया अङ्गीकृता भवेत् ॥ १३३ ॥

व्यर्थस्य गुणत्वमुदाहरति—परेति । आर्यस्य अभिजनवतः । मे परदाराभिलाषः पराङ्गनाभिरतिः । कथं युज्यते । तस्याः पराङ्गनायाः तरलं लज्जाभयजनितसंभ्रमात् चञ्चलम् । दशनच्छदं अधरोष्ठम् । कदा नु पिबामि । अत्र पूर्वार्धोक्तस्य आर्यस्य परदाराविमुखत्वस्य तस्या रदनच्छदं पिबामि इति उत्तरार्धोक्तं विरुद्धम् । तच्च कामाभिभूतस्य न दोषावहं प्रत्युत गुणावहम् । तथाच नेदं वाक्यं व्यर्थदोषवत् । अत्राहुः प्रेमचन्द्रशर्माणः । अत्र पूर्वार्धे व्यङ्गयस्य शान्तव्यभिचारिणो रत्याख्यभावस्य उत्तरार्धव्यङ्गयेन श्रृङ्गारव्यभिचारिणौत्सुक्येन सह सन्नपि विरोधः प्रयोक्तुः वियोगाभिभूतत्वव्यञ्जकतया श्रृङ्गारपोषकत्वात् कमपि चमत्कारमावहतीति गुण एव । अत्र द्वयोर्विरोधः । एवं एकत्र बहूनां विरोधे चमत्कारविशेषः । यथा—

---

१ °कुलम्. अ, कपा. २ भर. अ. ३ अमूम्. कपा.
४ न हि ते कोपि. कपा; न च ते कोपि. अ, बपा. ५ साभिलाषस्य. बपा.

अविशेषेण पूर्वोक्तं यदि भूयोपि कीर्त्यते ।
अर्थतः शब्दतो वापि तदेकार्थं मतं यथा ॥ १३५ ॥
उत्कामुन्मनयन्त्येते बालां तदलकत्विषः ।

काकार्यं शशलक्ष्मणः क च कुलं भूयोपि दृश्येत सा
१२ दोषाणां प्रशमाय मे श्रुतमहो कोपेपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा
चेतः स्वास्थमुपैहि कः खलु युवा धन्योधरः पास्यति ॥

१५इति । अत्र शान्ताङ्गानां वितर्कमतिशङ्काधृतीनां विप्रलम्भाङ्गैरौत्सुक्यस्मृति-दैन्यचिन्ताभिः सह सन्नपि विरोधः प्रयोक्तुर्विरहाभिभूतत्वव्यञ्जनात् शृङ्गारप्रकर्ष-माविर्भावयति । नव्यास्त्वेवंविधस्थले विरुद्धानां बाध्यत्वेनोक्तत्वाद् गुणत्वमित्याहुः।
१८यथा—संचार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः । इति ॥ १३४ ॥

क्रमप्राप्तं एकार्थं लक्षयति—**अविशेषेणेति** । यदि पूर्वोक्तं वचः । अर्थतः शब्दतो वा अविशेषेण विशेषशून्येन अभिन्नेनेत्यर्थः । भूयोपि पुनरपि । कीर्त्यते ३तत् एकार्थं मतम् । अत्र अविशेषेणेत्यनेन विशेषविवक्षयोक्तार्थस्य पुनःकीर्तनं न दोषाय इति बोद्धव्यम् । एतदेव अनुकम्पाद्यतिशयः (३·१३७) इत्यनेन ग्रन्थकर्त्रा स्फुटीक्रियते । केचित्तु अविशेषेण एकरूपेण इत्यर्थं दर्शयन्ति । ६अयं च दोषः एकार्थः एकार्थगतः एकाकारशब्दगतश्चेति ज्ञेयम् । तेन च भिन्नार्थक एकाकारशब्दप्रयोगे नायं दोषः । अन्यथा सर्वस्यापि यमकस्यैकार्थ-दोषग्रस्तत्वापत्तिः । अत एव शब्दपौनरुक्त्येर्थस्यापि अङ्गत्वादेकार्थ इति संज्ञा ९समुपपन्ना । अन्यथा गुणदोषालंकारसंज्ञानां प्रायः योगबलादेव प्रवृत्तिः इति सर्वालंकारिकसंमतत्वात् भिन्नार्थकैकाकारशब्दावृत्तौ एकार्थ इति संज्ञा अनुपपन्ना स्यात् । एवं च—सुरा विप्रैः सुरा नीचैः सेव्यन्ते भक्तिभावतः । इति देवमद्य-१२वाच्यैकाकारस्य सुराशब्दस्यावृत्तौ नायं दोषः । यत्र शब्दभेदः तत्र केवलं अर्थस्य पौनरुक्त्यम् । यत्र तु शब्दाभेदः तत्र शब्दार्थयोः पौनरुक्त्यमिति ज्ञेयम् । अर्थतः शब्दतो वा इत्यनेन अर्वाचीनैरुक्तस्य पौनरुक्ताख्यार्थदोषस्य कथितपद-१५त्वाख्यशब्ददोषस्य चोभयोरत्र संग्रहः इति सूचितम् ॥ १३५ ॥

अर्थगतमेकार्थमुदाहरति—**उत्कामिति** । तस्याः बालायाः अलकानां इव

**अम्भोधरास्तडित्वन्तो गम्भीरास्तनयित्नवः ॥ १३६ ॥**

**अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते ।**

त्विट् येषां ते तदलकत्विषः । स्तनयित्नवः गर्जनशीलाः । तडित्वन्तः विद्युद्युक्ताः । गम्भीरा अम्भोधराः उत्कां उत्कण्ठिताम् । बालां उन्मनयन्ति सोत्सुकां कुर्वन्ति । अत्र गम्भीराः स्तनयित्नवः इति तथा उत्कां उन्मनयन्ति इति शब्दा एकार्था एव इति पौनरुक्त्यम् । पर्यायान्तरानुपादाने प्रकारान्तरेण पूर्वोक्तार्थस्य पुनः प्रतीतावप्यस्य सद्भावो ज्ञेयः । यथा––

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥

इति । अत्रोत्तरार्धेन व्यतिरेकेण द्वितीयपादार्थः अभिहितः इति पौनरुक्त्यम् । यत्रावयवार्थापेक्षया संज्ञाशब्दानामुपादानं न तत्रायं दोषः । यथा––

सा त्रियामा तदार्तस्य चन्द्रमण्डलमण्डिता ।
राज्ञो विलपमानस्य न व्यभासत शर्वरी ॥

अत्र त्रियामाशर्वरीशब्दयोरेकार्थत्वेपि त्रियामाशब्दः अवयवार्थमादाय शर्वरीविशेषणत्वेन प्रयुक्तः । अतो नात्र एकार्थतादोषः । तथैवोक्तोदाहरणे तडित्वन्तः इति शब्दस्य न पौनरुक्त्यमिति बोध्यम् । मूले अर्थतः पौनरुक्त्यं दर्शितम् । शब्दतः पौनरुक्त्यं तु प्रकाशे दर्शितम् । यथा––

अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ (पृ० ३४२)

इति । अत्र लीलाशब्दः पुनरुक्तः ॥ १३६ ॥

अस्य प्रतिप्रसवमाह––**अनुकम्पेति** । यदि कश्चित् अनुकम्पादीनां अतिशयः प्रकृतस्येति भावः विवक्ष्यते वक्तुमिष्यते । तदा पुनरुक्तोपि अर्थः । न

**न दोषः पुनरुक्तोपि प्रत्युतेयमलंक्रिया ॥ १३७ ॥**
**हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।**
**हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ १३८ ॥**
**निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत् ।**
**वचांसि दोष एवासौ ससंशय इति स्मृतः ॥ १३९ ॥**

३दोषः दोषवान् । प्रत्युत इयं अलंक्रिया काव्यशोभाधायकत्वेन स अलंकारो भवति । तदुक्तं भामहेन ––

कथमाक्षिप्तचित्तः सन्नुक्तमेवाभिधास्यते ।
६ भयशोकाभ्यसूयासु हर्षविस्मययोरपि ।
यथाह गच्छ गच्छेति पुनरुक्तं न तद्विदुः ॥ ( ४·१३ ) इति ।

धनुर्ज्या–कर्णावतंस-श्रवणकुण्डल–शिरःशेखर-मुक्ताहार–पुष्प–माला-करि-कलभ-९इत्यादौ विशेषार्थविवक्षया न पौनरुक्तदोष इति तु वामनादयः मन्यन्ते ॥१३७॥

अनुकम्पायां पौनरुक्ते निर्दोषत्वमुदाहरति––**हन्यत इति** । सा वरारोहा सुन्दरी । अकाण्डवैरिणा निष्कारणरिपुणा । स्मरेण हन्यते पीड्यते । चारूणि ३मनोहराणि सर्वाणि अङ्गानि यस्याः सा चारुसर्वाङ्गी हन्यते । मञ्जुभाषिणी मधुरवचना हन्यते । अत्र हन्यते इतिपदस्य पौनरुक्त्यं नायिकायाः प्रस्तुताया अनुकम्पनीयत्वं सविशेषं द्योतयन् कमपि चमत्कारमावहन् काव्यमुपस्कुरुते ६इति नात्र एकार्थत्वदोषः । एवं विधेयानुवादादावपि । यथा ––उदेति सविता ताम्रस्ताम्र एवास्तमेति च । इत्यत्र नायं दोषः इति अर्वाचीनाः ॥ १३८ ॥

ससंशयं लक्षयति––**निर्णयार्थमिति** । निर्णयार्थं निश्चयार्थम् । प्रयुक्तानि वचांसि चेत् यदि संशयं जनयन्ति संदेहमुत्पादयन्ति । तर्ह्यसावेव दोषः ससंशयः ३एतत्संज्ञकः स्मृतः । एतेन संशयार्थं प्रयुक्तस्य वाक्यस्य संशयजनकत्वे न दोषः । एतच्चाग्रे स्फुटीभविष्यति । अयं च दोषः शब्दगतोर्थगतश्च बोद्धव्यः । यत्र संशयेन निश्चितान्वयबोधानुपपत्त्या निश्चितार्थानुपपत्तिः तत्र शाब्दः । यत्र ६तु अर्थबोधानन्तरं वक्त्राद्यनिश्चयस्तत्रार्थगतः । यथा काव्यप्रकाशे––

---

१ °कृतिः अ, कपा. २ यत्, बपा.

**मनोरथप्रियालोकरसलोलेक्षणे सखि ।**
**आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥ १४० ॥**
**ईदृशं संशयायैवं यदि जातु प्रयुज्यते ।**
**स्यादलंकार एवासौ न दोषस्तत्र तद्यथा ॥ १४१ ॥**
**पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।**

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ (पृ० २९१)
९अत्र प्रकरणाद्यभावे संदेहः इति ॥ १३९ ॥

शब्दगतं संशयमुदाहरति-— **मनोरथेति** । जारं प्रति सानुरागं पश्यन्तीं नायिकां प्रति तन्मातुस्तदाचरणपरिज्ञानशङ्कया सख्या उक्तिरियम् । ३मनोरथप्रियः वाञ्छितप्रेयान् तस्य आलोकने यः रसः प्रेमावेशः तेन लोले तरले ईक्षणे यस्याः सा तत्संबुद्धिः । सखि असौ तव माता आराद्वृत्तिः समीपवर्तिनी । अत ईदृशं तव दुराचारम् । द्रष्टुं सा न क्षमा न सहिष्यते । तन्निवर्त-६स्वेति भावः । अथवा आरात् दूरवर्तिनी सा तव ईदृशं सतृष्णजारप्रेक्षणम् । द्रष्टुं न क्षमा न समर्था । अतः पर्याप्तं विहर । अत्र प्रथमार्थे त्वं विहरणान्निवर्तस्व द्वितीये च यथेच्छं प्रवर्तस्व इत्युभयोर्विरुद्धयोरर्थयोरेकतरस्य वक्तुरभिप्रेतस्या-९निश्चयात् संशयः । अयं आरात इति नानार्थशब्दोपनिबद्धः इति शब्दगतः ।१४०।

अस्य कुत्रचिद्गुणत्वं दर्शयति—-**ईदृशमिति** । यदि जातु यदि नाम कदापि । ईदृशं संदेहयुक्तं वाक्यम् । संशयायैव संशयमुद्दिश्यैव । प्रयुज्यते ३उपयुज्यते । तदा असौ संशयालंकार एव स्यात् । तत्र दोषो न । तथा च संशयः विवक्षितश्चेत् तदासौ गुणः यदा त्वविवक्षितस्तदा दोषः ॥ १४१ ॥

संशयगुणमुदाहरति-**पश्यामीति** । अनिन्दितां तां त्वत्प्रेयसीम् । अनङ्गः मदनः तस्मात् संजातेन आतङ्केन व्याधिना लङ्घितां आक्रान्ताम् । कठोरेण कालेन ३मृत्युना । ग्रस्तां पश्यामि । नः तदाशया किं तत्संबन्धिजीवनाशया किं प्रयोजनम् । साचिरादेव नामशेषा भविष्यति इत्यर्थः । इत्येकोर्थः । किंवा अङ्गजः

१ °क्षणं. अ. २ °यादेव. अ. ३ वा तु. बपा.

कालेनैव कठोरेण ग्रस्तां किं[1] नस्तदाशया[2] ॥ १४२ ॥
कामार्ता घर्मतप्ता वेत्यनिश्चयकरं वचः ।
युवानमाकुलीकर्तुमिति दूत्याह नर्मणा ॥ १४३ ॥
उद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः ।
अपक्रमाभिधानं तं[3] दोषमाचक्षते बुधाः[4] ॥ १४४ ॥
स्थितिनिर्माणसंहारहेतवो जगताममी[5] ।

मदनः तस्य आतङ्कः संतापः स न भवति इति अनङ्गजातङ्कः । मदनसंताप-भिन्नग्रीष्मकालसंतापेन आक्रान्तां अत एव कठोरेण कालेन संतापजनकग्रीष्मादिना ग्रस्तां अभिभूतां पश्यामि । अतस्तदाशया नः किमिति पूर्ववत् । अत्र नायकमाकुलीकर्तुं सखीवृत्तान्तं नायकाय निवेदयन्ती दासी बुद्धिपुरःसरमेव एवं ससंशयं प्राह इति गुण एवासौ न दोषः । अत्र किं नस्त्वदाशया इति पाठं स्वीकृत्य बहुभिस्तव नायकस्य आशया इति व्याख्यातं परं तन्न रुचिरमित्युपेक्षितम् ॥ १४२ ॥

उक्तोदाहरणे संशयस्य प्रस्तुतत्वं दर्शयति—**कामार्तेति** । युवानं नायकम् । आकुलीकर्तुं संशयेन नायिकासमीपगमनायोत्सुकं कर्तुम् । दूती वचनकौशलेन कामार्ता घर्मतप्ता वा इति अनिश्चयकरं संशयोत्पादकम् । वचः आह । मदनव्यथां वा ग्रीष्मव्यथां वा ज्ञात्वा व्याकुलीभूयायं द्रुतं गच्छतु इत्यभिप्रेत्य एवं दूती जगादेति ज्ञेयम् ॥ १४३ ॥

क्रमप्राप्तमपक्रमं लक्षयति—**उद्देशेति** । अर्थानां उद्देशानुगुणः उद्देशः प्रथमोपन्यासः तदनुगुणः तदनुकूलः । अनूद्देशः पश्चात् संबधिनां पदानां उपन्यासः । न कृतश्चेत् तं दोषं अपक्रमाभिधानं अपक्रमसंज्ञकम् बुधाः आचक्षते कथयन्ति । क्रमालंकारविपक्षीभूतोयं दोष इति ज्ञेयम् । तथा च यथाक्रमोपन्यासे क्रमालंकारः अनुपन्यासे च दोषः । क्रमिकाणां क्रमेणैवान्वयः सुलभतया बुद्ध्यारूढो भवति । विपर्यये तु वाक्यार्थबोधमान्थर्यमित्यस्य सदोषत्वम् ॥१४४॥

अपक्रममुदाहरति—**स्थितीति** । जगतां स्थितिः पालनं निर्माणं

---

१ किं नुत°. बपा. २ °स्त्वदाशया. क. ३ तद्दो°. अ, ४ यथा. अ.
५ °तामजाः. अ. जगतां मताः. कपा.

**शंभुनारायणाम्भोजयोनयः पालयन्तु वः ॥ १४५ ॥**

**यत्नः[1] संबन्धविज्ञान[2]हेतुकोपि कृतो यदि ।**
**क्रमलङ्घनमप्याहुः सूरयो[3] नैव दूषणम् ॥ १४६ ॥**

**बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।**
**आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ १४७ ॥**

**शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धतिः ।**

उत्पत्तिः संहारो विनाशः एतेषां हेतवः कारणानि । शंभुनारायणाम्भोजयोनयः ३अम्भोजयोनिः ब्रह्मा । ते वः पालयन्तु इत्यन्वयः । अत्रोद्देशानुरोधेन नारायणाम्भोजयोनिशंभवः इति अनूद्देशः युक्तः । तस्य अतिक्रमात् अपक्रमदोषोयम् । ननु अल्पाच्तरम् इत्यनेन शंभुशब्दस्य पूर्वनिपातः इति वाच्यम् । विष्णुर्ब्रह्म-६महेशास्ते सततं पालयन्तु वः । इति रचनाया औचित्यात् न तादृशी रचना निर्दोषेति दिक् ॥ १४५ ॥

क्वचिदयं न दोषो भवति इति दर्शयति--**यत्न इति** । संबन्धः अन्वयसंबन्धः तस्य विज्ञानहेतुः विशेषावबोधहेतुः । एतादृशः कोपि यत्नः यदि कृतः ३अक्रमेणानूद्दिष्टानां अपेक्षितपदे संबन्धावगमाय कविना यत्नो विहितश्चेत् इत्यर्थः । तादृशं क्रमलङ्घनं सूरयो विद्वांसः । दूषणं दोषावहम् । न प्राहुः ॥ १४६ ॥

निर्दुष्टमपक्रममुदाहरति--**बन्धुत्याग इति** । बन्धुत्यागादित्रिषु पदार्थेषु । आद्यन्तौ बन्धुत्यागदेशत्यागौ । आयतक्लेशौ दीर्घक्लेशविधायकौ । मध्यमः तनुत्यागः । ३क्षणिकज्वरः अल्पकालसंतापकः । तनुत्यागः श्रेयान् न बन्धुदेशत्यागौ इत्यर्थः । अत्र आद्यन्तौ इत्यनेन च मध्यमः इत्यनेन च अन्वयस्य स्पष्टावबोधनात् अक्रमिकयोरपि तयोर्न दुष्टता । यदि अत्र--द्वावेवात्यायतक्लेशौ तृतीयः क्षणिक-६ज्वरः । इति पाठः कल्पितः तर्हि तदपक्रमदुष्टं भवेत् । परं कविना तदन्वयक्लेशपरिहारायैव आद्यन्तौ इति मध्यम इति च निर्दिष्टमतो नात्र दोषः । अत्र प्रेमचन्द्रादिभिर्निरूपितं क्लिष्टमिव भाति ॥ १४७ ॥

शब्दहीनं लक्षयति--**शब्दहीनमिति** । लक्ष्यं शब्दः लक्षणं अनु-

---

१ यत्र. अ. २ °ज्ञाने. कपा; हेतुः को°. अ, कपा. ३ अदोषं सूरयो यथा. अ.

पदप्रयोगोऽशिष्टेष्टः[1] शिष्टेष्टस्तु[2] न दुष्यति ॥ १४८ ॥
अवते भवते बाहुर्महीमर्णवशक्करीम् ।

शासनं तस्य पद्धतिः मार्गः । अनेन लक्षणेन इदं लक्ष्यं सिद्धं अस्य लक्ष्यस्य ३संपादकमिदमेव लक्षणम् इत्यादिक्रमः । अनालक्ष्या अदृश्या लक्ष्यलक्षणपद्धतिः यत्र तादृशः । पदवाक्यादिप्रयोगः शब्दहीनः शब्दो हीनः अपकृष्टः असाधुतया निकृष्टः यत्र इति अन्वर्थशब्दहीनाख्यदोषवान् । तदुक्तमाग्नेये—शब्दशास्त्रविरुद्ध-६त्वमसाधुत्वं विदुर्बुधाः । इति । तथा आलक्ष्यलक्ष्यलक्षणपद्धतिरपि अशिष्टेष्टश्चेत् शिष्टानामनभिमतश्चेत् । सोपि प्रयोगः शब्दहीनदोषवान् । तथाहि—तथा मन्ये दैवतोस्य पिशाचो राक्षसोथ वा । इति । अत्र पुल्लिंगे प्रयुक्तो दैवतशब्दः—९पुंसि वा देवता स्त्रियाम्—इति कोशकारैरनुमतोपि शिष्टैः नपुंसक एव प्रयुज्यते । अतोयं लक्षणानुगतोपि शिष्टेष्टो न । तथा—सुरस्रोतस्विनीं हन्त हन्ति संप्रति सादरम् । इत्यत्र गमनार्थे हन्धातुः प्रयुक्तः । स तु हन् हिंसागत्योः इति १२धातुपाठे गमनार्थे पठितोपि शिष्टास्तस्मिन्नर्थे न तं उपयुञ्जते । अयमपि प्रयोगः शब्दहीनो बोद्धव्यः । एवं द्विविधं शब्दहीनदोषं लक्षयित्वा तदपवादं दर्शयति—**शिष्टेष्टस्तु न दुष्यति** इति । अनालक्ष्यलक्ष्यलक्षणोपि शिष्टैः इष्टः अङ्गीकृतश्चेत् । १५स न दुष्यति । यथा——

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखच्छविम् ।
कोशदण्डसमग्राणां किमेषां खलु दुष्करम् ॥ ( २·३६१ )

१८अत्र नलोकाव्ययनिष्ठाखलर्थतृणाम् ( पा० सू० २।३।६९ ) इति सूत्रेण षष्ठी-निषेधेपि शिष्टैः एषां इति प्रयोगस्याङ्गीकरणात् न दुष्टता । संबन्धसामान्यविव-क्षयोपपत्तिस्तु शिष्टाङ्गीकरणादेवेति बोद्धव्यम् । एतेन अप्रयुक्तासमर्थदोषौ शब्द-२१हीने एवान्तर्भूतौ ज्ञेयौ । शिष्टेष्टस्तु इत्यनेन तदपवादोपि संगृहीतः इति बोद्ध-व्यम् ॥ १४८ ॥

शब्दहीनमुदाहरति—**अवत इति** । हे महाराजन् भवते बाहुः तव भुजः । अर्णवाः शक्करी मेखला यस्या तां सार्णवामित्यर्थः । शक्करी मेखलानद्योः इति ३विश्वः । महीं अवते रक्षति । न जिज्ञासा एतत् मया प्रत्यक्षीकृतत्वात् तद्विषये

१ °योगः शिष्टे°. अ.  २ य शिष्टेष्टं हि. अ.

**महाराजन्न जिज्ञासा नास्तीत्यासां गिरां रसः ॥ १४९ ॥**

**दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान् ।**

**कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः ॥ १५० ॥**

**इत्यादिशास्त्रमाहात्म्यदर्शनालसचेतसाम् ।**

**अपभाषणवद्भाति न च सौभाग्यमुज्झति ॥ १५१ ॥**

जिज्ञासा नास्ति । इत्यासां एवंप्रकाराणाम् । गिरां वाचाम् । रसः चेतःसंतोषावहः धर्मः । नास्ति । अपप्रयोगेण चेतसो निर्वेदत्वात् सदर्थमपि वाक्यं नीरसं ६भवति । अत्र अपप्रयोगाः । अवते इत्यत्र आत्मनेपदम् । भवते इत्यत्र षष्ठीस्थाने चतुर्थी । अर्णवशक्करीम् इत्यत्र नद्यृतश्च ( पा० सू० ५।४।१५३ ) इत्यनेन भाव्यमानस्य कपोभावः । महाराजन् इत्यत्र राजाहःसखिभ्यष्टच् ( पा० सू० ९ ५।४।९१ ) इति टजूभावश्च ॥ १४९ ॥

शिष्टैस्तु न दुष्यति इति प्रतिप्रसूतं अदुष्टं शब्दहीनमुदाहरति---**दक्षिणाद्रेरिति** । दक्षिणाद्रेः उपसरन् मलयपर्वतं गच्छन् । मारुतः वायुः । चूत-३पादपान् आम्रान् । ललितं मन्दं यथा तथा आधूताः कम्पिताः ये प्रवालाङ्कुराः तैः शोभिनः शोभावतः कुरुते ॥ १५० ॥

उदाहरणं विशदयति--**इत्यादीति** । इत्यादि दक्षिणाद्रेरुपसरन् इत्यादिपदं शास्त्रमाहात्म्यं शास्त्रे व्याकरणशास्त्रे साधुशब्दप्रयोगे फलत्वेन कथितं ३यन्माहात्म्यम्---

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले ।

सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥

६इत्यादिभिः ( व्या. म. भा. १. २. १९. ) प्रपञ्चितं माहात्म्यमित्यर्थः । तस्य दर्शने अलसं मन्दाभियोगं चेतः येषां तेषाम् । पूर्वोक्तं वचः अपभाषणवत् भाति । परं सौभाग्यं न उज्झति । शिष्टैर्व्यवहृतत्वात् सौष्ठवं न जहाति । अत्र दक्षि-९णाद्रेः उपसरणक्रियायाः कर्मत्वात् कर्मणि द्वितीया ( पा० सू० २।३।२ ) इत्यनेन तत्र द्वितीयया भाव्यम् । षष्ठी तु दृश्यते । परं सा न दुष्टा । ईदृश-

१ °शास्त्रयाथार्थ्य°. अ. २ स. अ.

**श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः ।**
**तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥ १५२ ॥**
**स्त्रीणां संगी । तविधिमयमा । दित्यवंशो नरेन्द्रः ।**
**पश्यत्यक्लि । ष्टरसमिह शि । ष्टैरमेत्यादि दुष्टम् ।**
**कार्याकार्या । ण्ययमविकला । न्यागमेनैव पश्यन्**
**[1]वश्यामुर्वीं वहति नृप इत्यस्ति चैवं प्रयोगः ॥ १५३ ॥**

स्थले शिष्टैः संबन्धसामान्यविवक्षया षष्ठ्याः अङ्गीकरणात् । अपरे तु दक्षिणाद्रे- १२इति पञ्चम्यन्तमेव मन्वते । दक्षिणाद्रेः उपसरन् आगच्छन् इति तेषामभिप्रायः । तदा नायं दोषः । परं तु उपसरन् इत्यत्र सर्तेर्धावादेशविधानादुपधावन् इति भाव्यम् । परं शिष्टाः शीघ्रगमने तमादेशं मन्यन्ते । अत्र ललिताधूतत्वेन मन्द- १५गमनार्थे सृधातुरिति नोपसरन्निति वैरस्यं जनयति । तथात्र प्रवालाङ्कुरशोभोः त्पादनं परार्थमेव इति कुरुते इत्यत्र परस्मैपदेन भाव्यम् । परं स निमयश्चेतन- विषयः । अत्र वायुस्तु अचेतनः इति न आत्मनेपदप्रयोगे दोषः इत्याहुः ॥१५१॥

यतिनिरूपणपूर्वकं यतिदोषमाह—**श्लोकेष्विति** । श्लोकेषु नियतं छन्दः शास्त्रविधायकैः निश्चितं स्थानं यस्य सः तम् । पदच्छेदं पदस्य सुप्तिङन्तरूपस्य ३छेदः विरामः तं यतिमाहुः । तदुक्तं छन्दोमञ्जर्याम्—यतिर्जिह्वेष्टविश्रामस्थानं कवि- भिरुच्यते । इति । तदपेतं तद्यतिशून्यं पदस्य मध्ये एव जिह्वाविश्रामयुतं इत्यर्थः । तद् यतिभ्रष्टदोषवद् । ज्ञेयम । दोषत्वे कारणं दर्शयति- **श्रवणोद्वेजनम्** इति । ६तदाह वामनः—विरसविरामं यतिभ्रष्टम् । (२।२।३) इति ॥१५२॥

यतिभ्रष्टमपवादसहितमुदाहरति- **स्त्रीणामिति** । अयं आदित्यवंश्यः सूर्य- वंशोद्भवः । नरेन्द्रः शिष्टैः अमा सह । स्त्रीणां विलासीनीनाम् । अक्लिष्टाः विपुला ३रसा यत्र तादृशम् । संगीतस्य नृत्यवाद्यगीतस्य । विधिं विधानम् । पश्यति । इत्यादि पद्यविधानं दुष्टम् यतिभङ्गात् । तथाहि इदं मन्दाक्रान्तावृत्तम् । तत्र च मन्दाक्रान्ता म्भौ न्तौताद्गौग्समुद्रर्तुस्वराः । इति पिङ्गलेन चतुर्थेक्षरे ततः षष्ठे ततः सप्तमे च ६यतिरुपदिष्टा । चतुर्थाक्षरे ततः षष्ठक्षरे च पठनानुकूलतया यतिः शास्त्रोप- दिष्टा । सा चात्र चतुर्थदशमाक्षरयोः न कृता । तेन च श्रवणोद्वेजनं भवति

---

१ वंश्याम्. ब.प.

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा ।
तथा संधिविकारान्तपदमेवेति[1] वर्ण्यते ॥ १५४ ॥
तथापि कटु कर्णानां[2] कवयो न प्रयुञ्जते ।
ध्वजिनी तस्य राज्ञः के । तूदस्तजलदेत्यदः ॥ १५५ ॥

इति यतिभ्रष्टमेतत् । क्वचित् संधिविकारेण श्लिष्टपदमध्ये यतिश्चेत् सा न श्रवणोद्वेजनी भवति इति न तत्र दोष इति दर्शयति—**कार्याणीति** । अयं नृपः अविकलानि संपूर्णानि । कार्याकार्याणि आगमेनैव शास्त्रेणैव । पश्यन् वश्यां स्वायत्तां अनुरक्तां च । उर्वीं वहति धारयति । इत्येवं एतादृशः प्रयोगः अस्ति । यतिभ्रष्टदोषशून्यत्वेनाभिमतः इति भावः ॥ १५३ ॥

पूर्वदर्शितसदोषनिर्दोषयतिभ्रंशमुपपादयति—**लुप्त इति** । पदान्ते पदान्तावयवस्य लोपे सति । शिष्टस्य अवशिष्टभागस्य । पदत्वं निश्चितम् । यथा—रम्या रामा मधुरवचना हृद्यवेशा जयन्ति । इत्यादिस्थले पदान्तावयवीभूतविसर्गस्य लोपे सति अवशिष्टस्य पदत्वं न व्याहतं भवति । न यतिभ्रंशश्च कल्प्यते । तथा तद्वत् । संधिः स्वरद्वयस्य वर्णद्वयस्य वा विशेषसंश्लेषः तदर्थं ये विकाराः आदेशागमलोपरूपाः ते अन्ते पुरोभागे यस्य तादृशं पदावयवं पदम् । एवं इति । वर्ण्यते छन्दःशास्त्रज्ञैरङ्गीक्रियते । केचित्तु लुप्ते पदान्ते इत्यस्य विभक्त्यादिलोपे सति अवशिष्टं राजा वारि कुरु पच इत्यादिकं पदं शास्त्रकारैर्निश्चितमस्ति । तथा संधिविकारे परतः पूर्वं अवशिष्टं पदं मन्वते इत्याहुः । तादृशपदे च यतिः स्याचेन्न न तत्र यतिभ्रंशदोषः । तथा च कार्याकार्येत्यादौ संधिविकारान्तत्वान्न पदत्वहानिः न च यतिभ्रंशो दोषः । स्त्रीणां संगीतेत्यादौ न तथाविधपदत्वम् । अतः यतिभ्रंशदोषस्य अवकाशोऽस्ति ॥ १५४ ॥

स्वरसंधिकृतप्रतिप्रसवं संकोचयति—**तथापीति** । तथापि पूर्वदर्शितप्रकारेण संधिविकारे पूर्वावशिष्टस्य पदत्वस्वीकारेऽपि । तस्य राज्ञः ध्वजिनी सेना । केतुभिः रथध्वजैः । उदस्ता उत्क्षिप्ता जलदा यथा तथाविधा । अत्युच्चकेतुभिः जलदोत्क्षेपविधायिनी सेना वर्तते इति शेषः । इत्यदः एतादृशं संधिविकारान्तपदम् । कर्णानां कटु श्रवणवैरस्यावहम् । अतः कवय एतादृशयतिभ्रंशं न निर्दोषं मत्वा

१ °रान्तं पदम्. अ, ब, क. २ °वर्णानाम्. कप।; कटुकर्णं तत्. बप।

वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः ।
तत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः ॥ १५६ ॥
इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।
सहकारस्य किस[ल]यान्यार्द्राणीत्यधिकाक्षरम् ॥ १५७ ॥
कामेन बाणा निशाता विमुक्ता
मृगेक्षणास्वित्ययथागुरुत्वम् ।
मदनबाणा निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥ १५८ ॥

प्रयुञ्जते । ईदृशं यतिभ्रंशं दोषतया परिहरन्तीत्यर्थः । एवं च संधिविकारान्तं पदं श्रवणकटु भवति वा न वेति विचार्य तदनुरोधेन सदोषनिर्दोषत्वं ज्ञेयम् ॥१५५॥

भिन्नवृत्तं लक्षयति—**वर्णानामिति** । यत्र वृत्ते । वर्णानां वृत्तनियमिताक्षराणां मध्ये । निर्धारणे षष्ठी । न्यूनताधिक्ये वृत्तनियतसंख्यापेक्षया न्यूनाधिकत्वम् । तथा गुरुलघूनां नियतगुरुलघुक्रमस्य अयथास्थितिः विपर्ययेणावस्थानम् । तत्र पद्ये । तत् तादृशं दुष्टम् । भिन्नवृत्तं स्यात् भिन्नवृत्तदोषो भवेत् । अथवा तद् वाक्यम् । भिन्नवृत्तं भिन्नवृत्तदोषवत् । स्यात् । अयं दोषः सुनिन्दितः विशेषनिन्दितः । छन्दोनभिज्ञाने सर्वे उपहसन्ति । अतोयं दोषो विशेषतः परिहरणीयः ॥१५६॥

तत्र न्यूनाधिकाक्षरं उदाहरति—**इन्दुपादा इति** । शिशिराः शीतलाः । इन्दुपादाः चन्द्रकिरणानि । स्पृशन्ति । अत्र ऊनवर्णता प्रथमचरणे सप्ताक्षरत्वात् । अनुष्टुभस्त्वष्टाक्षरनियमात् । सहकारस्य आम्रस्य । किसलयानि पल्लवाः । आर्द्राणि स्निग्धानि । सन्तीति शेषः । इति अधिकाक्षरम् । नवाक्षरत्वादेको वर्णोधिकः ।१५७।

गुरुलघुक्रमभङ्गमुदाहरति—**कामेनेति** । कामेन मृगेक्षणासु निशाता बाणा विमुक्ता इत्यन्वयः । इति अयथागुरुत्वं छन्दःशास्त्रनियमाविरुद्धं गुरुत्वम् । तथाहि अत्र प्रथमचतुर्थचरणौ इन्द्रवज्रालक्षणोपेतौ । द्वितीयतृतीयौ च उपेन्द्रवज्रालक्षणोपेतौ । अतश्च उपजातिवृत्तमेतत् । तत्रैवं सति प्रथमपादे सप्तमाक्षरं गुरु विद्यते तच्च लक्षणे न घटते । यतः स्यादिन्द्रवज्रा ततजास्ततो गौ इति इन्द्रवज्रालक्षणात्सप्तमाक्षरस्य लघुत्वमपेक्ष्यते । अयथालघुत्वं दर्शयति—**मदनेति** ।

१ यत्र. अ, क. २ निशिता. अ, ब. ३ स्मरस्य. ब; स्मरेण. बपा. ४ मृगेक्षणा°. अ.

**न संहितां विवक्षामीत्यसंधानं पदेषु यत् ।**
**तद्विसंधीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥ १५९ ॥**
**मन्दानिलेन चलता[1] अङ्गनागण्डमण्डले ।**

मदनस्य बाणाः निशिताः वामेक्षणासु पतन्ति इति अयथालघुत्वम् । यतः उपेन्द्रवज्रा जतजास्ततो गौ इति उपेन्द्रवज्रालक्षणप्राप्तः पादादौ जगणः द्वितीयाक्षरलघुत्वे न संभवतीत्यर्थः ॥ १५८ ॥

विसंधिकं लक्षयति—**न संहितामिति** । संहितां वर्णानामतिशयितसंनिधिम् । न विवक्षामि—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

इति वैयाकरणनियमानुसारेण वाक्ये संहितायाः विवक्षाधीनत्वान्नाहं तस्य विवक्षां करोमि इति संकल्प्य । पदेषु पदावयववर्णेषु । यत् असंधानं तत्तन्नियमानुरोधेन आदेशादिकं विधायासंयोजनम् । तद् वाक्यम् । विसंधि विगतः संधिः यस्मात् एतादृशम् । बोद्धव्यम् । अयं भावः । वाक्ये संहितायाः पुरुषाधीनत्वेन वैकल्पिकत्वं स्वीकार्यम् । तथा च वाक्ये संधिकार्याकरणं यद्यपि व्याकरणशास्त्रे न दुष्टतया परिगणितं तथापि साहित्यशास्त्रे विसंधिवाक्यस्य पद्ये विशेषतः वैरस्योत्पादकतया सदोषत्वं स्वीकार्यमेव । गद्ये तु न तादृशो नियमः । तत्र वक्तुर्यत्र विश्रान्तिरपेक्ष्यते तत्र संन्धेरविवक्षा एव युक्ता । यथा हे सखे एहि अनुगृहाणेमं जनम् इत्यादौ । पद्येपि विसंधेः कुत्रचिदनुमतिं दर्शयति—**न प्रगृह्यादिहेतुकम्** इति । प्लुतप्रगृह्या अचि नित्यम् ( पा० सू० ६।१।१२५ ) इत्यनेन यत्र संध्यभावः तत्पदयोः विसंधि पद्येवस्थानं न दोषावहम् । अयं च दोषाभावः सकृत्प्रयोगे । असकृत्प्रयोगे तु दोषावह एव श्रवणोद्वेजकत्वात् । यथा—कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः । इति । साहित्यशास्त्रेपि श्लोकार्धान्ते संहिताविरामः सर्वसंमतः । विसंधिपदेन अर्वाचीना अश्लीलत्वं कष्टत्वं चेति दोषद्वयं स्वीकुर्वन्ति । तदुदाहरणानि काव्यप्रकाशादावनुसंधेयानि ॥१५९॥

विसंधिमुदाहरति—**मन्दानिलेनेति** । नभसि वियति । चलता मन्दानिलेन

---

[1] चरता. अ; अमुना. क.

**लुप्तमुद्भेदि[1] घर्माम्भो नभस्यस्मद्वपुष्यपि[2] ॥ १६० ॥**
**मानेर्ष्ये इह[3] शीर्येते स्त्रीणां हिमऋतौ प्रिये ।**
**आसु[4] रात्रिष्विति प्राज्ञैराम्नातं[5] व्यस्तमीदृशम्[6] ॥ १६१ ॥**
**देशोऽद्रिवनराष्ट्रादिः[7] कालो रात्रिंदिवर्तवः[8] ।**
**नृत्यगीतप्रभृतयः[9] कलाः कामार्थसंश्रयाः ॥ १६२ ॥**

अङ्गनायाः गण्डमण्डले कपोलतले । उद्भेदि समुत्पन्नम् । घर्माम्भः स्वेदोदकम् । लुप्तम् । तथा अस्मद्वपुषि अपि उद्भिन्नं घर्माम्भः लुप्तम् । अत्र प्रथमपादान्ताकारस्य द्वितीयपादाद्यकारेण संधिर्न कृतः । संधौ वर्णन्यूनतापत्तेः । अतः एतत् विसंधिदोषग्रस्तम् ॥ १६० ॥

प्रगृह्यादिना अनुमतं संधिविश्लेषं दर्शयति--**मानेर्ष्ये इहेति** । हे प्रिये इह हिमऋतौ अस्मिन् हेमन्ते । आसु रात्रिषु अतीवशीतलदीर्घासु रजनीषु । स्त्रीणां मानेर्ष्ये मानः प्रणयकोपः ईर्ष्या नायकापराधजनितकोपः तौ उभावपि । शीर्येते क्षयं गच्छतः । मानेर्ष्ये परित्यज्य नार्यः प्रियतममालिङ्गन्तीत्यर्थः । ईदृशं व्यस्तं विसंधि । प्राज्ञैः साहित्यकोविदैः । आम्नातम् विहितम् । मानेर्ष्ये इह इत्यत्र ईदूदेद्द्विवचनं प्रगृह्यम् ( पा० सू० १।१।११ ) इत्यनेन प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यम् ( पा० सू० ६।१।१२५ ) इति प्रकृतिभावः । तथा हिमऋतौ इत्यत्रापि ऋत्यकः ( पा० सू० ६।१।१२८ ) इति प्रगृह्यसंज्ञा ॥ १६१ ॥

देशकालकलालोकन्यायागमविरोधि च । इति ( ३·१२६ ) पूर्वमुद्दिष्टानां पदार्थानां निरूपणपुरःसरं तद्विरोधं दर्शयति—**देशोऽद्रिवनेति** । अद्रिवनराष्ट्रादिः देशः । आदिशब्देन समुद्रपत्तनग्रामादीनां संग्रहः । रात्रिंदिवर्तवः बहुवचनेन माससंवत्सरादिसंग्रहः । कामार्थयोः संश्रयाः आश्रयभूताः । कलाभिः कामार्थलाभाः भवन्ति अतस्तदाश्रया इति भावः । कलाः चतुःषष्टिसंख्याका नृत्यगीतप्रभृतयः ॥ १६२ ॥

---

१ °द्भेदघ. अ. २ °स्यस्ममनस्यपि. अ, बपा, क. ३ ईदृशी स्त्रीणां नास्ताम् हिम°. बपा. ४ अमू आदिष्विति. बपा. ५ आज्ञातम्. अ, क; ज्ञातव्यं. कपा. ६ नाङ्गमी°. अ. ७ अस्माच्छ्लोकात्परतः कपुस्तके अधिकं –

आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ ३९ ॥

८ देशो हि वन°. अ. ९ नक्तंदिव°. अ. कपा. १० नृत्त°. अ.

चराचराणां भूतानां[1] प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥ १६३ ॥
तेषु तेष्वयथा[2]रूढं यदि किंचित् प्रवर्तते ।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते ॥ १६४ ॥
कर्पूरपादपामर्शसुरभिर्मलयानिलः ।
कलिङ्गवनसंभूता मृगप्राया मतङ्गजाः ॥ १६५ ॥
चोला[3]ः काला[4]गुरुश्या[5]मकावेरीतीरभूमयः[6] ।

**चराचराणामिति** । चराचराणां स्थावरजंगमानाम् । भूतानां प्रवृत्तिः व्यवहारः । लोकसंज्ञिता लोक इति संज्ञया व्यवहृतास्तीति भावः । हेतुः इष्टार्थसाधने पुरस्कृता युक्तिः । विद्या विदन्ति अनया इति विद्या शास्त्रं हेतुमूलिका विद्या हेतुविद्या दर्शनशास्त्रमिति भावः । तत्र आगमं विना केवलं हेतुपुरस्कारेणैव पदार्थानां निरूपितत्वात् । तदात्मकः तद्रूपः । न्यायः बुद्धार्हतादीनां प्रबन्धाः इत्यर्थः । स्मृतिसहिता श्रुतिः । आगमः शैवाद्यागमः ॥ १६३ ॥

**तेष्विति** । तेषु देशकालादिषु । अयथारूढं प्रसिद्धिविरुद्धम् वस्तुस्थितिशून्यमित्यर्थः । यदि किमपि कवेः । प्रमादात् अनवधानात् । प्रवर्तते कविभिर्वर्ण्यते । तदा एवंप्रकारकं वाक्यमेतत् देशविरोधि कालविरोधि इति उच्यते । तदुक्तं वामनेन—देशकलास्वभावविरुद्धार्थानि लोकविरुद्धानि (२.२.२३,२४) । कलाचतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि इति ॥ १६४ ॥

देशविरोधमुदाहरति—**कर्पूरेति** । कर्पूरपादपानां आमर्शः संसर्गः तेन सुरभिः । मलयानिलः मलयपर्वतसंबन्धी वायुः । कर्पूरपादपा न मलयपर्वते वर्तन्ते । स कृष्णागरूत्पत्तिस्थानतया प्रसिद्धः । कर्पूरपादपास्तु चीनदेशे । इति मलयाद्रिरूपदेशविरोधोदाहरणम् । कलिङ्गवनसंभूताः कलिङ्गोत्पन्ना इत्यर्थः । मतङ्गजा मृगप्रायाः अतिह्रस्वाकाराः । मतङ्गजाः कलिङ्गवने न संभवन्ति । तेषामुत्पत्तिस्थानं सिंहलद्वीपादि । इति कलिङ्गवनरूपदेशविरोधः १६५

राष्ट्ररूपदेशविरोधं दर्शयति—**चोला इति** । चोलाः द्रविडदेशनिकट-

---

१ लोकानां. अ. २ यथा भूतम्. कपा. ३ कालाः. अ. ४ °गरु°. क. ५ श्यामाः. बपा.
६ न मेरुवनसंछन्नाः. इति पूर्वार्धे बपा, केरलाः कुङ्कुमारुणाः. इति उत्तरार्धे बपा.

**इति देशविरोधिन्या वाचः प्रस्थानमीदृशम् ॥ १६६ ॥**

**पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।**

**मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ १६७ ॥**

**श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः ।**

**हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥ १६८ ॥**

वर्तिनः प्रदेशाः। कालागुरुः कृष्णागुरुः तेन श्यामाः असिताः कावेरीतीरभूमयः ३येषां तादृशाः। कावेरीतीरेषु न कृष्णागुरुचन्दनाः जायन्ते इति राष्ट्ररूपदेश-विरोधः इति प्रेमचन्द्रशर्माणः। वयं तु न चौलेषु कावेरी प्रवहति इत्यपि देश-विरोधः इति मन्यामहे। देशविरोधमुपसंहरति—**इतीति**। इति एवम्। देशविरोधिन्याः ६वाचः प्रस्थानं स्थितिः। ईदृशं अस्ति। तत् कविना परिहार्यमिति भावः।१६६।

कालविरोधं दर्शयति—**पद्मिनीति**। नक्तं रात्रौ। पद्मिनी उन्निद्रा प्रफुल्ला। अह्नि दिवा। कुमुद्वती स्फुटति विकसति। मधुः वसन्तः। उत्फुल्लः प्रफुल्लः ३निचुलः वेतसविशेषः यत्र तादृशः। निदाघः उष्णकालः। मेघेन दुर्दिनानि अभ्राच्छादितदिनानि यस्मिन् एतादृशः॥ १६७॥

**श्रव्येति**। वर्षाः प्रावृट्। श्रव्याः हंसानां गिरः यासु एतादृश्यः। शरदः मत्ता बर्हिणो यासु ताः। हेमन्तः निर्मलादित्यः हिमाच्छादनविरहेण सुप्रकाशः ३आदित्यः यस्मिन् एतादृशः। शिशिरः श्लाघ्यः सेवनाय प्रशस्यः चन्दनो यत्र एतादृशः। अत्र पद्मिन्या दिवा एव विकासः इति रात्रिविकासवर्णनं रात्रि-रूपकालविरुद्धम्। कुमद्वत्या रात्रौ एव विकासः इति दिवाविकासवर्णनं दिवस-६रुपकालविरुद्धम्। निचुलमञ्जर्याः विकासः प्रावृषि तन्मधौ वर्णनं मधुऋतुरूप-कालविरुद्धम्। निदाघे मेघस्य असंभवात् वर्षास्वेव तेषां विद्यमानत्वात् इदं निदाघरूपऋतुकालविरुद्धम्। हंसगिरः श्रव्यत्वं शरत्सु एव न तु वर्षासु। तासु ९तेषां नष्टमदत्वात्। अतः एतद् वर्षाऋतुकालविरुद्धम्। मयूराणां मत्तता वर्षासु एव न तु शरदि इति पूर्ववत् शरदृतुकालविरोधः। हेमन्ते सूर्यमण्डलं हिमावृतं इति तदभावर्णनं हेमन्तऋतुकालविरुद्धम्। शिशिरे शीततताया वैपुल्यात्

---

१ हिमजाड्यकृत्. बग. २ श्राव्य°. अ. ३ शरदामत्तबर्हिणी. अ. ४ °नन्दनः. अ.

**इति कालविरोधस्य दर्शिता गतिरीदृशी ।**
**मार्गः कलाविरोधस्य[1] मनागुद्दिश्यते यथा ॥ १६९ ॥**
**वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।**
**पूर्णसप्तस्वरः[2] सोयं भिन्नमार्गः प्रवर्तते ॥ १७० ॥**

१२चन्दनचर्चावर्णनं विरुद्धम् इति शिशिरऋतुकालविरुद्धम् । एवमत्र श्लोकद्वयेन कालविरोधा दर्शिता इति ज्ञेयम् ॥ १६८ ॥

कालविरोधमुपसंहरन् कलाविरोधं प्रस्तौति—**इतीति** । इति कालविरोधस्य गतिः पद्धतिः । ईदृशी एवम् । दर्शिता । इति शब्दः समाप्तिसूचकः । ३कलाविरोधस्य मार्गः मनाक् स्वल्पम् । उद्दिश्यते दर्श्यते । चतुःषष्टिकलानां विरोधदर्शने ग्रन्थविस्तारः स्यादतः स्वरूपावगमाय मनाक् उदाह्रियते इति भावः ।१६९।

कलासु नाट्यस्य प्राधान्यात् तद्गतरसविरोधं दर्शयति—**वीरेति** । वीरशृङ्गारयोः वीररसशृङ्गाररसयोः । स्थायिनौ चित्तवृत्तिविशेषवासनारूपौ । स्थायि३भावसामान्यलक्षणं तु—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोसौ भावः स्थायीति संज्ञितः ॥ (सा. द. ३।१७४)

६इति । तथा च रसस्य आप्रादुर्भावतिरोभावं स्थिरतया वर्तमानः चित्तवृत्तिविशेषवासनारूपः भावः स्थायिपदवाच्यः । स च रतिहासादिस्वरूपेण नाट्ये अष्टविधः परिगृहीतोस्ति । शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतसंज्ञकानां अष्टानां ९रसानां रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयाख्याः यथाक्रमं स्थायिभावाः भरतादिभिर्निश्चिताः । एतन्नियमविरोधेन वर्णनं स्याच्चेत् तर्हि तत् कलाविरुद्धम् । अत्र तु वीरशृङ्गारयोः क्रोधविस्मयौ स्थायिनौ उक्तौ । भरतादिनाट्यशास्त्रकारमतेन १२तु तयोः स्थायिनौ उत्साहरत्याख्यौ । क्रोधविस्मयौ तु रौद्राद्भुतयोः इति । तथा चात्र नाट्यकलाविरुद्धत्वेन वर्णितत्वात् कलाविरोधोयम् । गीतरूपायां कलायां विरोधं दर्शयति–**पूर्णसप्तस्वर इति** । पूर्णाः साकल्येन प्रयुक्ताः सप्तस्वराः निषा१५दर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्च इति संगीतशास्त्रप्रसिद्धाः यत्र सः । एतादृशः सोयं भिन्नमार्गः भिन्नः तत्तत्कालनिषिद्धस्वरान्तरासंकीर्णः मार्गः तत्तत्काल-

---

१ काल°. अ. २ पूर्णः. अ.

इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम् ।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥ १७१ ॥
आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः ।
गुरुसारोयमेरण्डो निःसारः खदिरद्रुमः ॥ १७२ ॥
इति लौकिक एवायं विरोधः सर्वगर्हितः ।
विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते ॥ १७३ ॥

विहितस्वरविशेषप्रयोगः । प्रवर्तते । तथा च असंकीर्णस्वरप्रयोगस्य पूर्णसप्तस्वरत्वं विरुद्धम् । अतः नाट्यशास्त्रस्थगीतकलानियमविरुद्धत्वात् कलाविरुद्धमेतत् ॥१७०॥

कलाविरोधमुपसंहरति—**इत्थमिति** । इत्थं अनेनैव प्रकारेण । कलाचतुःषष्टिविरोधः चतुःषष्टिकलासु विरोधः शास्त्रविरुद्धवर्णनम् । साधु सम्यक् । नीयताम् स्वयम् ऊह्यताम् । कास्ताः चतुःषष्टिकला इति चेत् तस्याः चतुःषष्टिप्रकारायाः कलायाः । कलापरिच्छेदे एतन्नामकग्रन्थविशेषे । रूपं आविर्भविष्यति स्पष्टं भविष्यति । स ग्रन्थः कलारूपावगमायैव प्रवृत्तः । अतस्तदध्ययने सर्वासां चतुःषष्टिकलानां स्वरूपावगमः साकल्येन भवेदित्यर्थः । अनेनायं कलापरिच्छेदो दण्डिविरचित इति कैश्चिदूह्यते ॥ १७१ ॥

लोकविरोधमुदाहरति—**आधूतेति** । आधूताः केसराः ग्रीवासटाः येन तादृशः हस्ती । तथा तीक्ष्णं शृङ्गं यस्य स तुरंगमः । तथा गुरुः महान् सारः सामर्थ्यं यस्य एतादृशः एरण्डः । खदिरद्रुमश्च अयं निःसारः । इत्यत्र लोकविरोधः प्रसिद्धः स्पष्टः एव । तत्र पूर्वार्धे जङ्गमवस्तुविषयकः उत्तरार्धे स्थावरविषयक इति भेदः ॥ १७२ ॥

लौकिकविरोधमुपसंहरन् हेतुविद्याविरोधं प्रस्तौति—**इतीति** । इति एवं उक्तः । लौकिकः एव विरोधः सर्वथा गर्हितः सर्वगर्हितः अस्ति । अयं वर्णयितुरवैदग्ध्यं नितान्तं दर्शयति इति तत्परिहारे कविना सावहितेन भाव्यम् । न्यायाख्यासु पूर्वमुद्दिष्टासु न्यायसंज्ञकासु । हेतुविद्यासु बुद्धादिदर्शनेषु । विरोधः निदर्श्यते उदाहरणेन स्पष्टीक्रियते ॥ १७३ ॥

---

१ °षष्टौ. अ, कपा. २ काले. अ, ३ उरु°. कपा.

सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।
तथा[1]हि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥ १७४ ॥
कापिलैरसदुद्भूतिः स्थान एवोपव[2]र्ण्यते ।
असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवा[3]ः ॥ १७५ ॥
ग[4]तिर्न्यायविरोधस्य सै[5]षा सर्वत्र दृश्यते ।
अथागमविरोधस्य प्रस्थानमुपदि[6]श्यते ॥ १७६ ॥

सौगतदर्शनरूपन्यायविरोधमाह—**सत्यमेवेति** । सुगतः गौतमः । संस्कारान् वस्तुनः प्रत्यक्षे सति अन्तःकरणे समुत्पद्यमानान् भावनाख्यान् धर्मान् । अविनश्वरान् नाशप्रतियोगिताशून्यान् नित्यान् । यदाह तत् साधु । उक्तार्थं स्वानुभवेन द्रढयति । सा पूर्वमुपभुक्ता । चकोराक्षी अद्यापि बहुतरकालापगमेपि । मे हृदि स्थितैव सततस्मरणप्रवाहेन विषयीभवतीत्यर्थः । स्मृतिर्हि संस्कारजन्या । तथा च संस्कारस्य अनश्वरत्वात् स्मृतिरपि अनश्वरा इति युक्तमेव तस्या हृदि स्थितिः । सौगतानां हि सर्वं क्षणिकम् इति राद्धान्तः । तथा च वासनानामपि तेषां मते क्षणिकत्वम् । तद्विरुद्धत्वात् सौगतन्यायविरुद्धमेतत् ॥ १७४ ॥

सांख्यदर्शनरूपन्यायविरोधमुदाहरति—**कापिलैरिति** । कापिलैः सांख्यैः । असदुद्भूतिः असतः शून्यात् उद्भूतिः प्रपञ्चोद्भवः । तथा असतां दुराचारिणां उद्भूतिः उत्पत्तिः । उपवर्ण्यते कथ्यते । तत् स्थाने एव युक्तमेव । यस्मात् यतः । अस्माभिः असतामेव दुर्जनानामेव । उद्भवाः उत्पत्तयः । दृश्यन्ते जगति अवलोक्यन्ते । अत्र असच्छब्दस्य श्लिष्टत्वेन पूर्वापरवाक्यार्थयोर्हेतुहेतुमद्भावः । तत्र सांख्यानां सतः सदेव जायते इति राद्धान्तः । बौद्धस्तु असतः सज्जायते इति मन्यते । अतः सांख्यसिद्धान्तविरुद्धत्वादयं सांख्यदर्शनरूपन्यायविरोधः ॥ १७५ ॥

न्यायविरोधमुपसंहरति—**गतिरिति** । न्यायविरोधस्य सैषा गतिः सौगतसांख्ययोः प्रदर्शिता रीतिः । सर्वत्र वैशेषिकादिषु अपि दृश्यते साहित्योदधेः सूक्ष्मेक्षिकया आलोचने कृते उपलभ्यते । सैषान्यत्रापि दृश्यते इति पाठस्तु

---

१ तथैव. अ. २ °वर्णिता. अ. ३ अस्मिंश्छ्लोके पूर्वोत्तरार्धयोर्व्यत्यासः, तत्र च उभयोर्मध्ये ' तद्रूपं तत्रधीमद्भिर्विस्तरेणावगम्यताम् । ' इत्यर्धमधिकं अ पुस्तके दृश्यते । ४ नीतिः. अ, रीतिः. कपा. ५ सैषाप्यन्यत्र दृश्यताम्. बपा. ६ दर्शयिष्यते. अ.

**अनाहिताग्नयोप्येते जातपुत्रा वितन्वते ।**
**विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥ १७७ ॥**
**असावनुपनीतोपि वेदानधिजगे गुरोः ।**
**स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ १७८ ॥**
**विरोधः सकलोप्येष कदाचित् कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १७९ ॥**

समीचीनः स्यात् । आगमः सस्मृतिः श्रुतिः तस्य विरोधस्य । प्रस्थानं पद्धतिः । उपदिश्यते प्रदर्श्यते ॥ १७६ ॥

तत्र श्रुतिविरोधमुदाहरति—**अनाहितेति** । अनाहिताग्नयः अकृताग्न्याधाना अपि । तथा जातपुत्राः पुत्रिणः । अक्लिष्टाचारः सदाचारः भूषणं येषामेतादृशाः । विप्राः वैश्वानरीं विश्वानरो भूतसमष्ट्यात्मको विराट्पुरुषः तत्संबन्धिनीम् । इष्टिं यागम् । वितन्वते आचरन्ति । अत्र कृताग्न्याधानानामेव वैश्वानरयागाधिकारादनाहिताग्नीनां तद्वर्णनं श्रुतिविरुद्धमिति प्रेमचन्द्राः । परे तु अजातपुत्रा इति पदच्छेदं कृत्वा वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते । ( जैमिनिन्यायमाला ४-३-३९ ) इति पुत्रोत्पत्त्यनन्तरं वैश्वानरीष्टेः अधिकारादपुत्रकेण तद्विधानं श्रुतिविरुद्धमिति मन्वते ॥ १७७ ॥

स्मृतितिरोधं दर्शयति—**असाविति** । असौ कुमारः अनुपनीतोपि उपनयनसंस्कारशून्योपि । वेदान् अधिजगे अधीतवान् । उक्तार्थं दृष्टान्तेन द्रढयति । स्वभावशुद्धः प्रकृतिनिर्मलः । स्फटिकः संस्कारं शुद्धिसंस्कारम् । न अपेक्षते । अत्रानुपनीतस्य वेदाध्ययनं स्मृतिविरुद्धम् । तथाच मनुः—

अकृतव्रतबन्धे तु गुरावुपरते सति ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ (म. अ. २-१७२)

इति ॥ १७८ ॥

एतावदुक्तविरोधः क्वचिद्गुणो भवतीत्याह—**विरोध इति** । सकलः देशकालकलालोकन्यायागमात्मकः । एष विरोधः कदाचित् कविकौशलात् कविप्रतिभामाहात्म्येन । विरुद्धार्थस्यापि वर्णनेन वैचित्र्योद्भावनात् । दोषगणनां दोषेषु

---

१ राजपुत्रा. अ.

[1]तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।
[2]आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥ १८० ॥
राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
[3]धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥ १८१ ॥

गणनां संख्यानम् । उत्क्रम्य परित्यज्य । गुणवीथीं गुणस्य सरणीम् । विगाहते गुणत्वं भजते इत्यर्थः ॥ १७९ ॥

देशविरोधस्य गुणत्वं प्रकटयति—**तस्येति** । तस्य कस्यापि वर्णनीयस्य । राज्ञः प्रभावेन तदुद्यानानि तानि प्रसिद्धानि उद्यानानि । आर्द्रांशुकान्येव ३ जलक्लिन्नसूक्ष्मवस्त्राण्येव प्रवालाः पल्लवाः येषां तादृशानाम् । सुरशाखिनां कल्पवृक्षाणाम् । आस्पदं स्थानम् । जज्ञिरे जातानि । अत्रोद्देशानुरोधेन बहुवचनम् । तदुद्याने विलासिन्यः जलक्रीडाविश्रान्ताः जलार्द्राणि स्वांशुकानि जलशोषणार्थं ६ कल्पशाखिशाखायां विस्तारयामासुः इति भावः । अत्र स्वर्द्रुमानां भूलोकोद्यानेष्ववस्थितिर्वर्णिता । इति देशविरोधः । परं तादृशेन वर्णनकौशलेन प्रस्तुतस्य नृपस्य विभूतिमाहात्म्यं सविशेषं बुद्ध्यारूढं भवति । तेन च उदात्तालंकारस्य ९ सिद्धिः । इति नात्रायं देशविरोधः दोषाय ॥ १८० ॥

कालविरोधस्य गुणत्वं दर्शयति—**राज्ञामिति** । राज्ञां प्रतिपक्षीभूतनृपाणाम् । विनाशपिशुनः भाविविनाशसूचकः । खरमारुतः प्रतीपश्चण्डो वातः । ३ कदम्बरजसा कदम्बकुसुमरेणुभिः । सह सप्तच्छदोद्गमान् सप्तच्छदपुष्पाणि । धुन्वन् आकम्पयन् । चचार ववौ । विजिगीषोर्यात्रासमयोद्भूतस्य वायोः वर्णनमिदम् । स च वायुः शत्रोः प्रतिकूलः संमुखत्वात् । प्रस्तुतस्य राज्ञस्तु अनुकूलः पृष्ठानु- ६ गामित्वात् इति ऊह्यम् । तत्र यात्राकालः शरदृतुः तत्र सप्तच्छदोद्गमः उपपन्नः तस्मिन् समये एव तस्य कुसुमोद्गमात् । परं कदम्बरजसा सूचितः तन्मुकुलोद्गमस्तु विरुद्धः तेषां वर्षास्वेवोद्गमः प्रसिद्धः । इति कालविरोधः । स च खर- ९ मारुतवत् लोकविनाशसूचकः । तदुक्तं विष्णुधर्मोत्तरे यथा—अकाले फलपुष्पाणि देशविद्रवकारणम् । इति । तथा च प्रतिपक्षस्य अवश्यंभाविविनाशसूचनेन प्रस्तुतस्योत्कर्षातिशयद्योतनादयं कालविरोधो गुण एव । एतादृशव्यङ्ग्य- १२ प्रतिपादनेन कवेः कौशल्यं स्फुटं भवति ॥ १८१ ॥

---

१ तस्य प्रभावेण तदु. क. २ आर्द्राङ्कुर°. क. ३ धुन्वन्. अ. ४ °द्रुमम्. अ.

**दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम्[1] ।**
**कामिनां लयवैषम्यं[2] गेयं रागमवर्धयत् ॥ १८२ ॥**
**ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।**
**अबलाविरहक्लेशविह्वलो गणयत्ययम्[3] ॥ १८३ ॥**
**प्रमेयोप्यप्रमेयोसि सफलोप्यसि[4] निष्फलः ।**
**एकस्त्वमप्यनेकोसि नमस्ते विश्वमूर्तये ॥ १८४ ॥**

कलाविरोधस्य गुणत्वमुदाहरति—**दोलेति** । दोलायाः प्रेङ्खायाः अभिप्रेरणं इतस्ततः संचरणं तेन त्रस्तो यो वधूजनः तस्य मुखादुद्गतं तेनोद्गीतम् । यत् ३गेयं दोलागीतम् । तत् लयस्य गीतादिसाम्यस्य । वैषम्यं भिन्नकालत्वेन विषमता यत्र एतादृशमपि । कामिनां तत्र संगतानां विलासिनाम् । रागं अनुरागम् । अवर्धयत् । लयशुद्धमेव गानं रसिकानां रागवर्धकं भवतीति संगीतशास्त्रस्थितिः । प्रकृते तु ६तद्विरुद्धमिति कलाविरोधः । स च विलासिनीषु कामिनां सविशेषरागानुसूचकत्वाद्गुण एव ॥ १८२ ॥

लोकविरोधस्य गुणत्वं दर्शयति--**ऐन्दवादिति** । अयं अबलायाः विरहस्य क्लेशेन विह्वलः व्याकुलः । कामी मदनातुरः । ऐन्दवात् इन्दुसंबन्धिनः । अर्चिषः ३मयूखात् । हव्यवाहनं कृशानुम् । शिशिरं शीतलम् । गणयति मन्यते । अत्र ऐन्दवादर्चिषः हव्यवाहनः शिशिर इति लोकविरोधः । विरहिणां चन्द्रकिरणस्य उद्दीपकत्वेन संतापकत्वात् तादृशवर्णनं गुण एव इति लोकविरोधस्यात्र गुणत्वम् ।१८३।

न्यायविरोधस्य गुणत्वं दर्शयति--**प्रमेय इति** । प्रमेय श्रुतिप्रमाणवेद्यः । अप्रमेयः अनन्तगुणशक्तित्वादपरिच्छेद्यस्वरूपः । सफलः व्यष्टिरूपेण सांशः । ३निष्फलः समष्टिरूपेण निरंशः । एकः अद्वितीयः । अनेकः इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुतिभिः प्रपञ्चात्मकेन विश्वरूपः इत्यर्थः । एतादृशे विश्वमूर्तये सर्वव्यापकत्वेन विश्वाकाराय । ते तुभ्यम् । नमः । अत्र विरुद्धधर्माणां प्रतिपाद्यमानं ६सामानाधिकरण्यं न कुत्रापि दर्शने दृष्टम् इति न्यायविरोधः । स च परमेश्वरस्य लोकातीतमाहात्म्यमुद्भावयतीति प्रकृते गुणः ॥ १८४ ॥

---

१ डोलातिप्रेरणात्रस्त°. अ. २ °वैषम्याद्गेयम्. अ, क. ३ °त्यलम्. अ, क.
४ सकलोप्यसि निष्कलः. अ, क.

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालपुत्रिका[1]।
सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥ १८५ ॥
शब्दार्थालंक्रियाश्चित्रमार्गाः[2] सुकरदुष्कराः।
गुणा दोषाश्च काव्यानामिह[3] संक्षिप्य दर्शिताः ॥ १८६ ॥
व्युत्पन्नबुद्धिरमुना विधिदर्शितेन ।
मार्गेण दोषगुणयोर्वशवर्तिनीभिः ॥

आगमविरोधस्य गुणत्वं दर्शयति—**पञ्चानामिति**। पञ्चानां पाण्डुपुत्राणां पाञ्चालपुत्रिका द्रौपदी। पत्नी अभूत्। पुनश्च सतीनां साध्वीनाम्। अग्रणीः श्रेष्ठा। आसीत्। दैवः देवतासंबन्धी। विधिः व्यवहारः। ईदृशः स्वतन्त्रः नागमपरतन्त्र इति भावः। अत्र युधिष्ठिरादीनां धर्मांशतया द्रौपद्याश्च पृथिव्यधिष्ठातृरूपतया देवत्वान्नागमापरतन्त्रता इति भावः। अत्र—यथैकस्मै यूपाय बह्वयो रशना नैकस्यै रशनायै बहवो यूपास्तथैकस्मै पत्ये बह्वयो जाया नैकस्यै जायायै बहवः सहपतयः—इति श्रुत्या एकस्या बहुपतित्वनिषेधादागमविरोधः। स च द्रौपद्या देवतात्वेन आगमानपेक्षतां व्यञ्जयन् तस्या माहात्म्यमुद्भावयति इति गुणः ॥ १८५ ॥

एतावत्पर्यन्तं निरूपितान् पदार्थान् संकीर्त्य ग्रन्थमिममुपसंहरति—**शब्दार्थेति**। काव्यानां शब्दार्थालंक्रियाः शब्दालंकाराः दीपकावृत्तिक्रमश्लेषाः चत्वारः अर्थालंकाराश्च स्वभाव्यानादयः। तथा सुकराः दुष्कराः चित्रमार्गाः। तत्र केचित् सुकराः पादादियमकादयः। केचित् दुष्कराश्च महायमकस्वरस्थानवर्णनियमादयः। तथा गुणाः श्लेषप्रसादादयः। दोषाः अपार्थव्यर्थादयः। चकारेण काव्यलक्षणं तद्भेदौ च वैदर्भगौडरूपौ। एते संक्षिप्य दर्शिताः विस्तारभिया संक्षेपेणैवोक्ताः। अत्र यावन्तः पदार्था निरूपिताः तेषां परिगणनं कृतं न तु तत्र पूर्वक्रमानुरोधेनेति ज्ञेयम् ॥ १८६ ॥

अन्ते फलसंकीर्तनपूर्वं ग्रन्थमुपसंहरति—**व्युत्पन्नेति**। अमुना पूर्वोक्तेनानेन। विधिदर्शितेन विधिः भरतादिमुनीनामादेशः तदनुरोधेन दर्शितेन निरू-

---

१ °कन्यका. अ. कपा. २ शब्दार्थानां क्रियामार्गाः सुकराश्चैव दुष्कराः, अ.
३ काव्यानामिति. अ, क.

**वाग्भिः कृताभिसरणो मदिरेक्षणाभि-**
**धन्यो युवेव रमते लभते च कीर्तिम् ॥ १८७ ॥**

**॥ इत्याचार्यदण्डिनः कृतौ काव्यादर्शे शब्दालंकार-दोष-**
**विभागो नाम तृतीयः परिच्छेदः ॥**

पितेन । एतेन स्वनिरूपितेन । दोषगुणयोः हेयोपादेयधर्मयोः । मार्गेण व्यवस्थिति-प्रकारेण विवेचनपद्धत्या वा । व्युत्पन्नबुद्धिः साहित्यशास्त्रे संस्कृतबुद्धिः । काव्यतत्त्व-विदिति भावः । अत एव वशवर्तिनीभिः तदधीनाभिः वाग्भिः । कृताभिसरणः स्वयंकृताभिगमनः । अत एव धन्यः मदिरेक्षणाभिः कृताभिसरणः युवा यथा तथा रमते तद्विलासे रमते । कीर्तिं च लभते जगति विश्रुतकीर्तिश्च भवति ॥ १८७ ॥

विचिन्त्य साहित्यविदां निबन्धान्
विलोक्य तत्तत्सुकविप्रबन्धान् ।
आचार्यदण्डिग्रथितस्य काव्या-
दर्शस्य वृत्तिर्विहिता प्रभाख्या ॥ १ ॥

गृह्णन्ति मोदाद् गुणलेशबिन्दून्
नयन्ति शोषं परदोषसिन्धून् ।
पश्यन्तु ते मत्कृतिमादरेण
धन्या जनिस्तेन न चापरेण ॥ २ ॥

विद्वत्त्वदर्पान्न कृतिर्ममैषा
तथोपहासाय न वा परेषाम् ।
साहित्यशास्त्रेषु दृढानुरागात्
चापल्यमेतद्विदुषां पुरस्तात् ॥ ३ ॥

---

१ कृतानु. क.  २ इत्यार्य°. अ.  ३ गुणदोषविभा°. अ.  ४ चतुर्थः. अ, क.
५ पुष्पिकायाः परतः अ पुस्तके अधिकम्—

॥ दण्ड्यलंकारः समाप्तः । श्रीपार्वत्यै शिवाय नमः ॥

स्वर्गे सुधास्वादनलोलुपास्ते
सुराः प्रनृत्यन्तु सुराङ्गनाभिः ।
१५ वयं तु काव्यामृतपानतृप्ता
विदग्धगोष्ठ्यां विहराम मोदात् ॥ ४ ॥

शाब्दाम्भोनिधिमन्थने विमलधीर्येषां परो मन्दरो
१८ ख्याता ये च विराजनाम्नि नगरे श्रीबालकृष्णाभिधाः ।
गौरीवद्गृहमङ्गला समभवल्लक्ष्मीश्च यद्देहिनी
ताभ्यां लब्धजनिर्व्यधाच्छिशुहितां वृत्तिं च रङ्गाभिधः ॥ ५ ॥
२१ श्रीमुकुन्दपदाम्भोजे द्वयमर्पितमस्तु मे ।
काव्यादर्शस्य टीकेयं प्रेमार्द्रं हृदयं तथा ॥ ६ ॥

इति श्रीवैराजक्षेत्रवासिभी रङ्गीकुलावतंसैर्बालकृष्णाचार्यतनुजै रङ्गाचार्यसूरिभिः विरचितायां काव्यादर्शव्याख्यायां प्रभाख्यायां तृतीयः परिच्छेदः ॥

**॥ समाप्तश्चायं ग्रन्थः ॥**

## अथ काव्यादर्शस्थश्लोकार्ध-
# प्रतीकसूचिः

### ख



### ग

## श

# अथ काव्यादर्शटीकास्थश्लोकप्रतीकसूचिः ।



# शुद्धिपत्रम्

| पत्रम् | श्लोकः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|
| २ | १ | २२ | तत्र हंसवधू |
| ४ | ४ | ७ | व्याप्तमिव |
| ५ | ५ | १७ | प्रकाशकृताः- |
| ५ | ५ | १९ | युजे ॥ १·२ |
| ८ | १० | १३ | पदार्थाः तैर्व्यवच्छिन्ना |
| १५ | १३ | ० | सर्गबन्धांश |
| २३ | २० | २ | व्याप्तिवारणाय यथा |
| २३ | २० | ३ | परिहरणाय च |
| २६ | २३ | १८ | संस्कृतासंस्कृता |
| २७ | २६ | ० | चिह्नमाख्यायिकाया |
| ३१ | ३१ | ९ | आख्यायिकादावपि |
| ४५ | ४४ | ४५ | विशेषो |
| ५४ | ५० | २९ | वररामामुखानिलैः |
| ५४ | ५० | ३३ | वक्त्रायोचित्य |
| ६७ | ६२ | १४ | स्वपिमि |
| ७७ | ६७ | ९ | इत्यर्थः |
| ८९ | ८० | ७४ | इत्यादिकं रौद्रे |
| ९१ | ८५ | ३ | बालान्तानां कान्तं |
| ९४ | ८५ | ६५ | तटभूमिः |
| ९५ | ८७ | ८ | भुजद्वयस्य |
| ११७ | ९ | ७ | धर्मः |
| ११८ | १३ | ३ | श्वेत्स्वभावोक्तिः |
| १२३ | १९ | १५ | द्योतकत्वं स्वीक्रियते |
| १२७ | २२ | ७ | व्यञ्जनागम्य |
| १२७ | २४ | ३ | मुखस्यैव |
| १३४ | ३४ | ११ | प्रतिषेधोपमैव |
| १३५ | ३६ | २ | इत्येवं निषेध |
| १३७ | ४० | ३ | तानि इव |
| १५२ | ५७ | १३ | तस्यामृतं |
| १६२ | ७१ | ३ | यासां ताः |
| १७३ | ९६ | ३६ | स्कन्धोदार |
| १७३ | ९६ | ३७ | तृष्णालता |
| १७५ | ९७ | १८ | उपकारः |

## शुद्धिपत्रम्

| पत्रम् | श्लोकः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|
| १७६ | १०२ | ० | मध्यान्तयोरपि |
| १७६ | १०२ | ४ | मध्यान्तवाक्ययोरपि |
| १७७ | १०४ | ४ | इत्यर्थः |
| १७७ | १०५ | १ | अन्त्यवाक्य |
| १७७ | १०५ | ५ | अन्त्यगतं |
| १८० | ११२ | ९ | ( ६४१ पत्रे ) |
| १८१ | ११५ | ३ | उक्तेष्ववशिष्टानां |
| १८३ | ११९ | ० | विहरत्व |
| १९० | १३७ | ३ | सौराज्यात् |
| १९२ | १४६ | ३ | अतिरक्तया |
| १९४ | १५२ | ७ | दुष्करमिति |
| १९९ | १६९ | ८ | अवलम्बनाय |
| २०५ | १८० | १८ | यौवनास्थैर्यं |
| २१५ | २०५ | ३० | विशेष्यस्यापि |
| २१९ | २०९ | ६ | वदान्यस्य प्रतीतिः |
| २२१ | २१४ | ४ | विशेषस्यैव |
| २२४ | २१९ | १२ | ऐन्द्रनीलीम् |
| २२४ | २२० | ७ | सर्वैवाति |
| २२९ | २२६ | २३ | मूलिकैव |
| २४२ | २४३ | ७ | परीक्षणादिभिः— |
| २४८ | २५७ | ७ | कारणात् |
| २७८ | ३०४ | २ | असत्यतया |
| २७९ | ३०७ | ३ | किरणैराल्हादयति |
| २८० | ३०७ | ११ | निष्यन्दिन्यः |
| २८३ | ३१२ | २ | दोषवान्कश्चित्पुरुषश्च |
| २८९ | ३२३ | ५ | पदार्थमात्रगतवैकल्यस्यैव |
| ३१३ | २६८ | ५ | सतताभ्यास एव |
| ३२७ | ३५ | ७ | समर्था का |
| ३२८ | ४० | १ | चतुष्पादगतं |
| ३५५ | ८३ | ४ | निवर्तनेनोपादानं |
| ३६७ | १११ | ७ | स्फीततां |
| ३७१ | ११९ | १ | समूढा |
| ३८७ | १५१ | १५ | शोभा |